॥ श्रीः ॥

# सटीका पंचदशी

श्रीमद्विद्यारण्यमुनिकृता तच्छिष्यविद्वद्रामकृष्णा-
ख्यकृतव्याख्यासहिता

## अयं ग्रंथः

भारदेइत्युपाह्वकाशिस्थगोविंदशास्त्रिप्रभृत्यनेकविद्वज्जन-
साहाय्येन संशोधितः

पुण्याख्यपत्तने गोंधळेकरोपाख्यश्रीधरात्मजेनरावजीनाम्ना
जगद्धितेच्छुनामकस्वकीयमुद्रायंत्रे मुद्रितः ।

अभ्रभ्रवस्विन्दुमिते वत्सरे पुण्यपत्तने ॥
वैशाखे पूर्णिमायां तु मुद्रितश्चायसाक्षरैः ॥ १ ॥

तारीख २९ माहे एप्रिल सन १८८९.

॥ श्रीः ॥

# प्रस्तावना

---

## सटीका पंचदशी

अयमत्युत्तमो ग्रंथो विद्यारण्यस्वामिकृतः। एतदुपरि तच्छिष्यरामकृष्णाख्यविदुषां व्याख्या चास्ति। अयं ग्रंथः केवलं वेदांतविषयनिर्णये पटुतरो वर्तते। अस्मिन्नध्यात्मशास्त्रीयसर्वसिद्धांताः प्रकाशिताः। अत एव वेदांतं जिज्ञासवः प्रथममिममेव ग्रंथमधीयते। अत एतद्ग्रंथस्योपयुक्तताविषयेऽधिकलेखनेनालम्। एतावत्कालपर्यंतं बहुवारं शिलायंत्रे यद्यप्ययं ग्रंथोंकितस्तथापि शुद्धशुद्धिविषये विशेषतया विचारो नाजनीति प्रतिभाति। किंचांकितपुस्तकस्य पत्राण्यतिदीर्घाणि प्रत्येकं भिन्नानि च संति अतस्तदुपयोगकर्तॄणां तद्रक्षणे बह्वायासो भवति। प्रत्युत मौल्याधिक्याद् ग्राहकाणां महत्यनुपपत्तिः पतति अतो लोकानामेतत्सर्वानुपपत्तिदूरीकरणाय सर्वैः संग्रहकरणार्थं वृद्धानां वाचनायच सौलभ्येनैतल्लाभो भाव्य इति हेतोरस्माभिर्बहुपरिश्रमेण संशोध्य शब्दांश्च पृथक् पृथक्कृत्यायं ग्रंथः सुमहाकीलकमुद्राभिरंकितः। अपि च ग्रंथसंबंधिपत्राणामव्यवस्थानिवारणार्थं दृढतरपुष्टिपत्रवस्त्रादिभिः सम्यगबंधि। अस्मिन्दृष्टिदोषेणोर्वरितान्दोषान्क्षांत्वा सुविचार्य ते दोषा विद्वत्प्रवरैर्लेखनद्वाराऽस्मान् प्रेषणीयाः ते नाग्रिमावृत्तौतत्सूचितदोषरहितो ग्रंथः समीचीनः स्यात्। अपिचायं ग्रंथो ग्राहकाणां सौलभ्येन लब्धव्य इति हेतोरस्माभिरस्य मौल्यं टपालाख्यव्ययेन सहकृतं रूपकत्रयमितं स्थापितमास्ति।

रावजी श्रीधर गोंधळेकर.

॥ श्रीः ॥

# पंचदश्यां।

प्रकरणं १.

श्रीगणेशाय नमः ॥ नमः श्रीशंकरानंदगुरुपादांबुजन्मने ॥ सविलासमहामोहग्राहग्रासैककर्मणे ॥ १ ॥ तत्पादांबुरु-

---

श्रीगणेशाय नमः ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ प्रत्यक्तत्त्वविवेकस्य क्रियते पददीपिका ॥ १ ॥ प्रारीप्सितस्य ग्रंथस्याऽविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिप्राप्तमिष्टदेवतागुरुनमस्कारलक्षणं मंगलाचरणं स्वेनानुष्ठितं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति अर्थाद्विषयप्रयोजने च सूचयति नमइति शं सुखं करोतीति शंकरः सकलजगदानंदकरः परमात्मा एष ह्येवाऽऽनंदयतीति श्रुतेः आनंदः निरतिशयप्रेमास्पदत्वेन परमानंदरूपः प्रत्यगात्मा शंकरश्चासावानंदश्चेति शंकरानंदः प्रत्यगाभिन्नः परमात्मा स एव गुरुः परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन योजयति परे तत्वे सदीक्षयाचार्यमूर्तिस्थ इत्यागमात् श्रीमांश्चासौ शंकरानंदगुरुश्चेति गंधद्विप इत्यादिवत्समासः अनेन श्रीगुरोरणिमाद्यैश्वर्यसंपन्नत्वं सूचितं यद्वा श्रिया भूत्या शंकरोतीति शंकरः रातिर्दातुः परायणमिति श्रुतेः अनेन श्रीगुरोर्भक्तेष्टसंपादने सामर्थ्यं सूचितं भवति तस्य गुरोः पादावेवांबुजन्म कमलं तस्मै नमः प्रह्वीभावोऽस्तु किंविधाय सविलासमहामोहग्राहग्रासैककर्मणे विलासः कार्यवर्गस्तेन सह वर्तते इति सविलासः एवंविधो यो महामोहो मूलाज्ञानं स एव ग्राहः मकरादिवत्स्ववशंप्राप्तस्याऽतीव दुःखहेतुत्वात्तस्य ग्रासो ग्रसनं स एवैकं मुख्यं कर्म व्यापारो यस्य तत्तथा तस्मै इत्यर्थः अत्र च शंकरानंदपदद्वयसामानाधिकरण्येन जीवब्रह्मणोरेकत्वलक्षणो विषयः जीवस्य भूमब्रह्मरूपतयाऽपरिच्छिन्नसुखाविर्भावलक्षणं प्रयोजनं च सूचितं सविलासेत्यादिना निःशेषानर्थनिवृत्तिलक्षणं प्रयोजनं मुखत एवाऽभिहितम् ॥ १ ॥ इदानीमवांतरप्रयोजनकथनपुरःसरं ग्रंथारंभं प्रतिजानीते

हृद्वंद्वसेवानिर्मलचेतसाम् ॥ सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते ॥ २ ॥ शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक् ॥ ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते ॥ ३॥ तथा स्वप्नेऽत्र वेद्यं तु न स्थिरं जागरे स्थिरं ॥ त-

तत्पादेति तस्य गुरोःपादावेवांबुरुहे कमले तयोर्द्वंद्वं तस्य सेवया परिचर्यया स्तुतिनमस्कारादिलक्षणया निर्मलं रागादिरहितं चेतोंऽतःकरणं येषां ते तथोक्तास्तेषां सुखबोधायाऽनायासेन तत्वज्ञानोत्पादनायाऽयं वक्ष्यमाणप्रकारस्तत्वस्यानारोपितस्वरूपस्य अखण्डं सच्चिदानंदं महावाक्येन लक्ष्यते इति वक्ष्यमाणस्य विवेक आरोपितात्पंचकोशलक्षणाज्जगतो विवेचनं विधीयते क्रियते इत्यर्थः ॥ २ ॥ जीवब्रह्मणोरेकत्वलक्षणविषयसंभावनाय जीवस्य सत्यज्ञानादिरूपतां दिदर्शयिषुरादौ ज्ञानस्याऽभेदप्रतिपादनेन नित्यत्वं साधयति शब्दस्पर्शादय इत्यादिना तत्र तावद्विस्पष्टव्यवहारवति जागरे ज्ञानस्याऽभेदं साधयति शब्देति जागरे इंद्रियैरर्थोपलब्धिः जागरितमित्युक्तलक्षणेऽवस्थाविशेषे वेद्याःसंविद्विषयभूताः शब्दस्पर्शादयः आकाशादिगुणत्वेन प्रसिद्धाः तदाधारत्वेन प्रसिद्धाकाशादयश्च वैचित्र्यात्परस्परं गवाश्वादिवद्वैलक्षण्योपेतत्वात्पृथक् परस्परं भिद्यंते ततस्तेभ्यो विभक्ता बुद्ध्या विवेचिता तत्संवित्तेषां शब्दादीनां संविज्ज्ञानं ऐकरूप्यात्संवित्संविदित्येकाकारेणाऽवभासमानत्वाद्गगनमिव न भिद्यते अत्राऽयं प्रयोगः विवादाध्यासिता संवित्स्वाभाविकभेदशून्या उपाधिपरामर्शमंतरेणाऽविभाव्यमानभेदत्वाद्गगनवत् शब्दसंवित्स्पर्शसंविदो न भिद्यते संवित्त्वात्स्पर्शसंविद्वदिति एकस्या एव संविदो गगनस्येवौपाधिकभेदेनाऽपि भिन्नव्यवहारोपपत्तौ वास्तवभेदकल्पनायां गौरवं बाधकमुन्नेयं ॥ ३ ॥ उक्तन्यायं स्वप्नेऽप्यतिदिशति तथेति यथा जागरे वैचित्र्याद्विषयाणां भेदः ऐकरूप्यात्संविदो भेदश्च तथा तेनैव प्रकारेण स्वप्ने करणेषूपसंह्रतेषु जागरितसंस्कारजः प्रत्ययः स विषयः स्वप्न इत्युक्तलक्षणायां स्वप्नावस्थायामपि विषया एव भिन्ना न संविदिति ननु यदि स्वप्नजागरयोरेकाकारता बिषयतत्संविदोर्भेदाभेदाभ्यां तर्हि स्वप्नो जागर इति भेदव्यवहारः कि-

द्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते ॥ ४ ॥ सुप्तोत्थितस्य सौपुप्ततमोबोधो भवेत्स्मृतिः ॥ सा चाऽवबुद्धविषयाऽवबुद्धं तत्तदा तमः ॥ ५ ॥ स बोधो विषयाद्भिन्नो न बोधात्स्वप्नबोधवत् ॥ एवं स्थानत्रयेऽप्येका सं-

---

न्निमित्तक इत्याशंक्याऽऽह अत्र वेद्यंत्विति अत्र स्वप्ने वेद्यं परिदृश्यमानं वस्तुजातं न स्थिरं न स्थायि प्रतीतिमात्रशरीरत्वात् जागरे तु परिदृश्यमानं वस्तुजातं स्थिरं स्थायि कालांतरेऽपि द्रष्टुं योग्यत्वादतः स्थिरास्थिरविषयत्वलक्षणवैलक्षण्यात्तद्भेदस्तयोः स्वप्नजागरयोर्भेद इत्यर्थः ननु स्वप्नजागरयोर्भेदश्चेत्तत्संविदोरपि भेदः स्यादित्याशंक्याऽऽह तयोरिति एकरूपेति हेतुगर्भं विशेषणम् ॥ ४ ॥ एवमवस्थाद्वये ज्ञानस्यैकत्वं प्रसाध्य सुषुप्तिकालीनस्याऽपि तस्य तेनैक्यप्रसाधनाय तत्र तावत् ज्ञानं साधयति सुप्तेति पूर्वं सुप्तः पश्चादुत्थितः सुप्तोत्थितः सुप्तं सुषुप्तिः तस्मादुत्थित इति वा तस्य सौषुप्ततमोबोधः सुषुप्तिकालीनस्य तमसोऽज्ञानस्य यो बोधो ज्ञानमस्ति न किंचिदवेदिषमिति सा स्मृतिरेव भवेन्नानुभवस्तत्कारणस्येंद्रियसन्निकर्षव्याप्तिलिंगादेरभावादिति भावः ततः किं तत्राऽऽह सा चेति सा च स्मृतिरवबुद्धविषयाऽवबुद्धोऽनुभूतो विषयो यस्याः सा तथोक्ता या स्मृतिः साऽनुभवपूर्विकेति व्याप्तिर्लोके दृष्टेति भावः ततोऽपि किं तत्राऽऽह अवबुद्धमिति तत्तस्मात्कारणात्तत्सौषुप्तं तमस्तदा सुषुप्तौ अवबुद्धं अनुभूतमित्यवगंतव्यं अत्राऽयं प्रयोगः विमतं न किंचिदवेदिषमिति ज्ञानं अनुभवपूर्वकं भवितुमर्हति स्मृतित्वात्सा मे मातेति स्मृतिवदिति ॥ ५ ॥ तस्याऽनुभवस्य स्वविषयादज्ञानाद्भेदं बोधांतरादभेदं चाऽऽह स बोध इति स बोधः सौषुप्ताऽज्ञानानुभवो विषयादज्ञानाद्भिन्नः पृथग्भवितुमर्हति बोधत्वाद्घटबोधवत् बोधांतरान्न भिद्यते बोधत्वात्स्वप्नबोधवत् फलितं कथयन्नुक्तन्यायमन्यत्राऽप्यतिदिशति एवमित्यादिना स्थानत्रयेऽपि एकदिनवर्तिनि जाग्रदाद्यवस्थात्रयेऽपि संविदेकैव सर्वं वाक्यं सावधारणमिति-

वित्तद्वद्दिनांतरे ॥ ६ ॥ मासाब्दयुगकल्पेषु गताऽगम्येष्व-
नेकधा ॥ नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा ॥ ७ ॥
इयमात्मा परानंदः परप्रेमास्पदं यतः ॥ मा न भूवं हि

---

न्यायात् तद्वद्दिनांतर इति ॥ ६ ॥ यथैकस्मिन्दिवसेऽवस्थात्रयेऽपि ज्ञानस्याऽभेद एवमन्यस्मिन्नपि दिवसेऽनेकधानेकप्रकारेण गतागम्येष्वतीतागामिषु मासेषु चैत्रादिषु अब्देषु प्रभवादिषु युगेषु कृतादिषु कल्पेषु ब्राह्मादिषु च ज्ञानस्याऽभेद एवेत्यर्थः संविद एकत्वसमर्थने फलमाह नोदेतीति यतः संविदेकाऽतो नोदेति नोत्पद्यते नाऽस्तमेति न विनश्यति च असाक्षिकयोरुत्पत्तिविनाशयोरासिद्धेः स्वोत्पत्तिविनाशयोस्तयैव संविदा गृहीतुमशक्यत्वात्संविदंतराऽभावाच्चेति भावः ननु संविदंतराऽभावे ग्राहकाऽभावादस्या अप्यभाने जगदांध्यं प्रसज्जेतेत्यत आह एषेति अत्राऽयं प्रयोगः संवित्स्वयंप्रकाशा अवेद्यत्वे सत्यपरोक्षत्वाद्व्यतिरेके घटवन्नचाऽयं विशेषणाऽसिद्धो हेतुः संविदः स्वसंवेद्यत्वे कर्मकर्तृत्वविरोधात्परवेद्यत्वेऽनवस्थानादतः स्वप्रकाशत्वेन भासमानायाः संविदः सर्वावभासकत्वसंभवान्न जगदांध्यप्रसंग इति भावः ॥ ७ ॥ भवत्वेवं संविदो नित्यत्वं स्वप्रकाशत्वं च ततः किमित्यत आह इयमिति अत्राऽयं प्रयोगः इयं संविदात्मा भवितुमर्हति नित्यत्वे सति स्वप्रकाशत्वाद्यन्नैवं न तदेवं यथा घट इति आत्मनो नित्यसंविद्रूपत्वप्रसाधनेन सत्यत्वमपि साधितं भवति नित्यत्वातिरिक्तसत्यत्वाऽभावात् नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यमिति वाचस्पतिमिश्रैरुक्तत्वादिति भावः आत्मन आनंदरूपत्वं साधयति परानंदइति आत्मेत्यनुषज्यते परश्चासावानंदश्चेति परानंदः निरतिशयसुखस्वरूप इत्यर्थः तत्र हेतुमाह परेति यतो यस्मात्कारणात्परस्य निरुपाधिकत्वेन निरतिशयस्य प्रेम्णः स्नेहस्य आस्पदं विषयः तस्मादत्रेदमनुमानं आत्मा परमानंदरूपः परप्रेमास्पदत्वात् यः परमानंदरूपो न भवति नाऽसौ परप्रेमास्पदमपि यथा घटः तथा चाऽयं परप्रेमास्पदं न भवतीति न तस्मात्परमानंदरूपो न भवतीति न नन्वात्मनि धिङ्मामिति द्वेषस्योपलभ्यमानत्वात्प्रेमास्पदत्वमेवाऽसिद्धं कुतः परप्रेमास्पदत्वमित्याऽऽशंक्य तस्य दुःख-

भूयासमिति प्रेमाऽऽत्मनीक्ष्यते ॥ ८ ॥ तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि ॥ अतस्तत्परमं तेन परमानंदताऽऽत्मनः ॥ ९ ॥ इत्थं सच्चित्परानंद आत्मा युक्त्या तथाविधम् ॥ परं ब्रह्म तयोश्चैक्यं श्रुत्यंतेषूपदिश्यते ॥ १० ॥ अभाने न परं प्रेम भाने न विषये स्पृहा ॥ अतो भानेप्यभा-

---

संबंधनिमित्तकत्वेनाऽन्यथा सिद्धत्वात्प्रेम्णश्चाऽऽत्मन्यनुभवसिद्धत्वान्मैवमिति परिहरति मा न भूवमिति हि यस्मात्कारणादात्मनि विषये मा न भूवमहं मा भूवमिति न ममाऽसत्वं कदापि मा भूत्किंतु भूयासमेव सदा सत्वमेव मम भूयादित्येवंविधं प्रेमेक्ष्यते सर्वैरनुभूयते अतो नाऽसिद्धिरित्यर्थः ॥ ८ ॥ ननु मा भूत्स्वरूपाऽसिद्धिः प्रेम्णः परत्वे मानाऽभावाद्विशेषणासिद्धिर्हेतोरित्याशंक्याऽह तत्प्रेमेति अन्यत्र स्वातिरिक्ते पुत्रादौ यत्प्रेम तदात्मार्थं तेषामात्मशेषत्वनिमित्तकमेव न स्वाभाविकमेवमात्मनि विद्यमानं प्रेमान्यार्थं नाऽऽत्मनोऽन्यशेषत्वनिमित्तकं न भवति किंत्वात्मत्व निमित्तकमेवातो निरुपाधिकत्वात्तत्परमं निरातिशयं फलितमाह तेनेति तेन निरतिशयप्रेमास्पदत्वेनात्मनः परमानंदता निरतिशयसुखरूपत्वं सिद्धम् ॥ ९ ॥ एतैः सप्तभिःश्लोकैः प्रतिपादितमर्थं संक्षिप्य दर्शयति इत्थमिति शब्दस्पर्शादय इत्यादिना ज्ञानस्य नित्यत्वं प्रसाध्य तस्यैवेयमात्मेत्यात्मत्वप्रसाधनेनात्मनः सच्चिद्रूपत्वं साधितं परानंद इत्यादिना च परमानंदरूपत्वं समर्थितमतः आत्मा महावाक्ये त्वंपदार्थः सच्चिदानंदरूपः सिद्धः ननूक्तलक्षणस्यात्मनो युक्त्यैवावगतावुपनिषदां निर्विषयत्वेनाप्रामाण्यप्रसंग इत्याशंक्याह तथाविधमिति तथा तादृग्विधा प्रकारो यस्य तत्तथाविधं सच्चिदानंदरूपं परं ब्रह्म तत्पदार्थस्तयोस्तत्त्वंपदार्थयोरैक्यमखंडैकरसत्वं च श्रुत्यंतेषु वेदांतेषु उपदिश्यते प्रदिपाद्यतेऽतो न वेदांतानां निर्विषयत्वमित्यर्थः ॥ १० ॥ आत्मनः परमानंदरूपत्वमाक्षिपति अभान इति परमानंदरूपत्वं न भासते भासते वा अभानेऽप्रतीतौ न परं प्रेमाऽऽत्मनि निरतिशयस्नेहो न स्याद्विषयसौंदर्यज्ञानजन्यत्वात्स्नेहस्य भाने प्रतीतौ तु

ताऽसौ परमानंदताऽऽत्मनः ॥ ११ ॥ अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ॥ भानेप्यभानं भानस्य प्रतिबंधेन युज्यते ॥ १२ ॥ प्रतिबंधोऽस्तिभातीतिव्यवहारार्हवस्तुनि ॥ तन्निरस्य विरुद्धस्य तस्योत्पादनमुच्यते ॥ १३ ॥ तस्य हेतुः समानाभिहारः पुत्रध्वनिश्रुतौ ॥ इहाऽनादिरविद्यैव

---

विषये सुखसाधने स्रगादौ तज्जन्ये सुखे वा स्पृहा इच्छा न स्यात्फलप्राप्तौ सत्यां साधनेच्छानुपपत्तेः नित्यनिरतिशयानंदलाभे सति क्षणिके साधनपारतंत्र्यादिदोषदूषिते वैषयिके सुखे स्पृहाऽयोगाच्च तस्मान्नानंदरूपताऽऽत्मन उपपन्नेति प्रकारांतरस्याऽत्रसंभवात् मेवमिति परिहरति अत इति यतो भानाभानपक्षयोरुभयोरपि दोषोऽस्त्यतःकारणादात्मनोऽसौ परमानंदता भानेऽपि प्रतीतौ सत्यामपि अभाता न प्रतीता भवति ॥ ११ ॥ नन्वेकस्य युगपद्भानाभाने न युज्येते इत्याशंक्य किमिदमयुक्तत्वं अदृष्टचरत्वमुपपत्तिरहितत्वं वा नाद्य इत्याह अध्येतृवर्गेति अध्येतॄणां वेदपाठकानां वर्गः समूहस्तस्य मध्ये तिष्ठतीत्यध्येतृवर्गमध्यस्थः स चाऽसौ पुत्रश्चेति तथा तस्याध्ययनं तत्कर्तृकं पठनं तस्य शब्दो ध्वनिर्यथा बहिःस्थस्य पितुर्भासमानोऽपि सामान्यतो न भासते विशेषतोऽयं मत्पुत्रध्वनिरिति तथाऽनंदस्यापि भानेप्यभानं भवतीत्यर्थः द्वितीयं प्रत्याह भानस्येति भानेप्यभानमित्येतदत्राप्यनुषंजनीयं भानस्य स्फुरणस्य प्रतिबंधेन वक्ष्यमाणलक्षणेन भानेप्यभानं सामान्यतः प्रतीतावपि विशेषाकारेणाऽप्रतीतिर्युज्यते उपपद्यते इत्यर्थः ॥ १२ ॥ कोऽसौ प्रतिबंध इत्यत आह प्रतिबंध इति आस्तिभातीतिव्यवहारार्हवस्तुनि आस्ति विद्यते भाति प्रकाशते इत्येवंप्रकारं व्यवहारमर्हतीत्यस्तिभातीतिव्यवहारार्हं तच्च तद्वस्तु चेति तथा तस्मिन् तं पूर्वोक्तं व्यवहारं निरस्य निराकृत्य विरुद्धस्य नाऽस्ति न भातीत्येवंरूपस्य व्यवहारस्योत्पादनं जननं प्रतिबंध इत्युच्यते ॥ १३ ॥ उक्तलक्षणस्य प्रतिबंधस्य कारणं दृष्टांतदार्ष्टांतिकयोः क्रमेण दर्शयति तस्येति पुत्रध्वनिश्रुतौ पुत्रध्वनिश्रवणलक्षणे दृष्टांते तस्य प्रतिबंधस्य हे-

व्यामोहैकनिबंधनम् ॥ १४ ॥ चिदानंदमयब्रह्मप्रतिबिंबस-
मन्विता ॥ तमोरजःसत्वगुणा प्रकृतिर्द्विविधा च सा ॥ १५ ॥
सत्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते ॥ मायाबिंबो
वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥ १६ ॥ अविद्यावशग-
स्त्वन्यस्तद्वैचित्र्यादनेकधा ॥ सा कारणशरीरं स्यात् प्राज्ञ-

---

तुः कारणं समानाभिहारः बहुभिः सह पठनं इह दार्ष्टांतिके व्यामोहै-
कनिबंधनं व्यामोहानां विपरीतज्ञानानामेकनिबंधनं मुख्यं कारणमनादि-
रुत्पत्तिरहिताऽविद्या वक्ष्यमाणलक्षणा प्रतिबंधस्य हेतुरित्यर्थः ॥ १४ ॥
इदानीं प्रतिबंधहेतुभूतात्मविद्यां प्रतिपादयितुं तन्मूलभूतां प्रकृतिं व्युत्पा-
दयति चिदानंदेति यच्चिदानंदरूपं ब्रह्म तस्य प्रतिबिंबेन प्रतिच्छायया
समन्विता युक्ता तमोरजःसत्वगुणा सत्वरजस्तमोगुणानां साम्याऽव-
स्था या सा प्रकृतिरित्युच्यते सा च द्विविधा द्विःप्रकारा भवति चकारा-
द्वक्ष्यमाणं प्रकारांतरं सूचयति ॥ १५ ॥ सहेतुकं द्वैविध्यमेव दर्शयति
सत्वेति सत्वस्य प्रकाशात्मकस्य गुणस्य शुद्धिः गुणांतरेणाऽकलुषीकृ-
तता अविशुद्धिः गुणांतरेण कलुषीकृतत्वं ताभ्यां सत्वशुद्ध्यविशुद्धिभ्यां ते
च द्विविधे मायाऽविद्ये मायेत्यविद्येति च मते संमते विशुद्धसत्वप्रधाना
माया मलिनसत्वप्रधाना अविद्येत्यर्थः यदर्थं मायाऽविद्ययोर्भेद उक्तस्त-
दिदानीं दर्शयति मायाबिंब इति मायाबिंबः मायायां प्रतिफलिताश्चिदा-
त्मा तां मायां वशीकृत्य स्वाधीनीकृत्य वर्तमानः सर्वज्ञः सर्वज्ञत्वादिगुण-
कः ईश्वरः स्यात् ॥ १६ ॥ अविद्येति अविद्यावशगोऽविद्यायां प्रतिबिं-
बत्वेन स्थितः तत्परतंत्रस्तु चिदात्माऽन्यो जीवः स्यात् स च तद्वै-
चित्र्यात्तस्या अविद्याया उपाधिभूताया वैचित्र्यादविशुद्धितारतम्याद-
नेकधाऽनेकप्रकारो देवतिर्यगादिभेदेन विविधो भवतीत्यर्थः यथा मुं-
जादिषीकैवमात्मा युक्त्या समुद्धृतः शरीरत्रितयाद्धीरैः परं ब्रह्मैव जा-
यते इत्युत्तरत्र शरीरत्रितयाद्विवेचितस्य जीवस्य परब्रह्मत्वं वक्ष्य-
ति तत्र तानि कानि त्रीणि शरीराणि तत्तदुपाधिको वा जीवः किं-

स्तत्राऽभिमानवान् ॥ १७ ॥ तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ॥ वियत्पवनतेजोंबुभुवो भूतानि जज्ञिरे ॥ १८ ॥ सत्वांशैः पंचभिस्तेषां क्रमाद्धींद्रियपंचकम् ॥ श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते ॥१९॥ तैरंतःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ॥ मनो विमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका

---

रूपो भवतीत्याकांक्षायां तत्सर्वं क्रमेण व्युत्पादयति सा कारणशरीरमित्यादिना साऽविद्या कारणशरीरं स्थूलसूक्ष्मशरीरादि कारणभूतं प्रकृत्यवस्थाविशेषत्वात्कारणमुपचाराच्छीर्यते तत्वज्ञानाद्विनश्यति चेति शरीरं स्यात्तत्र कारणशरीरे ऽभिमानवान् तादात्म्याध्यासेनाहमित्यभिमानवान् जीवः प्रज्ञा अविनाशिस्वरूपानुभवरूपा यस्य स प्रज्ञः प्रज्ञ एव प्राज्ञः एतन्नामकः स्यादित्यर्थः ॥ १७ ॥ क्रमप्राप्तं सूक्ष्मशरीरं तदुपाधिकं जीवं व्युत्पादयितुं तत्कारणाकाशादिसृष्टिमाह तमःप्रधानेति तद्भोगाय तेषां प्राज्ञानां भोगाय सुखदुःखसाक्षात्कारसिद्धये तमःप्रधानप्रकृतेस्तमोगुण प्रधानायाः प्रकृतेः पूर्वोक्ताया उपादानकारणभूतायाः सकाशादीश्वराज्ञया ईशनादिशक्तियुक्तस्य जगदधिष्ठातुराज्ञया ईक्षापूर्वकसर्जनेच्छारूपया निमित्तकारणभूतया वियदादि पृथिव्यंतानि पंचभूतानि जज्ञिरे प्रादुर्भूतान्युत्पन्नानीत्यर्थः॥ १८॥भूतसृष्टिमभिधाय भौतिकसृष्टिमभिदधानः आदौ ज्ञानेंद्रियसृष्टिमाह सत्वांशैरिति तेषां वियदादीनां पंचभिः सत्वांशैः सत्वगुणभागैरुपादानभूतैः श्रोत्रत्वगक्षिरसनघ्राणाख्यं धींद्रियपंचकं धींद्रियाणि ज्ञानेंद्रियाणि तेषां पंचकं क्रमादुपजायते एकैकभूतसत्वांशादेकैकमिंद्रियं जायते इत्यर्थः ॥ १९ ॥ सत्वांशानां प्रत्येकमसाधारणकार्याण्यभिधाय सर्वेषां साधारणं कार्यमाह तैरिति तैः सह सत्वांशैःसर्वैः संभूय वर्तमानैरंतःकरणं मनोबुध्युपादानभूतं द्रव्यमुपजायते इत्यनुषंगः तस्यावांतरभेदं सनिमित्तमाह वृत्तीति तदंतःकरणं वृत्तिभेदेन परिणामभेदेन द्विधा द्विप्रकारं भवति वृत्तिभेदमेव दर्शयति मन इति विमर्शरूपं विमर्शः संशयात्मिका वृत्तिः सा स्वरूपं यस्य तत्तथा तन्मनः स्यान्निश्चयात्मिका निश्चयोऽध्यव-

॥ २० ॥ रजोंऽशैः पंचभिस्तेषां क्रमात्कर्मेंद्रियाणि तु ॥ वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे ॥ २१ ॥ तैः सर्वैः सहितैः प्राणो वृत्तिभेदात्स पंचधा ॥ प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः ॥ २२ ॥ बुद्धिकर्मेंद्रियप्राणपंचकैर्मनसा धिया॥शरीरं सप्तदशभिः सूक्ष्मं तल्लिंगमुच्यते॥२३॥ प्राज्ञस्तत्राभिमानेन तैजसत्वं प्रपद्यते ॥ हिरण्यगर्भतामी-

---

सायः स आत्मा स्वरूपं यस्याः सा निश्चयात्मिका सा वृत्तिर्बुद्धिः स्यात् ॥ २० ॥ क्रमप्राप्तानां रजोंऽशानां प्रत्येकमसाधारणकार्याण्याह रजोंऽशैरिति तेषां वियदादीनामेव पंचभीरजोंऽशैः रजोभागैस्तूपादानभूतैः वाक्पाणिपादपायूपस्थाऽभिधानानि एतन्नामकानि कर्मेंद्रियाणि क्रियाजनकानि इंद्रियाणि जज्ञिरे ॥ २१ ॥ रजोंऽशानामेवं साधारणं कार्यमाह तैः सर्वैरिति सहितैः संभूय कारणतां गतैः प्राणो जायते इति शेषः तस्यावांतरभेदमाह वृत्तिभेदादिति स प्राणो वृत्तिभेदात्प्राणनादिव्यापारभेदात्पंचधा पंचप्रकारो भवति वृत्तिभेदानेव दर्शयति प्राण इति ते पुनः ते तु भेदाः प्राणादिशब्दवाच्या इत्यर्थः ॥ २२ ॥ यदर्थमाकाशादिप्राणांतानां सृष्टिरुक्ता तदिदानीं दर्शयति बुद्धीति बुद्धयो ज्ञानानि कर्माणि व्यापारास्तज्जनकानींद्रियाणि बुद्धींद्रियाणि कर्मेंद्रियाणि चेत्यर्थः बुद्धिकर्मेंद्रियाणि च प्राणाश्च बुद्धिकर्मेंद्रियप्राणाः तेषां पंचकानि तैःमनसा विमर्शात्मकेन धिया निश्चयरूपया बुध्या च सह सप्तदशभिः सप्तदशसंख्याकैः सूक्ष्मशरीरं भवति तस्यैव संज्ञांतरमाह तल्लिंगमिति उच्यते वेदांतेष्वित्यर्थः ॥ २३ ॥ एवं सूक्ष्मशरीरमभिधाय तदभिमानित्वप्रयुक्तं प्राज्ञेश्वरयोःअवस्थांतरं दर्शयति प्राज्ञ इति प्राज्ञो मलिनसत्वप्रधानाविद्योपाधिको जीवःतत्र तेजःशब्दवाच्यांतःकरणोपलक्षितलिंगशरीरे अभिमानेन तादात्म्याभिमानेन तैजसत्वं तैजसनामकत्वं प्रपद्यते प्राप्नोति ईशः विशुद्धसत्वप्रधानमायोपाधिकः परमेश्वरस्तत्रशरीरे अहमित्याभिमानेन हिरण्यगर्भतां हिरण्यगर्भसंज्ञकत्वं प्रपद्यते इत्यनुषंगः तैजसहिरण्यगर्भयोर्लिंगशरीराभि-

शस्तयोर्व्यष्टिसमष्टिता ॥ २४ ॥ समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् ॥ तदभावात्ततोऽन्ये तु कथ्यंते व्यष्टिसंज्ञया ॥ २५ ॥ तद्भोगाय पुनर्भोग्यभोगायतनजन्मने ॥ पंचीकरोति भगवान् प्रत्येकं वियदादिकम् ॥ २६ ॥ द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ॥ स्वस्वेतरद्वितीयांशैर्योजनात्पंच पंच ते ॥ २७ ॥ तैरंडस्तत्र भुवनं भोग्यभोगाश्र-

---

माने समाने सति तयोः परस्परं भेदः किंनिबंधन इत्यत आह तयोरिति तयोस्तैजसहिरण्यगर्भयोः व्यष्टित्वं समष्टित्वं भवति अत एव भेद इत्यर्थः ॥ २४ ॥ ईश्वरस्य समष्टिरूपत्वे जीवानां व्यष्टिरूपत्वे च कारणमाह समष्टिरिति ईशः ईश्वरो हिरण्यगर्भः सर्वेषां लिंगशरीरोपाधिकानां तैजसानां स्वात्मतादात्म्यवेदनात् स्वात्मना तादात्म्यस्य एकत्वस्य वेदनात् ज्ञानात्समष्टिर्भवति तत ईश्वरादन्ये जीवास्तु तदभावात्तस्य तादात्म्यवेदनस्याभावाद्व्यष्टिसंज्ञया व्यष्टिशब्देन कथ्यंते ॥ २५ ॥ एवं लिंगशरीरं तदुपाधिकौ तैजसहिरण्यगर्भौ च दर्शयित्वा स्थूलशरीराद्युत्पत्तिसिद्धये पंचीकरणं निरूपयितुमाह तद्भोगायेति भगवानैश्वर्यादिगुणषट्कसंपन्नः परमेश्वरः पुनः पुनरपि तद्भोगाय तेषां जीवानां भोगायैव भोग्यभोगायतनजन्मने भोग्यस्याऽन्नपानादेःभोगायतनस्य जरायुजादिचतुर्विधशरीरजातस्य च जन्मने उत्पत्तये वियदादिकमाकाशादिभूतपंचकं प्रत्येकमेकैकं पंचीकरोति अपंचात्मकं पंचात्मकं संपद्यमानं करोति ॥ २६ ॥ कथमेकैकस्य पंचपंचात्मकत्वमित्यत आह द्विधेति वियदादिकमेकैकं द्विधा द्विधातंत्रेणोच्चारितो द्विधाशब्दः विधाय कृत्वा भागद्वयोपेतं कृत्वेत्यर्थः पुनश्च पुनरपि प्रथमं प्रथमं भागं चतुर्धा भागचतुष्टयोपेतं विधायेत्यनुषज्यते स्वस्वेतरद्वितीयांशैः स्वस्मात्स्वस्मादितरेषां चतुर्णां चतुर्णां भूतानां यो यो द्वितीयः स्थूलो भागस्तेन तेनसह प्रथमप्रथमभागांशानां चतुर्णां चतुर्णां मध्ये एकैकस्य योजनात् ते वियदादयः प्रत्येकं पंचपंचात्मका भवंति ॥ २७ ॥ एवं पंचीकरणमभिधाय तैर्भूतैरुत्पाद्य कार्यवर्गं

योद्भवः॥हिरण्यगर्भः स्थूलेऽस्मिन् देहे वैश्वानरो भवेत्॥२८॥ तैजसा विश्वतां याता देवतिर्यङ्नरादयः॥ ते पराग्दर्शिनः प्रत्यक्तत्त्वबोधविवर्जिताः ॥ २९ ॥ कुर्वते कर्म भोगाय कर्म कर्तुं च भुंजते॥ नद्यां कीटा इवावर्तादावर्तांतरमाशु ते ॥ व्रजंतो जन्मनो जन्म लभंते नैव निर्वृतिम् ॥ ३० ॥

---

दर्शयति तैरंडइति तैः पंचीकृतैर्भूतैरुपादानकारणभूतैरंडो ब्रह्माण्ड उत्पद्यते तत्र ब्रह्माण्डान्तर्भुवनान्युपरिभागे वर्तमाना भुम्यादयः सप्त लोका भूमेरधः स्थितान्यतलादीनि सप्त पातालान्तानि तेषु च भुवनेषु तैस्तैः प्राणिभिर्भोक्तुं योग्यान्यन्नादीनि तत्तल्लोकोचितशरीराणि च तैरेव पंचीकृतैर्भूतैरीश्वराज्ञया जायन्ते एवं स्थूलशरीरोत्पत्तिमभिधाय तेषु स्थूलशरीरेषु अभिमानवतो हिरण्यगर्भस्य समष्टिरूपस्य वैश्वानरसंज्ञकत्वं एकैकस्थूलशरीराभिमानवतां व्यष्टिरूपाणां तैजसानां विश्वसंज्ञकत्वं च भवतीत्याह हिरण्यगर्भ इति अस्मिन्स्थूलदेहे वर्तमानो हिरण्यगर्भो वैश्वानरो भवेत् ॥ २८ ॥ तत्रैव वर्तमानास्तैजसा विश्वा भवंति तेषामवांतरभेदमाह देवतिर्यगिति इदानीं तेषां विश्वसंज्ञां प्राप्तानां जीवानां तत्त्वज्ञानरहितत्वेन संसारापत्तिप्रकारं सदृष्टांतं श्लोकद्वयेनाह तेपरागिति ते देवादयः पराग्दर्शिनः बाह्यानेव शब्दादीन् पश्यंति न तु प्रत्यगात्मानं परांचिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यन्ति नांतरात्मानमिति श्रुतेः ननु तार्किकादयो देहव्यतिरिक्तमात्मानं जानंतीत्याशंक्य यद्यप्यात्मानं ते जानंति तथापि श्रुतिसिद्धं तत्त्वं न जानंतीत्याशयेनोक्तमित्याह प्रत्यगिति ॥ २९ ॥ कुर्वते इति अत एव भोगाय सुखाद्यनुभवाय मनुष्यादिशरीराण्यधिष्ठाय कर्म तत्तच्छरीरोचितानि कर्माणि कुर्वते जातावेकवचनं पुनश्च कर्म कर्तुं देवादिशरीरैस्तत्तत्फलं भुंजते च फलानुभवाभावे तत्तत्सजातीयेच्छानुपपत्त्या तत्तत्साधनानुष्ठानानुपपत्तेः एवं वर्तमानास्ते जीवाः नदीप्रवाहपातताः कीटाश्चावर्तादावर्तांतरमाशु व्रजंतो यथा निर्वृतिं सुखं न लभंते एवमाशु जन्मनो जन्म व्रजंतः सुखं नैव लभंते इति ॥ ३० ॥

सत्कर्मपरिपाकात्ते करुणानिधिनोध्दृताः ॥ प्राप्य तीरतरुच्छायां विश्राम्यंति यथा सुखम् ॥ ३१ ॥ उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ॥ पंचकोशविवेकेन लभंते निर्वृतिं पराम् ॥ ३२ ॥ अन्नं प्राणो मनो बुद्धिरानंदश्चेति पंच ते ॥ कोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत् ॥ ३३ ॥ स्यात्पंचीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञकः ॥ लिंगे तु राज-

---

एवं संसारापत्तिमभिधाय तन्निवृत्त्युपायं दर्शयितुं दृष्टांतं तावदाह सत्कर्मेति ते कीटाः सत्कर्मपरिपाकात्पूर्वोपार्जितपुण्यकर्मपरिपाकात्कृपालुना केनचित्पुरुषविशेषेणोद्धृता नदीप्रवाहाद्बहिर्निःसारिताः संतस्तीरतरुच्छयां प्राप्य सुखं यथा भवति तथा यद्वद्विश्राम्यंति ॥ ३१ ॥ इदानीं दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति उपदेशमिति एवमुक्तेन प्रकारेण पूर्वोपार्जितपुण्यकर्मपरिपाकवशादेव तत्त्वदर्शिनः प्रत्यगभिन्नब्रह्मसाक्षात्कारवतः आचार्याद्गुरोः सकाशादुपदेशं तत्त्वमस्यादिवाक्यार्थज्ञानसाधनं श्रवणं वक्ष्यमाणमवाप्य संपाद्य पंचकोशविवेकेनान्नादीनां पंचानां कोशानां विवेकेन वक्ष्यमाणविवेचनेन परां निर्वृतिं मोक्षसुखं लभंते प्राप्नुवंति ॥ ३२ ॥ के ते अन्नादयः पंचकोशा इत्याकांक्षायां तानुपदिशति अन्नंप्राणइति अन्नं प्राणो मनो बुद्धिरानंदश्चेति पंच कोशाः बुद्धिर्विज्ञानं तेषामन्नादीनां कोशशब्दाभिधेयत्वे कारणमाह तैरिति तैः कोशैरावृत आच्छादितः स्वात्मा स्वरूपभूत आत्मा विस्मृत्या स्वस्वरूपविस्मरणेन संसृतिं जननादिप्राप्तिरूपं संसारं व्रजेत् स्पष्टं कोशो यथा कोशाकारकृमेरावरकत्वेन क्लेशहेतुः एवं अन्नादयोऽपि अद्वयानंदत्वाद्यावरकत्वेन आत्मनः क्लेशहेतुत्वात्कोशा इत्युच्यंते इत्यर्थः ॥ ३३ ॥ तेषां कोशानां स्वरूपाणि क्रमेण व्युत्पादयति स्यात्पंचीकृतेत्यादिना मोदादिवृत्तिभिरित्यंतेन सार्धश्लोकद्वयेन पंचीकृतेभ्यो भूतेभ्य उत्पन्नः स्थूलो देहोऽन्नसंज्ञकः अन्नमयशब्दितः कोशः स्यात् प्राणस्तु प्राणमयकोशस्तु लिंगशरीरे वर्तमानैः राजसैः रजोगुणकार्यभूतैः प्राणैः प्राणा-

सैः प्राणैः प्राणः कर्मेंद्रियैः सह ॥ ३४ ॥ सात्विकैर्धींद्रियैः साकं विमर्शात्मा मनोमयः ॥ तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका ॥ ३५ ॥ कारणे सत्वमानंदमयो मोदादिवृत्तिभिः ॥ तत्तत्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत् ॥ ३६ ॥ अन्वयव्यतिरेकाभ्यां पंचकोशविवेकतः ॥ स्वात्मा-

---

पानादिभिर्वायुभिः पंचभिर्वागादिभिः कर्मेंद्रियैः सह दशभिः स्यात् ॥ ३४॥ विमर्शात्मा संशयात्मकं पंचभूतसत्वकार्यं यन्मनः उक्तं तत्सात्विकैः प्रत्येकं भूतसत्वकार्यभूतैर्धींद्रियैः श्रोत्रादिभिः पंचभिर्ज्ञानेंद्रियैः साकं सहितं मनोमयः कोशः स्यादिति पूर्वेण संबंधः निश्चयात्मिका धीस्तेषामेव सत्वकार्यरूपा बुद्धिस्तैरेव पूर्वोक्तैर्ज्ञानेंद्रियैरेव साकं सहिता सती विज्ञानमयः विज्ञानमयाख्यः कोशः स्यात् ॥ ३५ ॥ कारणे कारणशरीरभूतायामविद्यायां यन्मलिनसत्वमस्ति तन्मोदादिवृत्तिभिः प्रियमोदप्रमोदाख्यैः इष्टदर्शनलाभभोगजन्यैः सुखविशेषैः सहितमानंदमयः आनंदमयाख्यः कोशः स्यादिति ननु स्थूलशरीरादीनामन्नमयादिशब्दवाच्यत्वे स वा एष पुरुषोऽन्नरसमय इत्युपक्रम्य तस्माद्वा एतस्मादन्नरसमयादन्योंऽतर आत्मा प्राणमयोऽन्योंऽतर आत्मा मनोमय इत्यादिश्रुतत्वादात्मनोऽन्नमयादिशब्दवाच्यत्वं कथमुच्यते इत्याशंक्य देहादीनामन्नादिविकारत्वेनान्नमयादिशब्दवाच्यत्वमात्मनस्तु तेन तेन कोशेन तादात्म्याभिमानादित्याह तत्तदिति आत्मा प्रत्यगात्मा तत्तत्कोशैस्तेन तेन कोशेन सह तादात्म्यात् तादात्म्याभिमानात्तत्तन्मयस्तत्तत्कोशमयः स्याद्व्यवहारकालेऽन्नमयादिकोशप्राधान्यात् अन्नमयादिशब्दवाच्य इत्यर्थः तुशब्दश्चात्मनः कोशेभ्यो वैलक्षण्यद्योतनार्थः ॥ ३६ ॥ कथं तर्हि एवंविधस्यात्मनो ब्रह्मत्वं भवतीत्याशंक्य कोशेभ्यो विवेचनाद्भवतीत्याह अन्वयेति अन्वयव्यतिरेकाभ्यां वक्ष्यमाणाभ्यां पंचकोशविवेकतः पंचानां कोशानामन्नमयादीनां विवेकतः प्रत्यगात्मनो विवेचनेन पृथक्करणेन यद्वा पंचकोशेभ्योऽन्नमयादिभ्यः आत्मनः पृथक्करणेन स्वात्मानं प्रत्यगात्मानं ततस्तेभ्यः कोशे-

नं तत उध्दृत्य परं ब्रह्म प्रपद्यते ॥ ३७ ॥ अभाने स्थूलदेहस्य स्वप्ने यद्भानमात्मनः ॥ सोऽन्वयो व्यत्तिरेकस्तद्भानेऽन्यानवभासनम् ॥ ३८ ॥ लिंगाभाने सुषुप्तौ स्यादात्मनो भानमन्वयः ॥ व्यतिरेकस्तु तद्भाने लिंगस्याभानमुच्यते ॥ ३९ ॥ तद्विवेकाद्विविक्ताः स्युः कोशाः प्राणमनोधियः ॥ ते हि तत्र गुणावस्थाभेदमात्रात्पृथक्कृताः ॥ ४० ॥ सुषुप्त्यभाने भानं तु समाधावात्मनोऽन्वयः ॥ व्यतिरेकस्त्वा-

---

भ्यः उद्धृत्य बुध्या निष्कृष्य चिदानंदस्वरूपं निश्चित्य परं ब्रह्म पूर्वोक्तलक्षणं प्रपद्यते प्राप्नोति ब्रह्मैव भवतीत्यर्थः ॥ ३७ ॥ इदानीं विवक्षितान्वयव्यतिरेकौ दर्शयति अभान इति स्वप्ने स्वप्नावस्थायां स्थूलदेहस्यान्नमयकोशस्याऽभाने अप्रतीतौ सत्यां आत्मनः प्रतीचो यद्भानं स्वप्नसाक्षित्वेन यत्स्फुरणमस्ति स आत्मनोऽन्वयस्तस्यामेव स्वप्नावस्थायां तद्भाने तस्याऽऽत्मनः स्फुरणे सति अन्यानवभासनमन्यस्य स्थूलदेहस्याऽनवभासनमप्रतीतिः व्यतिरेकः स्थूलदेहस्येति शेषः अस्मिन्प्रकरणे अन्वयव्यतिरेकशब्दाभ्यामनुवृत्तिव्यावृत्ती उच्येते ॥ ३८ ॥ एवं स्थूलदेहस्यानात्मत्वावबोधकान्वयव्यतिरेकौ दर्शयित्वा लिंगदेहस्य तथात्वावगमकौ तौ दर्शयति लिंगेति सुषुप्तौ सुषुप्त्यवस्थायां लिंगाभाने लिंगस्य सूक्ष्मदेहस्याऽभाने अप्रतीतौ आत्मनो भानं तदवस्थासाक्षित्वेन स्फुरणमात्मनोऽन्वयः स्यात्तद्भाने आत्मभाने लिंगस्याऽभानं लिंगदेहस्याऽस्फुरणं व्यतिरेक उच्यते ॥ ३९ ॥ ननु पंचकोशविवेचनमुपक्रम्य लिंगदेहविवेचनं प्रकृतासंगतमित्याशंक्य प्राणमयादिकोशत्रितयस्य तत्रैवांतर्भावात् न प्रकृताऽसंगतिरित्याह तद्विवेकादिति तस्य लिंगशरीरस्य विवेकाद्विवेचनात् प्राणमनोधियः एतन्नामकाः कोशा विविक्ताः आत्मनः पृथक्कृताः स्युः कुत इत्यत आह तेहीति हि यस्मात् कारणात् ते प्राणमयादयः तत्र तस्मिन् लिंगशरीरे गुणावस्थाभेदमात्रात् गुणयोः सत्वरजसोः अवस्थाभेदमात्राद्गुणप्रधानभावेन अवस्थाविशेषादेव पृथक्कृताः

त्मभाने सुषुप्त्यनवभासनम् ॥४१॥ यथा मुंजादिषीकैव-मात्मा युक्त्या समुद्धृतः ॥ शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ४२ ॥ परापरात्मनोरेवं युक्त्या संभावितैकता ॥

---

भेदेन निर्दिष्टा इत्यर्थः ॥ ४० ॥ इदानीमानंदमयकोशत्वेन विवक्षितस्य कारणशरीरस्य विवेचनोपायमाह सुषुप्तीति समाधौ वक्ष्यमाणलक्षणायां समाध्यवस्थायां सुषुप्त्यभाने सुषुप्तिशब्दोपलक्षितस्य कारणदेहरूपस्याऽज्ञानस्याऽप्रतीतौ आत्मनस्तु तुशब्दोऽवधारणे आत्मन एव भानं स्फुरणं यदस्ति स आत्मनोऽन्वयः आत्मभाने आत्मनः स्फूर्तौ सत्यां सुषुप्त्यनवभासनं सुषुप्त्युपलक्षितस्याऽज्ञानस्याऽप्रतीतिरेव व्यतिरेकस्तस्येति अत्राऽयं प्रयोगः प्रत्यगात्मा अन्नमयादिभ्यो भिद्यते तेषु परस्परं व्यावर्त्यमानेष्वपि स्वयमव्यावृत्तत्वात् यत् येषु व्यावर्त्यमानेष्वपि न व्यावर्तते तत्तेभ्यो भिद्यते यथा कुसुमेभ्यः सूत्रं यथा वा खंडादिव्यक्तिभ्यो गोत्वमिति ॥ ४१ ॥ अन्वयव्यतिरेकाभ्यां कोशपंचकाद्विविक्तस्याऽऽत्मनो ब्रह्मप्राप्तिर्भवतीत्युक्तम् तत्प्रतिपादिकां अंगुष्ठमात्रः पुरुषोंऽतरात्मेत्यादिकां तं विंद्याच्छुक्रममृतमित्यंतां कठश्रुतिं अर्थतः पठति यथेति यथा येन प्रकारेण मुंजादेतन्नामकात् तृणविशेषादिषीका गर्भस्थं कोमलं तृणं युक्त्या बहिरावरकत्वेन स्थितानां स्थूलपत्राणां विभजनलक्षणोपायेन समुद्ध्रियते एवमात्मापि युक्त्याऽन्वयव्यतिरेकलक्षणोपायेन शरीरत्रितयात्पूर्वोक्ताच्छरीरत्रितयात् धीरैः ब्रह्मचर्यादिसाधनसंपन्नैः अधिकारिभिः समुद्धृतः पृथक्कृतश्चेत् सः परं ब्रह्मैव जायते चिदानंदरूपत्वस्य लक्षणस्य उभयोः अविशिष्टत्वादित्यभिप्रायः ॥ ४२ ॥ एतावता ग्रंथसंदर्भेण सफलस्य तत्त्वज्ञानस्य निरूपितत्वात् उत्तरग्रंथभागस्याऽनारंभप्रसंग इत्याशंक्य तदारंभसिद्ध्यै वृत्तानुकथनपूर्वकम् उत्तरग्रंथस्य तात्पर्यमाह परापरेति एवमुक्तप्रकारेण परापरात्मनोः तत्त्वंपदार्थयोः परमात्मजीवात्मनोः एकता अभिन्नता युक्त्या लक्षणसाम्यप्रदर्शनाद्युपायेन संभाविता अंगीकारिता सा एकता तत्त्वमस्यादिवाक्यैः स्पष्टं भागत्यागेन विरुद्धांशपरित्यागेन लक्ष्यते

तत्त्वमस्यादिवाक्यैः सा भागत्यागेन लक्ष्यते ॥ ४३ ॥ जगतो यदुपादानं मायामादाय तामसीम् ॥ निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा ॥ ४४ ॥ यदा मलिनसत्वां तां कामकर्मादिदूषिताम् ॥ आदत्ते तत्परं ब्रह्म त्वंपदेन तदोच्यते ॥ ४५ ॥ त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम् ॥ अखंडं सच्चिदानंदं महावाक्येन लक्ष्यते ॥ ४६ ॥ सोऽयमित्यादिवाक्येषु विरोधात्तदिदंतयोः ॥ त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा ॥ ४७ ॥ मायाविद्ये त्रि-

---

लक्षणया वृत्त्या बोध्यते ॥ ४३ ॥ तत्त्वमसीति वाक्यार्थज्ञानस्य तदादिपदार्थज्ञानपूर्वकत्वात् तत्पदस्य वाच्यार्थं तावदाह जगत इति यत्सच्चिदानंदलक्षणं ब्रह्म तामसीं तमोगुणप्रधानां मायामादाय उपाधित्वेन स्वीकृत्य जगतश्चराचरात्मकस्य कार्यवर्गस्य उपादानमध्यासाधिष्ठानम् शुद्धसत्वां विशुद्धसत्वप्रधानां तामुपाधित्वेन स्वीकृत्य निमित्तमुपादानाद्यभिज्ञं कर्तृ भवति तद्ब्रह्म निमित्तोपादानोभयरूपं ब्रह्म तद्गिरा तत्त्वमसीतिवाक्यस्थेन तत्पदेनोच्यते ॥ ४४ ॥ त्वंपदवाच्यार्थमाह यदेति तदेव ब्रह्म यदा यस्यामवस्थायां मलिनसत्वां ईषद्रजस्तमोमिश्रणेन मलिनसत्वप्रधाना अत एव कामकर्मादिदूषितां तामविद्याशब्दवाच्यां मायामादत्ते उपाधित्वेन स्वीकरोति तदा त्वंपदेनोच्यते ॥ ४५ ॥ एवं तत्त्वंपदार्थावभिधाय वाक्यार्थमाह त्रितयीमिति त्रितयीमपि त्रिप्रकारामपि तमःप्रधानविशुद्धसत्वप्रधानमलिनसत्वप्रधानत्वभेदेन उक्तां अत एव परस्परविरोधिनीं तां मायां मुक्त्वा परित्यज्य अखंडं भेदरहितं सच्चिदानंदं ब्रह्म महावाक्येन लक्ष्यते इति उक्तम् ॥ ४६ ॥ नन्वेवं लक्षणावृत्त्या वाक्यार्थबोधनं क दृष्टमित्याशंक्याह सोयमिति सोऽयं देवदत्त इत्यादिवाक्येषु तदिदंतयोः तदेतद्देशकालवैशिष्ट्यलक्षणयोः धर्मयोः विरोधादैक्यानुपपत्तेः भागयोः विरुद्धांशयोस्त्यागेन एक आश्रयो देवदत्तस्वरूपमेकमेव यथा लक्ष्यते ॥ ४७ ॥ एवं दृष्टांतमभिधाय दार्ष्टांतिकमाह मायाविद्ये इति एवं सोऽयं देवदत्त

हयैवमुपाधी परजीवयोः ॥ अखंडं सच्चिदानंदं परं ब्रह्मैव लक्ष्यते ॥ ४८ ॥ सविकल्पस्य लक्ष्यत्वे लक्ष्यस्य स्यादवस्तुता ॥ निर्विकल्पस्य लक्ष्यत्वं न दृष्टं न च संभवि ॥ ४९ ॥ विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्॥ आद्ये व्याहतिरन्यत्रानवस्थात्माश्रयादयः॥ ५० ॥ इदं गु-

इत्यादिवाक्ये यथा तद्वत्परजीवयोः उपाधी उपाधिभूते मायाविद्ये पूर्वोक्ते विहाय अखंडं भेदरहितं सच्चिदानंदं परं ब्रह्मैव महावाक्येन लक्ष्यते ॥ ४८ ॥ ननु किं महावाक्येन लक्ष्यं सविकल्पमुत निर्विकल्पमिति विकल्प्य प्रथमे पक्षे दोषमाह पूर्ववादी सविकल्पस्येति सविकल्पस्य विकल्पेन विपरीतत्वेन कल्पितेन नामजात्यादिना रूपेण सह वर्तत इति सविकल्पं तस्य लक्ष्यत्वे वाक्येन बोध्यत्वे लक्ष्यस्य वाक्यार्थतया लक्ष्यस्यावस्तुता स्यात् मिथ्यात्वं स्यात् द्वितीये दोषमाह निर्विकल्पस्येति निर्विकल्पस्य नामजात्यादिना रहितस्य लक्ष्यत्वं न दृष्टं लोके न क्वापि दृष्टं न च संभवि उपपद्यमानमपि न भवति लक्ष्यत्वधर्मवतो निर्विकल्पत्वव्याघातादिति यावत् ॥ ४९ ॥ सिद्धांती जात्युत्तरत्वान्नेदं चोद्यमिति विकल्पपूर्वकं दोषमाह विकल्प इति सविकल्पस्य वा निर्विकल्पस्य लक्ष्यत्वमिति वा यो विकल्पस्त्वया कृतः स किं निर्विकल्पस्य उत सविकल्पस्य भवेत् आद्ये प्रथमे पक्षे व्याहतिस्त्वयोक्तो व्याघात एव अन्यत्र द्वितीये पक्षे अनवस्थादयः तथाहि सविकल्पस्य विकल्प इत्यत्र विकल्पेन सह वर्तते इत्यत्र तृतीयांतविकल्पपदेन प्रथमांतविकल्पपदेन च एक एव विकल्पोऽभिधीयते द्वौ वा एक एव चेत्स्वयमेक एव विकल्पाश्रयविशेषणतया आश्रयस्तदाश्रितो विकल्पश्चेत् तदाऽऽत्माश्रयता द्वौ चेत्तदा तृतीयांतशब्दनिर्दिष्टस्यापि विकल्पस्य विकल्परूपत्वात्तदाश्रयस्यापि सविकल्पत्वात्तद्विशेषणभूतो विकल्पः किं प्रथमांतशब्दनिर्दिष्ट एव विकल्प उत ताभ्यामन्यः आद्ये अन्योन्याश्रयता द्वितीयेऽपि धर्मिविशेषणीभूतो विकल्पः किं प्रथमांतशब्दनिर्दिष्ट उत तेभ्योऽन्य आद्ये चक्रकापत्तिः द्वितीये तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थापात इति ॥ ५० ॥ न केवलम-

णक्रियाजातिद्रव्यसंबंधवस्तुषु ॥ समं तेन स्वरूपस्य सर्वमेतदितीष्यताम् ॥ ५१ ॥ विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि ॥ विकल्पितत्वलक्ष्यत्वसंबंधाद्यास्तु कल्पिताः ॥ ५२ ॥ इत्थं वाक्यैस्तदर्थानुसंधानं श्रवणं भवेत् ॥ यु-

---

त्रैवेदं दूषणमपि तु सर्वत्रैवंविधविकल्पपूर्वकं दूषणं प्रसरतीत्याह इदमिति इदं विकल्पदूषणजातं गुणक्रियाजातिद्रव्यसंबंधवस्तुषु गुणादिसंबंधांतेषु पंचसु वस्तुषु समं तथाहि गुणः किं निर्गुणे वर्तते अथवा गुणवति क्रियाऽपि क्रियारहिते वर्तते क्रियावति वा आद्ये व्याघातोऽन्यत्रात्माश्रयादय इति सर्वत्र चैवमूह्यम् नन्विदमसदुत्तरं चेत्किंसदुत्तरमित्याशंक्याह तेनेति तेनैवं विकल्पस्याऽसंगतत्वेन एतद्गुणादिकं सर्वं स्वरूपस्येति इष्यतां गुणादयःसर्वे वस्तुस्वरूपे वर्तंते इत्यभिप्रायः ॥ ५१ ॥ भवत्वेवमन्यत्र प्रकृते किमायातमित्यत आह विकल्पेति विकल्पतदभावाभ्यां विकल्पेन विकल्पाऽभावेन च असंस्पृष्टात्मवस्तुनि संस्पर्शरहिते परमात्मवस्तुनि विकल्पितत्वलक्ष्यत्वसंबंधाद्यास्तत्र विकल्पितत्वं नाम सविकल्पस्य वा निर्विकल्पस्य वेति पूर्वोक्तेन विषयीकृतत्वं लक्ष्यत्वं लक्षणावृत्त्या ज्ञाप्यत्वं संबंधः संयोगादिः आदिशब्देन द्रव्यादयो गृह्यंते तुशब्दोऽवधारणे तत्र द्रव्यं नाम गुणानामाश्रयो द्रव्यं समवायिकारणं द्रव्यमिति वा तार्किकैर्लक्षितं कर्मव्यतिरिक्तत्वे सति जातिमात्राश्रयो गुणः नित्यमेकमनेकवृत्ति सामान्यमिति लक्षिता जातिः संयोगवियोगयोरसमवायिकारणजातीयं कर्म इतिलक्षिता क्रिया एते सर्वे स्वरूपे कल्पिता एवेत्यर्थः ॥ ५२ ॥ एतावता ग्रंथसंदर्भेण किमुक्तं भवतीत्याकांक्षायां फलितमाह इत्थमिति इत्थं जगतो यदुपादानमित्यादिग्रंथजातोक्तप्रकारेण वाक्यैस्तत्त्वमस्यादिवाक्यैस्तदर्थानुसंधानं तेषां वाक्यानामर्थस्य जीवब्रह्मणोः एकत्वलक्षणस्यानुसंधानं श्रवणं भवेत् युक्त्या शब्दस्पर्शादयो वेद्या इत्यादिना परापरात्मनोरेवंयुक्त्या संभावितैकतेत्यंतेन ग्रंथसंदर्भेणोक्तप्रकारेण संभावितत्वानुसंधानं श्रुतस्यार्थस्योपपद्यमानत्वज्ञानं यदस्ति

त्त्या संभावितत्वानुसंधानं मननं तु तत् ॥ ५३ ॥ ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत् ॥ एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ ५४॥ ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ॥ निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ५५॥ वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः॥स्मरणादनुमीयंते व्युत्थितस्य समुत्थितात् ॥५६॥ वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि ॥ अदृष्टासकृदभ्या-

---

तत्तु मननमित्युच्यते ॥ ५३ ॥ इदानीं निदिध्यासनमाह ताभ्यामिति ताभ्यां श्रवणमननाभ्यां निर्विचिकित्से निर्गता विचिकित्सा संशयो यस्मादसौ निर्विचिकित्सः तस्मिन्नर्थे विषये स्थापितस्य धारणावतश्चेतसः देशसंबंधश्चित्तस्य धारणेति पतंजलिनोक्तत्वाद्यदेकतानत्वं एकाकारवृत्तिप्रवाहवत्त्वं एतन्निदिध्यासनमुच्यते हि प्रसिद्धं योगशास्त्रे तत्र प्रत्ययैकतानता ध्यानमिति ॥ ५४ ॥ तस्यैव निदिध्यासनस्य परिपाकदशारूपं समाधिमाह ध्यातृध्याने इति निदिध्यासने तावद्ध्याता ध्यानं ध्येयं चेति त्रितयं भासते तत्र यदा चित्तमभ्यासवशेन धातृध्याने ध्यातारं ध्यानं च क्रमात्परित्यज्य ध्येयैकगोचरं ध्येयमेकमेव गोचरो विषयो यस्य तत्तथाविधं भवति तदा समाधिरित्युच्यते तत्र दृष्टांतः निवातेति वायुरहिते प्रदेशे वर्तमानो दीपो यथा निश्चलो भवति तद्वदित्यर्थः ॥ ५५ ॥ ननु समाधौ वृत्तीनामनुपलब्धौ ध्येयैकगोचरत्वमपि निश्चेतुं न शक्यते इत्याशंक्य वृत्तिसद्भावस्य अनुमानगम्यत्वान्नैवमित्याह वृत्तयस्त्विति आत्मगोचराः आत्मा गोचरो विषयो यासां ता वृत्तयस्तु तदानीं समाधिकाले अज्ञाता अपि व्युत्थितस्य समाधेरुत्थितस्य समुत्थितादुत्पन्नात्स्मरणादेतावंतं कालं समाहितो अभूवमित्येवंरूपादनुमीयंते यद्यत्स्मर्यते तत्तदनुभूतमिति व्याप्तेर्लोकसिद्धत्वादित्यर्थः ॥ ५६ ॥ ननु तदानीं वृत्त्युत्पादकप्रयत्नाभावात् कथं वृत्त्युनुवृत्तिरित्याशंक्य तात्कालिकप्रयत्नाभावेऽपि प्राथमिकादेव प्रयत्नाददृष्टादिसहकारिसहिताद्भवतीत्याह वृत्ती-

ससंस्कारसचिवाद्भवेत् ॥ ५७ ॥ यथा दीपो निवातस्थ इ-
त्यादिभिरनेकधा ॥ भगवानिममेवार्थमर्जुनाय न्यरूपय-
त् ॥ ५८ ॥ अनादाविह संसारे संचिताः कर्मकोटयः ॥
अनेन विलयं यांति शुद्धो धर्मो विवर्धते ॥ ५९ ॥ धर्ममे-
घमिमं प्राहुः समाधिं योगवित्तमाः ॥ वर्षत्येष यतो धर्मा-
मृतधाराः सहस्रशः ॥ ६० ॥ अमुना वासनाजाले निः-

---

नामिति ध्येयैकगोचराणां वृत्तीनामनुवृत्तिस्तु प्रवाहरूपेणानुगतिस्तु प्रथमा-
दपि प्रयत्नात् समाधिपूर्वकालीनादपि अदृष्टमशुक्लकृष्णकर्माख्यो यः पुण्य-
विशेषः कर्माशुक्लकृष्णं योगिनः त्रिविधमितरेषामिति पतंजलिना सूचित-
त्वात् यश्चासकृदभ्याससंस्कारः पुनः पुनः समाध्यभ्यासेन जनितो भाव-
नाख्यः संस्कारविशेषः ताभ्यां सहकारिकारणाभ्यां सह वर्तमानाद्भवति
॥ ५७ ॥ नन्वयं समाधिः पूर्वाचार्यैर्न निरूपितो दृष्ट इत्याशंक्य सर्वगुरुणा
श्रीपुरुषोत्तमेन निरूपितत्वान्मैवमित्याह यथेति यथा दीपो निवातस्थो
नेंगते सोपमास्मृतेत्यादिभिः श्लोकैः अनेकधा नानाप्रकारेण भगवान्
ज्ञानैश्वर्यादिसंपन्न इममेव निर्विकल्पकसमाधिरूपं अर्थं अर्जुनाय शि-
ष्याय न्यरूपयन्निरूपितवान् ॥ ५८ ॥ अस्य समाधेरवांतरफलमाह अ-
नादाविति अनादौ स्पष्टं इहास्मिन् संसारे संचिता संपादिताः कर्म-
कोटयः कर्मणां पुण्यापुण्यलक्षणानां कोटयः इत्युपलक्षणं अपरिमितानि
कर्माणीत्यर्थः अनेन समाधिना विलयं यांति विनश्यंति क्षीयंते चास्य
कर्माणि तस्मिन्दृष्टे परावरे इति श्रुतेः ज्ञानाग्निः सर्वकर्माणीतिस्मृतेश्च
शुद्धो धर्मः सविलासाविद्यानिवर्तकसाक्षात्कारसाधनभूतो धर्मो विवर्धते
स्पष्टम् ॥ ५९ ॥ तत्र किं प्रमाणमित्यत आह धर्मेति योगवित्तमाः अ-
तिशयेन योगज्ञा ब्रह्मसाक्षात्कारवंत इति यावत् इमं निर्विकल्पसमाधिं
धर्ममेघं प्राहुः स्पष्टं तदुपपादयति वर्षतीति यतः कारणादेष समाधिर्ध-
र्मामृतधाराः धर्मलक्षणा अमृतधाराः सहस्रशो वर्षति क्षणमेकं क्रतुशत-
स्यापीति श्रुतेरतो धर्ममेघं प्राहुरिति पूर्वेणान्वयः ॥ ६० ॥ इदानीं स-

**शेषं प्रविलापिते ॥ समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये ॥ ६१ ॥ वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते ॥ करामलकवद्बोधमपरोक्षं प्रसूयते ॥ ६२ ॥ परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥ बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वन्हिवत् ॥ ६३ ॥ अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥ संसारकारणाज्ञानतमसश्चंडभास्करः ॥ ६४ ॥ इत्थं तत्वविवेकं विधाय विधिवन्मनः समा-**

---

माधेः परमप्रयोजनमाह अमुनेति अमुना समाधिना वासनाजाले अहंकारममकारकर्तृत्वाद्यभिमानहेतुभूते ज्ञानविरुद्धे संस्कारसमूहे निःशेषं यथा भवति तथा प्रविलापिते विनाशिते पुण्यपापाख्ये कर्मसंचये समूलोन्मूलिते मूलसहितं यथा भवति तथोन्मूलिते उध्दृते विनाशिते इति यावत् ॥ ६१ ॥ फलितमाह वाक्यमिति वाक्यं तत्त्वमस्यादिवाक्यं अप्रतिबद्धं सत्कर्मवासनाभ्यां प्रतिबंधरहितं सत् प्राक्परोक्षावभासिते पूर्वं परोक्षतया प्रकाशिते तत्वे करामलकवत्करास्थितामलकगोचरमिव अपरोक्षमपरोक्षतया तत्वावभासनसमर्थं बोधं ज्ञानं प्रसूयते जनयति ॥ ६२ ॥ इदानीं परोक्षज्ञानस्य फलमाह परोक्षमिति देशिकपूर्वकं गुरुमुखाल्लब्धं शाब्दं तत्त्वमस्याद्यागमजन्यं परोक्षं ब्रह्मविज्ञानं बुद्धिपूर्वकृतं ज्ञानपूर्वकं यथा भवति तथा कृतं कृत्स्नं समस्तं पापं वन्हिवद्दहति ॥ ६३ ॥ अपरोक्षज्ञानफलमाह अपरोक्षेति शाब्दं देशिकपूर्वकं व्याख्यातं अपरोक्षात्मविज्ञानमपरोक्षस्यात्मनो विज्ञानं संशयविपर्ययरहितं यज्ज्ञानं तत्संसारकारणाज्ञानतमसः संसारकारणं यदज्ञानमस्ति तदेव तमस्तस्य चंडभास्करः मध्यान्हकालीनसूर्यःबाह्यतमसश्चंडभास्कर इवाज्ञानतमसो निवर्तक इत्यर्थः ॥ ६४ ॥ ग्रंथाभ्यासफलमाह इत्थमिति नर इत्थमुक्तेन प्रकारेण तत्वविवेकं तत्वस्य ब्रह्मात्मैकत्वलक्षणस्य विवेकं कोशपंचकाद्विवेचनं विधाय कृत्वा तस्मिंस्तत्वे विधिवच्छास्त्रोक्तप्रकारेण मनः समाधाय स्थिरीकृत्य विगलितसंसृतिबंधः अपरोक्षज्ञानेन निवृत्त-

धाय ॥ विगलितसंसृतिबंधः प्राप्नोति परं पदं नरो न-
चिरात् ॥ ६५ ॥

---

संसारबंधः सन् परं पदं निरतिशयानंदरूपं मोक्षं नचिरादविलंबेन प्राप्नोति सत्यज्ञानानंदलक्षणं ब्रह्मैव भवतीत्यर्थः ॥ ६५ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्भारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा रचिता तत्वविवेकव्याख्या समाप्ता ॥

॥ इति तत्वविवेकः ॥

---



अथ पंचभूतविवेकः॥ सदद्वैतं श्रुतं यत्तत्पंचभूतविवेकतः ॥ बोद्धुं शक्यं ततो भूतपंचकं प्रविविच्यते ॥ १ ॥ शब्दस्पर्शौ रूपरसौ गंधो भूतगुणा इमे ॥ एकद्वित्रिचतुःपंच गुणा व्योमादिषु क्रमात् ॥ २ ॥ प्रतिध्वनिर्वियच्छब्दो वायौ बीसीतिशब्दनं ॥ अनुष्णाशीतसंस्पर्शौ वन्हौ भुगुभुगुध्वनिः ॥ ३ ॥ उष्णः स्पर्शः प्रभारूपं जले बुलुबुलुध्वनिः ॥

---

श्रीगणेशाय नमः ॥ अथ पंचभूतविवेकदीपिकाप्रारंभः ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ पंचभूतविवेकस्य व्याख्यानं क्रियते मया॥ १ ॥ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयामिति श्रुत्या जगदुत्पत्तेः पुरा यत् जगत्कारणं सद्रूपमद्वितीयं ब्रह्म श्रुतं तस्यावाङ्मनसगोचरत्वेन स्वतोऽवगंतुं अशक्यत्वात्तत्कार्यत्वेन तदुपाधिभूतस्य भूतपंचकस्य विवेकद्वारा तदवबोधनाय उपोद्घातत्वेन भूतपंचकविवेकं प्रतिजानीते सदद्वैतमिति ॥ १ ॥ तत्र तावदाकाशादीनां पंचानां भूतानां गुणतो भेदज्ञापनाय तद्गुणानाह शब्देति नन्वेते गुणाः किं सर्वेषामुत एकैकस्यैकैकगुण इति विमर्शयन्नोभयथापि किंतु प्रकारांतरमस्ति इत्यभिप्रायेणाह एकेति॥ २ ॥ तदेव प्रकारांतरं विशदयति प्रतिध्वनिरिति आकाशे तावच्छब्द एव गुणः स च प्रतिध्वनिरूपः वायौ शब्दस्पर्शौ तत्र वायुशब्दमनुकारेण दर्शयति बीसीतिशब्दनमिति एवमुत्तरत्रानुकरणशब्दनं द्रष्टव्यं तस्य स्पर्शमाह अनुष्णाशीतः संस्पर्श इति वन्हौ शब्दस्पर्शरूपाणीति त्रयो गुणाः ते च क्रमेणाभिधीयंते वन्हौ भुगुभुगुध्वनिः ॥ ३ ॥ उष्णस्पर्शः प्रभारूपमिति जले शब्दादयो रसांताश्चत्वारो गुणास्तानाह जले बुलुबुलुध्वनिः शीतः स्पर्शः शुक्लं रूपं रसो माधुर्यमिति ॥ ४ ॥ भूमौ शब्दादिगंधांताः पंच गुणास्तानुदाहरति भूमौ कडकडाशब्द इत्यादिना

शीतः स्पर्शः शुक्लरूपं रसो माधुर्यमीरितं ॥ ४ ॥ भूमौ कडकडाशब्दः काठिन्यं स्पर्श इष्यते ॥ नीलादिकं चित्ररूपं मधुराम्लादिको रसः ॥ ५ ॥ सुरभीतरगंधौ द्वौ गुणाः सम्यग्विवेचिताः ॥ श्रोत्रं त्वक्चक्षुषी जिव्हा घ्राणं चेंद्रियपंचकं ॥ ६ ॥ कर्णादिगोलकस्थं तच्छब्दादिग्राहकं क्रमात् ॥ सौक्ष्म्यात्कार्यानुमेयं तत्प्रायो धावेद्बहिर्मुखम् ॥ ७ ॥ कदाचित्पिहिते कर्णे श्रूयते शब्द आंतरः ॥ प्राणवायौ जाठराग्नौ जलपानेऽन्नभक्षणे ॥ ८ ॥ व्यज्यंते ह्यांतराः स्पर्शा मीलने चांतरं तमः ॥ उद्गारे रसगंधौ चेत्यक्षाणामांतरग्रहः ॥ ९ ॥ पंचोक्त्यादानगमनविसर्गानंदकाः क्रियाः ॥ कृषि-

---

॥ ५ ॥ सुरभीतरगंधौ द्वावित्यंतेन उक्तमर्थमुपसंहरति गुणा इति एवं गुणतो भेदमभिधाय कार्यतो भेदज्ञापनाय तत्कार्याणि ज्ञानेंद्रियाणि तावदाह श्रोत्रमिति ॥ ६ ॥ तेषां स्थानानि व्यापारांश्च दर्शयति कर्णादीति इंद्रियसद्भावे किं प्रमाणमित्याकांक्षायां कार्यलिंगकानुमानमित्याह सौक्ष्म्यादिति तच्च रूपोपलब्धिः करणजन्या क्रियात्वाच्छिदिक्रियावदित्यादिद्रष्टव्यं सौक्ष्म्यादपंचीकृतपंचभूतकार्यत्वेन दुर्लक्ष्यत्वादित्यर्थः एतेषां स्वभावमाह प्राय इति परांचि खानि व्यतृणत्स्वयंभूरिति श्रुतेरित्यर्थः ॥७॥ प्रायःशब्देन सूचितं क्वचित्करणानामांतरविषयग्राहकत्वं दर्शयति कदाचिदितिद्वाभ्यां कदाचित्कर्णस्य पिधाने कृते सति प्राणवायौ जाठराग्नौ च विद्यमान आंतरः शब्दः श्रूयते ॥ ८ ॥ जलपानेऽन्नभक्षणे चांतरस्पर्शा अभिव्यज्यंते अभिव्यक्ता भवंति नेत्रानिमीलने कृते आंतरं तम उपलभ्यते उद्गारे जाते रसगंधौ द्वौ गृह्येते इत्यनेन प्रकारेणाक्षाणामांतरग्रहोऽक्षाणामिति कर्तरि षष्ठी आंतरस्य विषयस्य ग्रहो ग्रहणमिंद्रियकर्तृकमांतरविषयग्रहणं भवतीत्यर्थः ॥ ९ ॥ एवं ज्ञानेंद्रियव्यापारानभिधाय कर्मेंद्रियासत्त्ववादिनं प्रति तत्सद्भावसमर्थनाय तल्लिंगभूतांस्तव्द्यापारानह पंचेति उक्तिश्चादानं च गमनं च विसर्गश्च आनंदश्चेति द्वंद्वसमा-

वाणिज्यसेवाद्याः पंचस्वंतर्भवंति हि ॥ १० ॥ वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः ॥ मुखादिगोलकेष्वास्ते तत्कर्मेंद्रियपंचकम् ॥ ११ ॥ मनो दशेंद्रियाध्यक्षं हृत्पद्मगोलके स्थितं ॥ तच्चांतःकरणं बाह्येष्वस्वातंत्र्याद्विनेंद्रियैः ॥ १२ ॥ अक्षेष्वर्थार्पितेष्वेतद्गुणदोषविचारकम् ॥ सत्वरजस्तमश्चास्य गुणा विक्रियते हि तैः ॥ १३ ॥ वैराग्यं क्षांतिरौदार्यमित्याद्याः सत्वसंभवाः ॥ कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः ॥ १४ ॥ आलस्यभ्रांतितंद्राद्या विकारास्त-

---

सः उक्त्यादानगमनविसर्गानंदाख्याः पंच क्रियाः प्रसिद्धा इति शेषः ननु कृष्यादीनां क्रियांतराणामपि सत्त्वात्कथं पंचेत्युक्तमित्याशंक्याह कृषीति ॥ १० ॥ कानि तानि क्रियाजनकानींद्रियाणि इत्यत आह वाक्पाणीति वागादिभिरक्षैस्तक्रियाजनिः तासां क्रियाणां उत्पत्तिर्भवतीति शेषः अत्रापि उक्तिः करणपूर्विका क्रियात्वादित्यादिकार्यलिंगकमनुमानं द्रष्टव्यं तस्य कर्मेंद्रियपंचकस्य स्थानान्याह मुखादीति आदिशब्देन करचरणौ गुदशिश्नच्छिद्रे च गृह्येते ॥ ११ ॥ इदानीमुक्तदशेंद्रियप्रेरकत्वेन प्रस्तुतस्य मनसः कृत्यं स्थानं च दर्शयति मन इति तस्यांतरिंद्रियत्वं सनिमित्तकमाह तच्चेति ॥ १२ ॥ दशेंद्रियाध्यक्षत्वमेव विशदयति अक्षेष्विति अक्षेष्विंद्रियेष्वर्थार्पितेषु विषयेषु स्थापितेषु सत्सु एतन्मनो गुणदोषविचारकमिदं समीचीनमिदमसमीचीनमित्यादिविचारकारि इत्यर्थः अयं भावः आत्मनः प्रमातृत्वेन सर्वज्ञानसाधारण्याच्चक्षुरादीनां रूपादिज्ञानजननमात्रे चरितार्थत्वात्तद्गुणदोषविचारस्योपलभ्यमानस्यान्यथानुपपत्त्या तत्कारणत्वेन मनोऽभ्युपगंतव्यमिति मनसो वैराग्यकामाद्यनेकविधवृत्तिमत्त्वप्रदर्शनाय सत्वादिगुणवत्त्वं दर्शयति सत्वमिति तेषां तद्गुणत्वे कारणमाह विक्रियते इति हि यतः तैर्गुणैर्विक्रियते विकारं प्राप्नोतीत्यर्थः ॥ १३ ॥ गुणैस्तस्य विक्रियमाणत्वमेव प्रपंचयति वैराग्यमिति स्पष्टत्वान्न व्याख्यायंते ॥ १४ ॥ वैराग्यादीनां कार्याणि विभज्य दर्शयति सा-

मसोत्थिताः ॥ सात्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः ॥ १५ ॥ तामसैर्नोभयं किंतु वृथायुःक्षपणं भवेत् ॥ अत्राहंप्रत्ययीकर्तेत्येवं लोकव्यवस्थितिः ॥ १६ ॥ स्पष्टशब्दादियुक्तेषु भौतिकत्वमतिस्फुटम् ॥ अक्षादावपि तच्छास्त्रयुक्तिभ्यामवधार्यताम् ॥ १७ ॥ एकादशेंद्रियैर्युक्त्या शास्त्रेणाप्यवगम्यते ॥ यावत्किंचिद्भवेदेतदिदं शब्दोदितं जगत् ॥ १८ ॥ इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ॥ सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः ॥ १९ ॥ वृक्षस्य स्व-

---

त्विकैरिति ॥ १५ ॥ एतेषां बुद्धिस्थत्वादंतःकरणादीनां सर्वेषां स्वामिनमाह अत्रेति अहं इतिप्रत्ययवान्कर्ता प्रभुरित्यर्थः लोके हि कार्यकारी प्रभुरित्येवमुपादिश्यते ॥ १६ ॥ एवं जगतः स्थितिमभिधाय इदानीं तस्य भौतिकत्वज्ञानोपायमाह स्पष्टेति स्पष्टशब्दादियुक्तेषु स्पष्टैः शब्दस्पर्शादिगुणैः सहितेषु घटादिषु वस्तुषु भूतकार्यत्वं स्पष्टमेवावगम्यते इंद्रियादिषु कथं भूतकार्यत्वनिश्चयः इत्याशंक्य आगमानुमानाभ्यामित्याह अक्षादावपीति अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागित्यादिशास्त्रं अनुमानं च विमतानि श्रोत्रादीनि भूतकार्याणि भवितुमर्हंति भूतान्वयव्यतिरेकानुविधायित्वात् यद्यदन्वयव्यतिरेकानुविधायि तत्तत्कार्यं दृष्टं यथा मृदन्वयव्यतिरेकानुविधायी घटो मृत्कार्यो दृष्टः तथा च इमानि तस्मात्तथेति तदन्वयव्यतिरेकानुविधायित्वं च षोडशकलः सोम्य पुरुष इत्यादिना छांदोग्यश्रुतौ मनसः श्रुतं तद्वदन्यत्रापि द्रष्टव्यम् ॥ १७ ॥ एवं भूतानि भौतिकानि च विविच्य दर्शयित्वा प्रकृतां सदेव सोम्येदमग्र आसीदित्यादि अद्वितीयब्रह्मप्रतिपादिकां श्रुतिं व्याचक्षाणः तद्वाक्यस्थेदंपदस्यार्थमाह एकादशेति प्रत्यक्षादिभिः सर्वैः प्रमाणैरपि शब्दात् अर्थापत्यादिप्रमाणज्ञानैश्च यावत्किंचिज्जगदवगम्यते तत्सर्वं सदेवेत्यादिवाक्यस्थेन इदंपदेनाभिहितमित्यर्थः ॥ १८ ॥ एवमिदंशब्दस्यार्थमभिधाय इदानीं तां श्रुतिं स्वयमेवार्थतः पठति इदमिति अरुणस्यापत्यमारुणिः

गतो भेदः पत्रपुष्पफलादिभिः ॥ वृक्षांतरात्सजातीयो विजातीयः शिलादितः ॥ २० ॥ तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ॥ ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ २१ ॥ सतो नावयवाः शंक्यास्तदंशस्यानिरूपणात् ॥ नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात् ॥ २२ ॥ नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा ॥ न तयोरुद्भवस्तस्मान्निरंशं सद्यथा वियत् ॥ २३ ॥ सदंतरं सजातीयं न वैलक्षण्यवर्जनात् ॥ नामरूपोपाधिभेदं विना नैव सतो भिदा ॥ २४ ॥ विजाती-

---

उद्दालकः तस्य वचनमित्यर्थः ॥ १९ ॥ एकमेवाद्वितीयमितिपदत्रयेण सद्वस्तुनि स्वगतादिभेदत्रयं प्रसक्तं निवारयितुं लोके स्वगतादिभेदत्रयं तावद्दर्शयति वृक्षस्येति ॥ २० ॥ एवमनात्मनि भेदत्रयं प्रदर्श्य सद्वस्तुन्यपि प्रसक्तं तत् भेदत्रयं श्रुतिः पदत्रयेण निवारयतीत्याह तथेति वस्तुत्वसामान्यादनात्मनीव सद्रूपात्मवस्तुन्यपि प्रसक्तं स्वगतादिभेदत्रयं ऐक्यावधारणद्वैतप्रतिषेधाभिधायकैरेकमेवाद्वितीयमिति त्रिभिः पदैः क्रमेण निवार्यंते इत्यर्थः ॥ २१ ॥ सद्वस्तुनस्तावन्न स्वगतभेदः शंकितुं शक्यते अस्य निरवयवत्वादित्याह सत इति नामरूपयोः सदवयवत्वं किं नस्यादित्याशंक्य सृष्टेः पुरा तयोरभावान्न सदंशत्वमित्याह नामेति ॥ २२ ॥ कुतो नामरूपयोरभाव इत्याशंक्याह नामरूपेति फलितमाह तस्मादिति अत्रायं प्रयोगः सद्वस्तु स्वगतभेदशून्यं भवितुमर्हति निरवयवत्वाद्गगनवदिति ॥ २३ ॥ मा भूत्स्वगतभेदः सजातीयभेदः किं न स्यादित्याशंक्य तत्सजातीयं सदंतरमिति वक्तव्यं न तन्निरूपयितुं शक्यते सतो वैलक्षण्याभावादित्याह सदंतरमिति ननु घटसत्ता पटसत्तेति सतो भेदः प्रतिभासते इत्याशंक्य घटाकाशमठाकाशवदौपाधिको भेदो न स्वतो भातीत्याह नामरूपोपाधिभेदमिति अत्रायं प्रयोगः सद्वस्तु सजातीयभेदरहितं भवितुमर्हति उपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वात् गगनवदिति ॥ २४ ॥ भवतु तर्हि विजातीयाद्भेदः इत्याशंक्य सतो वि-

यमसत्तत्तु न खल्वस्तीति गम्यते ॥ नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः ॥ २५ ॥ एकमेवाद्वितीयं सत्सिद्धमत्र तु केचन ॥ विव्हला असदेवेदं पुरासीदित्यवर्णयन् ॥ २६ ॥ मग्नस्याब्धौ यथाऽक्षाणि विव्हलानि तथास्य धीः ॥ अखंडैकरसं श्रुत्वा निःप्रचारा बिभेत्यतः ॥ २७ ॥ गौडाचार्या निर्विकल्पे समाधावन्ययोगिनाम् ॥ साकारब्रह्मनिष्ठानामत्यंतं भयमूचिरे ॥ २८ ॥ अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिभिः ॥ योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ २९ ॥ भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून् ॥ आहुर्माध्यमिकान् भ्रांतानचिंत्येऽस्मिन्सदात्मनि ॥ ३० ॥ अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः ॥ आपेदिरे

---

जातीयमसत्तस्यासत्वेनैव प्रतियोगित्वासंभवेन तत्प्रातियोगिकोऽपि भेदो नास्तीत्याह विजातीयमिति ॥ २५ ॥ फलितमाह एकमेवेति इदानीं स्थूणानिखननन्यायेन सदद्वैतमेव द्रढयितुं पूर्वपक्षमाह अत्रात्विति ॥ २६ ॥ विव्हलत्वे दृष्टांतमाह मग्नस्येति दार्ष्टांतिके योजयति तथेति अस्यासद्वादिनो जातावेकवचनं धीरंतकरणमखंडैकरसं वस्तु श्रुत्वा निःप्रचारा साकारवस्तुनीवाखंडैकरसे वस्तुनि प्रचाररहिता सती अतोऽस्माद्वस्तुनो बिभेति ॥ २७ ॥ उक्तार्थे आचार्यसंमतिं दर्शयति गौडाचार्या इति ॥ २८ ॥ केन वाक्येनोक्तवंत इत्याकांक्षायां तदीयं वार्तिकमेव पठति अस्पर्शेति योऽयं अस्पर्शयोगाख्यो निर्विकल्पः समाधिः एष सर्वयोगिभिः साकारध्याननिष्ठैर्दुर्दर्शः दुःखेन द्रष्टुं योग्यः दुष्प्राप इत्यर्थः तत्रोपपत्तिमाह योगिन इति हि यस्मात्कारणाद्योगिनः पूर्वोक्तद्वैतदार्शिनः अभये भयशून्ये समाधौ निर्जने देशे बाला इव भयदर्शिनो भयहेतुत्वं कल्पयंतः अस्मादस्पर्शयोगाद्भीतिं प्राप्नुवंति ॥ २९ ॥ श्रीमदाचार्यैरप्येतदभिहितामित्याह भगवदिति ॥ ३० ॥ तद्वार्तिकं पठति अनादृत्ये-

निरात्मत्वमनुमानैकचक्षुषः ॥ ३१ ॥ शून्यमासीदिति ब्रूषे सद्योगं वा सदात्मताम् ॥ शून्यस्य न तु तद्युक्तमुभयं व्याहतत्वतः॥३२॥ न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः॥ सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथं वद ॥ ३३ ॥ वियदादेर्नामरूपे मायया सुविकल्पिते ॥ शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम् ॥ ३४॥ सतोऽपि नामरूपे द्वे कल्पिते चेत्तदा वद ॥ कुत्रेति निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते ॥ ३५॥ सदासीदितिशब्दार्थभेदे वैगुण्यमापतेत् ॥ अभे-

---

ति ॥ ३१ ॥ इदानीमसद्वादं विकल्प्य दूषयति शून्यमिति शून्यमासीदित्यनेन वाक्येन शून्यस्य सत्ताजातीययोगं वा सद्रूपतां वा ब्रूषे इति विकल्पार्थः तदुभयं सत्तासंबंधसद्रूपत्वलक्षणं शून्यस्य व्याहतत्वान्न युज्यते इत्यर्थः ॥ ३२ ॥ व्याहतत्वमेव दृष्टांतपूर्वकं द्रढयति न युक्त इति ॥ ३३ ॥ ननु भवन्मते वियदादीनां निर्विकल्पे ब्रह्मणि सत्त्वं व्याहतमित्याशंक्याह वियदादेरिति तर्हि शून्यस्यापि नामरूपे सद्वस्तुनि कल्पिते इति वदतो बौद्धस्यापसिद्धांतः इत्यभिप्रायेणाह शून्यस्येति ॥ ३४ ॥ ननु तर्हि शून्यस्येव सद्वस्तुनोऽपि नामरूपे कल्पिते एवांगीकर्तव्ये भवन्मते वास्तवयोर्नामरूपयोरभावादिति शंकते सतोऽपीति विकल्पासहत्वादयं पक्षः एवानुपपन्नः इत्यभिप्रायेण परिहरति तदेति अयमभिप्रायः सतो नामरूपे किं सति कल्पिते उतासति अथवा जगति नाद्यः अन्यस्य रजतादेर्नामरूपयोः अन्यत्र शुक्तिकादावारोपदर्शनात्सतो नामरूपयोः सत्येव कल्पनायोगात् न द्वितीयः असतो निरात्मकस्य चाधिष्ठानत्वायोगात् न तृतीयः सतः उत्पन्नस्य जगतः सन्नामरूपकल्पानाधिष्ठानत्वानुपपत्तेरिति मा भूदधिष्ठानं अनयोः कल्पना किं नस्यादित्याशंक्याह निरधिष्ठान इति ॥ ३५ ॥ नन्वसदेवेदमग्र आसीदित्यत्र यथा व्याघात उक्तः तथा सदेव सोम्येदमग्र आसीदित्यत्रापि दोषोऽस्तीति शंकते सदासीदितीति तथाहि सदासीदिति

दे पुनरुक्तिः स्यान्मैवं लोके तथेक्षणात् ॥ ३६ ॥ कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम् ॥ इत्यादिवासनाविष्टं प्रत्यासीत्सदितीरणम् ॥ ३७ ॥ कालाभावे पुरेत्युक्तिः कालवासनया युतम् ॥ शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शंक्यते ॥३८॥ चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ॥ अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥ ३९ ॥ तदा स्तिमितगंभीरं न तेजो न तमस्ततम् ॥ अनाख्यमनाभिव्यक्तं सत्किंचिदवशिष्यते ॥ ४० ॥ ननु भूम्यादिकं मा भूत्परमाण्वंतनाशतः ॥ कथं ते वियतोऽसत्त्वं बुद्धिमारोहती-

---

शब्दभेदयोरर्थभेदोऽस्ति न वा अस्तिचेदद्वैतहानिः नास्ति चेत्पुनरुक्तिः स्यात् अतः सदासीदित्यनुपपन्नमिति द्वितीयं पक्षमादाय परिहरति मैवमिति पुनरुक्तिदोषस्य कः परिहार इत्याशंक्याह लोके इति ॥ ३६ ॥ लोके एवंविधेषु प्रयोगेषु पुनरुक्त्यभावः कुत्र दृष्ट इत्याशंक्याह कर्तव्यमिति भवत्वेवं लोके श्रुतौ किमायातामित्यत आह इत्यादीति ॥३७॥ नन्वद्वितीये वस्तुनि भूतकालाभावात् अग्रआसीदित्युक्तिः अनुपपन्ना इत्याशंक्याह कालेति ननु जगदुत्पत्तेः पुरा जगदभावेन साद्वितीयत्वं ब्रह्मण इत्याशंक्य श्रुतिप्रवृत्तेः द्वैतवासनाविष्टश्रोतृप्रतिबोधनार्थत्वात् नातिशंकनीयमित्याह तेनेति॥ ३८ ॥ इदानीं सिद्धांतरहस्यमाह चोद्यमिति व्यवहारदशायां चोद्यादि कर्तव्यं परमार्थतःतु अद्वैतमेव तत्त्वमित्यर्थः॥३९॥ परमार्थतो द्वैताभावे स्मृतिं प्रमाणयति तदेति स्तिमितं निश्चलं गंभीरं दुरवगाहं मनसा विषयीकर्तुमशक्यं न तेजः तेजस्त्वानाधिकरणं न तमः तमसो विलक्षणं अनावरणस्वभावं ततं व्याप्तं अनाख्यं व्याख्यातुमशक्यं अनभिव्यक्तं चक्षुरादिभिरप्यविषयीकृतं सत् शून्यविलक्षणं अत एव किंचिदिदंतया निर्देष्टुमशक्यमवशिष्यते द्वैतनिषेधावधित्वेन अवतिष्ठते इत्यर्थः ॥ ४० ॥ ननु जनिमत्त्वेन अनित्यस्य भूम्यादेरसत्त्वमस्तु नित्याकाशस्य असत्त्वं कथमंगीक्रियते इति शंकते नन्विति ॥ ४१ ॥ दृष्टांता-

ति चेत् ॥ ४१ ॥ अत्यंतं निर्जगद्व्योम यथा ते बुद्धिमाश्रितम् ॥ तथैव सन्निराकाशं कुतो नाश्रयते मतिम् ॥ ४२ ॥ निर्जगद्व्योम दृष्टं चेत्प्रकाशतमसी विना ॥ क्व दृष्टं किं च ते पक्षे न प्रत्यक्षं वियत्खलु ॥ ४३ ॥ सद्वस्तु शुद्धं त्वस्माभिर्निश्चितैरनुभूयते ॥ तूष्णीं स्थितौ न शून्यत्वं शून्यबुद्धेश्च वर्जनात् ॥ ४४ ॥ सद्बुद्धिरपि चेन्नास्ति मास्त्वस्य स्वप्रभत्वतः ॥ निर्मनस्कत्वसाक्षित्वात्सन्मात्रं सुगमं नृणाम् ॥ ४५ ॥ मनो जृंभणराहित्ये यथा साक्षी निराकुलः ॥ मायाजृंभणतः पूर्वं सत्तथैव निराकुलम् ॥ ४६ ॥ निस्तत्त्वाकार्यगम्याऽस्य शक्तिर्मायाग्निशक्तिवत् ॥ न हि शक्तिः क्वचि-

---

वष्टंभेन परिहरति अत्यंतमिति अत्यंतं निर्जगज्जगन्मात्ररहितमित्यर्थः ॥ ४२ ॥ न हि दृष्टेऽनुपपन्नमिति न्यायमाश्रित्य चोदयति निर्जगदिति दर्शनमेवासिद्धमिति परिहरति प्रकाशेति अपासिद्धांतोपीत्याह किंचेति ॥ ४३ ॥ ननु दर्शनाभावः सद्वस्तुन्यपि समान इत्याशंक्य सतः सर्वानुभवसिद्धत्वान्मैवमित्याह सद्वास्त्विति ननु तूष्णीं भावे शून्यमेव इतरस्य कस्यापि प्रतीत्यभावादित्याशंक्य शून्यस्यापि शून्यप्रतीत्यभावाच्छून्यमपि न संभवतीत्याह न शून्यत्वमिति ॥ ४४ ॥ ननु तर्हि सद्बुद्ध्यभावात्सत्त्वमपि न घटते इति शंकते सद्बुद्धिरिति तस्य स्वप्रकाशत्वान्न तद्बुध्यभावोऽनिष्ट इति परिहराति मास्त्वस्येति स्वगोचरबुद्ध्यभावे कथं सद्वस्त्ववगंतु शक्यते इत्यत आह निर्मनस्कत्वेति ॥ ४५ ॥ एवं निष्प्रपंचस्य साक्षिणस्तूष्णीं स्थितौ भानं प्रदर्श्यैतदृष्टांतबलेन सृष्टेः पुरापि सद्वस्तु तथावगंतुं शक्यते इत्याह मन इति ॥ ४६ ॥ मायायाः किं लक्षणमित्यत आह निस्तत्वेति निस्तत्त्वा ज्जगत्कारणभूताद्वस्तुनः पृथक्तत्त्वरहिता कार्यगम्या वियदादिकार्यलिंगगम्या अस्य सद्वस्तुनः शक्तिः वियदादिकार्यजननसामर्थ्यं मायेत्युच्यते वस्तुस्वरूपातिरिक्तशक्तिसद्भावे दृष्टांतमाह अग्नीति यथाग्न्यादिस्वरूपातिरिक्तं स्फोटादिकार्यलिंगगम्यं वन्त्यादिनि-

त्कैश्चिद्बुध्यते कार्यतः पुरा ॥ ४७ ॥ न सद्वस्तु सतः शक्तिर्न हि वन्हेः स्वशक्तिता ॥ सद्विलक्षणतायां तु शक्तेः किं तत्त्वमुच्यताम् ॥ ४८ ॥ शून्यत्वमिति चेच्छून्यं मायाकार्यमितीरितं ॥ न शून्यं नापि सद्यादृक्तादृक्तत्त्वमिहेष्यतां ॥ ४९ ॥ नासदासीन्नो सदासीत्तदानीं किं त्वभूत्तमः ॥ सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात् ॥ ५० ॥ अत एव द्वितीयत्वं शून्यवन्न हि गण्यते ॥ न लोके चैत्रतच्छक्त्योर्जीवितं लिख्यते पृथक् ॥ ५१ ॥ शक्त्याधिक्ये जीवितं चेद्वर्धते तत्र वृद्धिकृत् ॥ न शक्तिः किंतु तत्कार्यं युद्धकृष्यादिकं तथा

---

ष्टं सामर्थ्यमस्ति तद्वदित्यर्थः शक्तेः कार्यलिंगगम्यत्वं व्यतिरेकमुखेन द्रढयति न हि शक्तिरिति ॥ ४७ ॥ एवं शक्तेः कार्यलिंगगम्यत्वमुपपाद्य निस्तत्त्वरूपतामुपपादयति न सद्वस्त्विति अयमभिप्रायः सद्वस्तुनः शक्तिः किं सती उतासती न तावत्सती तथात्वे सतोभिन्नत्वेन तच्छक्तित्वायोगात् उक्तार्थे दृष्टांतमाह नहिवन्हेरिति द्वितीयेऽपि किं नरविषाणतुल्या उत सद्विलक्षणेति विकल्पाभिप्रायेण पृच्छति सद्विलक्षणतायामिति ॥ ४८ ॥ तत्राद्यं पक्षमनूद्य दूषयति शून्यत्वमिति शून्यस्य नामरूपे च तथाचेज्जीव्यतां चिरमित्यत्रेत्यर्थः तस्माद्द्वितीयः पक्षः परिशिष्यते इत्याह न शून्यमिति मायास्वरूपं सत्त्वासत्त्वाभ्यां निर्वचनानर्हमित्याभिप्रायः ॥ ४९ ॥ अस्मिन्नर्थे श्रुतिं प्रमाणयति नासदिति तम आसीत्तमसा गूढमग्रे इत्यादि श्रुतिः प्रमाणमित्यर्थः तर्हि तम आसीदिति कथं सत्त्वमुच्यते इत्यत आह सद्योगादिति कुत इत्यत आह तन्निषेधनादिति ॥ ५० ॥ फलितमाह अत एवेति यतः स्वतः सत्त्वं मायायाः नास्ति अतः शून्यस्येव मायाया अपि द्वितीयत्वं न गण्यते हि नैवाद्रियते इत्यर्थः अनृतस्य द्वितीयत्वानंगीकारे दृष्टांतमाह नलोक इति ॥ ५१ ॥ ननु शक्त्याधिक्ये जीविताधिक्यं दृश्यते अतः शक्तेरपि पृथक् जीवितत्वमस्तीति शंकते शक्त्याधिक्य इति न शक्तिर्जीवितवर्धने कारणमपि तु तत्कार्यं युद्धकृष्यादीति परिहरति

॥ ५२ ॥ सर्वथा शक्तिमात्रस्य न पृथग्गणना क्वचित् ॥ शक्तिकार्यं तु नैवास्ति द्वितीयं शंक्यते कथं ॥ ५३ ॥ न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किंत्वेकदेशभाक् ॥ घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्तते ॥ ५४ ॥ पादोस्य सर्वा भूतानि त्रिपादस्ति स्वयंप्रभः ॥ इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः ॥ ५५ ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ इति कृष्णोऽर्जुनायाह जगतस्त्वेकदेशतां ॥ ५६ ॥ स भूमिं विश्वतो वृत्वा ह्यत्यतिष्ठद्दशांगुलं ॥ विकारावर्ति चात्रास्ति श्रुतिसूत्रकृतोर्वचः ॥ ५७ ॥ निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः ॥ तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी ॥ ५८ ॥ सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति

---

तत्रेति दार्ष्टांतिके योजयति तथेति ॥ ५२ ॥ सर्वथेति मा भूच्छक्त्या सद्वितीयत्वं सतोऽपितु तत्कार्येण तद्भवत्येवेत्याशंक्य तस्य तदानीमसत्त्वात्तेनापि न सद्वितीयत्वमित्याह शक्तिकार्यं त्विति ॥ ५३ ॥ ननु सच्छक्तिः सति सर्वत्र वर्तते उतैकदेशे नाद्यः मुक्तेः प्राप्यब्रह्माभावप्रसंगात् न द्वितीयः निरंशत्वेन विरोधित्वादित्याशंक्याद्यानंगीकारात् द्वितीये परिहारो वक्ष्यते इत्यभिप्रायेणाह नकृत्स्नेति एकदेशवृत्तौ दृष्टांतमाह घटेति ॥ ५४ ॥ शक्तेरेकदेशवृत्तित्वे प्रमाणमाह पादोस्येति ॥ ५५ ॥ न केवलं श्रुतिरेव स्मृतिरप्यस्तीत्याह विष्टभ्येति ॥ ५६ ॥ इदानीं निर्मायस्वरूपसद्भावे प्रमाणमाह स भूमिमिति विकारावर्ति च तथाहि स्थितिमाहेति सूत्रकारवचनमित्यर्थः ॥ ५७ ॥ तर्हि निरंशत्वे विरोध इत्यस्य कः परिहारः इत्याशंक्य वास्तवानिरंशत्वाभ्युपगमान्न विरोध इत्यभिप्रायेण उदाहृतश्रुत्यभिप्रायमाह निरंशेऽपीति ॥ ५८ ॥ यदर्थं ब्रह्मणि माया समर्थिता तदिदानीमाह सत्तत्त्वमिति विक्रियाः विविधत्वेन क्रियंते इति विक्रियाः कार्यविशेषा इत्यर्थः तत्र दृष्टांतमाह वर्णाइति वर्णा रक्तपीता-

विक्रियाः ॥ वर्णा भित्तिगता भित्तौ चित्रं नानाविधं यथा ॥ ५९ ॥ आद्यो विकार आकाशः सोऽवकाशस्वरूपवान् ॥ आकाशोऽस्तीति सत्तत्त्वमाकाशेप्यनुगच्छति ॥ ६० ॥ एकस्वभावं सत्तत्त्वमाकाशो द्विस्वभावकः ॥ नावकाशः सति व्योम्नि स चैषोऽपि द्वयं स्थितम् ॥ ६१ ॥ यद्वा प्रतिध्वनिर्व्योम्नो गुणो नासौ सतीक्ष्यते ॥ व्योम्नि द्वौ सध्वनी तेन सदेकं द्विगुणं वियत् ॥ ६२ ॥ या शक्तिः कल्पयेद्व्योम सा सद्व्योम्नोरभिन्नताम् ॥ आपाद्य धर्मधर्मित्वं व्यत्ययेनावकल्पयेत् ॥ ६३ ॥ सतो व्योमत्वमापन्नं

---

दयो धातुविशेषाः ॥ ५९ ॥ तत्र प्रथमं कार्यविशेषं दर्शयति आद्योइति तत्स्वरूपमाह सोऽवकाश इति आकाशस्य ब्रह्मकार्यत्वे हेतुमाह आकाशइति ॥ ६० ॥ ततः किमित्यतआह एकेति उक्तमर्थं विशदयति नावकाशइति सति सद्वस्तुन्यवकाशो नास्ति किंतु सत्स्वभाव एक एव आकाशे तु स च सत्स्वभावश्च एषोऽप्यवकाशस्वभावोऽपीति द्वयं स्थितं विद्यते इत्यर्थः ॥ ६१ ॥ सदाकाशयोरेकद्विस्वभावत्वं प्रकारांतरेण व्युत्पादयति यद्वेति प्रतिध्वनिर्व्योम्नो गुण इत्युपपादितमधस्तात् असौ प्रतिध्वनिः सद्वस्तुनि नेक्ष्यते नोपलभ्यते व्योम्नि तु सद्ध्वनी सच्छब्दौ उभावप्युपलभ्येते तेन कारणेन सदेकस्वभावं वियत् द्विगुणं द्विस्वभावकमित्यर्थः ॥ ६२ ॥ नन्वाकाशस्य सद्ब्रह्मकार्यत्वे आकाशस्य सत्तेति सत आकाशधर्मता कुतः प्रतिभातीत्याशंक्याह याशक्तिरिति या माया सद्वस्तुनि आकाशं कल्पयति सा प्रथमतः सव्द्योम्नोरभेदं कल्पयित्वा पश्चात्तद्धर्मधर्मिभावं वैपरीत्येन कल्पयति अत आकाशस्य सत्तेति भानमुपपद्यते इत्यर्थः ॥ ६३ ॥ मायया वैपरीत्यं कथं कृतमित्याशंक्याह सतइति वस्तुतत्त्वविचारे क्रियमाणे मृदो घटरूपत्वमिव सतो व्योमत्वमापन्नं सद्वस्तुन आकाशरूपत्वं प्राप्तं लौकिकाः प्राणिनः शास्त्रेषु मध्ये तार्किकाश्च तद्वैपरीत्येन व्योम्नो गगनस्य धर्मिणः सत्तां सद्रूप-

व्योम्नः सत्तां तु लौकिकाः ॥ तार्किकाश्चावगच्छंति मायाया उचितं हि तत् ॥६४॥ यद्यथा वर्तते तस्य तथात्वं भाति मानतः ॥ अन्यथात्वं भ्रमेणेतिन्यायोऽयं सार्वलौकिकः ॥ ६५ ॥ एवं श्रुतिविचारात्प्राग्यथा यद्वस्तु भासते ॥ विचारेण विपर्येति ततस्तच्चिंत्यतां वियत् ॥ ६६ ॥ भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदतः ॥ वाय्वादिष्वनुवृत्तं सन्नतु व्योमेति भेदधीः ॥ ६७ ॥ सद्वस्त्वधिकवृत्तित्वाद्धर्मि व्यो-

---

धर्मजातिं चावगच्छंति जानंति ननु अन्यस्यान्यथाप्रतीतिरनुपपन्ना इत्याशंक्याह मायायाइति तद्विपरीतदर्शनहेतुत्वं मायाया युक्तमित्यर्थः ॥ ६४ ॥ मायाया विपरीतप्रतीतिहेतुत्वं लौकिकन्यायप्रदर्शनेन स्पष्टीकरोति यद्यथेति यत् शुक्त्यादि यथा येन शुक्तिकादिरूपेण वर्तते तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरति अन्यथात्वं रजतादिरूपत्वं तद्भ्रमेण भ्रांत्या प्रतिभातीत्ययं न्यायः सर्वलोकप्रसिद्ध इत्यर्थः ॥ ६५ ॥ एवं भ्रांत्या विपरीतप्रतिभानं दर्शयित्वा तन्निवृत्त्युपायमाह एवमिति एवमुक्तेन प्रकारेण श्रुतिविचारात्प्राक् श्रुत्यर्थविचारात्पूर्वं यद्वस्तु यत्सद्रूपं ब्रह्म भ्रांत्या यथा येन गगनादिरूपेण वर्तते तच्छ्रुत्यर्थपर्यालोचनेन विपर्येति गगनादिभावं परित्यज्य सद्रूपं ब्रह्मैव भवति ततः श्रुतिविचारेण वस्तुयाथात्म्यदर्शनसंभवात्तद्वियच्चिंत्यतां विचार्यतामित्यर्थः ॥ ६६ ॥ विचारस्वरूपमेव दर्शयति भिन्नइति भिन्ने इतिप्रतिज्ञार्थे हेतुमाह शब्देति वियत्सच्छब्दयोरपर्यायत्वादित्यर्थः हेत्वंतरमाह बुद्धेश्चेति तमेवहेतुं विशदयति वाय्वादिष्विति यद्वाय्वादिषु भूतेषु सन्वायुः सत्तेज इत्येवं प्रकारेणानुवृत्तं भासते व्योम तु नैवं भासते इति यत् ज्ञानं सा भेदधीः भेदबुद्धिरित्यर्थः ॥ ६७ ॥ एवं सदाकाशयोर्भेदं प्रसाध्य व्योम्नः सत्तेति भ्रांत्या प्रतीतस्य धर्मिधर्मभावस्य विचारेण व्यत्ययं दर्शयति सद्वास्त्विति रूपरसादिष्वनुवृत्तस्य द्रव्यस्येव आकाशवाय्वादिष्वनुवृत्तस्य सतो धर्मित्वं रसादिभ्यो व्यावृत्तस्य रूपस्येव वाय्वादिभ्यो व्यावृत्तस्य नभसो धर्मत्वमित्यर्थः

न्मनस्तु धर्मता ॥ धिया सतः पृथक्कारे ब्रूहि व्योम किमात्मकम् ॥ ६८ ॥ अवकाशात्मकं तच्चेदसत्तादिति चिंत्यताम् ॥ भिन्नं सतोऽसच्च नेति वक्षि चेद्व्याहतिस्तव ॥ ६९ ॥ भातीतिचेद्भातु नाम भूषणं मायिकस्य तत् ॥ यदसद्भासमानं तन्मिथ्या स्वप्नगजादिवत् ॥ ७० ॥ जातिव्यक्ती देहिदेहौ गुणद्रव्ये यथा पृथक् ॥ वियत्सतोस्तथैवास्तु पार्थक्यं कोऽत्र विस्मयः ॥ ७१ ॥ बुद्धोऽपि भेदो नो चित्ते निरूढिं याति चेत्तदा ॥ अनैकाग्र्यात्संशयाद्वा रूढ्यभावोऽस्य ते वद ॥ ७२ ॥ अप्रमत्तो भव ध्यानादाद्येऽन्यस्मिन्विवेचनं॥ कुरु प्रमाणयुक्तिभ्यां ततो रूढतमो भवेत् ॥ ७३ ॥ ध्यानान्मानाद्युक्तितोऽपि रूढे भेदे वियत्सतोः ॥ न कदाचि-

ननु तर्हि घटाद्भिन्नरूपस्य यथा वास्तवत्वं तथा सतो भिन्नस्य नभसोऽपि स्यादित्याशंक्य सद्व्यतिरिक्तस्य नभसो दुर्निरूपत्वान्नैवमित्याह धियेति ॥ ६८ ॥ दुर्निरूपत्वमसिद्धमिति शंकते अवकाशात्मकमिति तर्हि सतो विलक्षणत्वादसदेव स्यादिति परिहराति असदिति सतो विलक्षणस्यासत्त्वं नास्तीति वदतो दोषमाह भिन्नमिति ॥ ६९ ॥ असत्त्वे भानं न स्यादित्याशंक्य तुच्छविलक्षणत्वाद्भानं न विरुध्यते इत्याह भातीतिचेदिति अविरोधं दर्शयितुं मिथ्यावस्तुनो लक्षणं सदृष्टांतमाह यदसदिति यद्वस्तु स्वरूपेणाविद्यमानमपि भासते तत्स्वप्नगजादिवन्मिथ्येत्यर्थः ॥ ७० ॥ ननु नियमेन सहोपलभ्यमानयोर्भेदो न दृष्टचर इत्याशंक्याह जातीति ॥ ७१ ॥ भेदो यद्यपि बुध्यते तथापि निश्चितो न भवतीति शंकते बुद्धोऽपीति तस्य परिहारं वक्तुं निश्चयाभावे कारणं पृच्छति अनैकाग्र्यादिति ॥ ७२ ॥ आद्ये परिहारमाह अप्रमत्तइति आद्ये प्रथमे विकल्पे ध्यानात्तत्र प्रत्ययैकतानता ध्यानमित्युक्तलक्षणादप्रमत्तो भव सावधानमना भवेति यावत् द्वितीये परिहारमाह अन्यस्मिन्निति ततः किमित्यत आह तंतइति ॥ ७३ ॥ ततोऽपि किमित्यत आह ध्यानादिति ध्यानं पूर्वो-

द्वियत्सत्यं सद्वस्तु च्छिद्रवन्न च ॥ ७४॥ ज्ञस्य भाति सदा व्योम निस्तत्त्वोल्लेखपूर्वकं ॥ सद्वस्त्वपि विभात्यस्य निश्छिद्रत्वपुरःसरम् ॥ ७५ ॥ वासनायां प्रवृद्धायां वियत्सत्यत्ववादिनम् ॥ सन्मात्राबोधयुक्तं च दृष्ट्वा विस्मयते बुधः ॥ ७६ ॥ एवमाकाशमिथ्यात्वे सत्सत्यत्वे च वासिते ॥ न्यायेनानेन वाय्वादेः सद्वस्तु प्रविविच्यतां ॥ ७७ ॥ सद्वस्तुन्येकदेशस्था माया तत्रैकदेशगम् ॥ वियत्तत्राप्येकदेशगतो वायुः प्रकल्पितः ॥ ७८ ॥ शोषस्पर्शौ गतिर्वेगो वायुधर्मा इमे मताः ॥ त्रयः स्वभावाः सन्मायाव्योम्नां ये तेऽपि वायुगाः ॥ ७९ ॥ वायुरस्तीति सद्भावः सतो वायौ पृथ-

---

क्तलक्षणं मानं भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदत इत्यत्रोक्तं युक्तिस्तु सद्वस्त्वधिकवृत्तित्वादित्यादावुक्ता एतैः ध्यानादिभिः वियत्सतोः भेदे चित्ते निरूढिं याते सति वियत्कदाचिन्न सत्यं किंतु सर्वदा मिथ्यैवावभासते सद्वस्त्वपि छिद्रवदवकाशवन्न च नैव भवतीति शेषः ॥ ७४ ॥ वियत्सत्त्वविवेचने फलमाह ज्ञस्येति ॥ ७५ ॥ वियान्मिथ्यात्वं सतो वस्तुत्वं च सदा चिंतयतः किं भवतीत्यत आह वासनायामिति बुधो वियत्सतोस्तत्त्ववेत्ता गगनस्य सत्यत्वं ब्रुवाणं निरवकाशसद्वस्त्ववबोधरहितं च दृष्ट्वा विस्मयं प्राप्नोतीत्यर्थः ॥ ७६ ॥ उक्तन्यायमन्यत्राप्यतिदिशति एवमिति ॥ ७७ ॥ नन्वाकाशकार्यस्य वायोरकारणभूतेन सद्वस्तुना तादात्म्यप्रतीत्ययोगात्सतो विवेचनमप्रयोजकमित्याशंक्य साक्षात्संबंधाभावेऽपि परंपरया संबंधोऽस्तीत्याह सद्वस्तुनीति ॥ ७८ ॥ एवं सद्वाय्वोः संबंधं प्रदर्श्य तयोर्धर्मतो भेदज्ञानाय वायौ प्रतीयमानान् धर्मानाह शोषस्पर्शाविति एवं प्रातिस्विकान् धर्मान् अभिधाय कारणतः प्राप्तांस्तानाह त्रयइति सन्मायाव्योम्नां ये त्रयः स्वभावा शीलविशेषा धर्मास्तेऽपि वायुगा वायौ विद्यंते इत्यर्थः ॥ ७९ ॥ के ते धर्मा इत्यत आह वायुरिति वायुरस्तीतिव्यवहारहेतुसद्रूपत्वं सद्वस्तुनो धर्म एकः वायौ सद्वस्तुनो विवेचिते सति

कृते ॥ निस्तत्त्वरूपता मायास्वभावो व्योमगो ध्वनिः ॥ ८० ॥ सतो ऽनुवृत्तिः सर्वत्र व्योम्नो नेति पुरेरितम् ॥ व्योमानुवृत्तिरधुना कथं न व्याहतं वचः ॥ ८१ ॥ छिद्रानुवृत्तिर्नेतीति पूर्वोक्तिरधुना त्वियम् ॥ शब्दानुवृत्तिरेवोक्ता वचसो व्याहतिः कुतः ॥ ८२ ॥ ननु सद्वस्तुपार्थक्यादसत्त्वं चेत्तदा कथम् ॥ अव्यक्तमायावैषम्यादमायामयतापि नो ॥ ८३ ॥ निस्तत्त्वरूपतैवात्र मायात्वस्य प्रयोजिका ॥ सा शक्तिकार्ययोस्तुल्या व्यक्ताव्यक्तत्वभेदिनोः ॥ ८४ ॥ सदसत्त्वविवेकस्य प्रस्तुतत्वात्स चिंत्यताम् ॥ असतोऽवांतरो भेद आस्तां तच्चिंतयात्र किम् ॥ ८५ ॥ सद्वस्तु ब्रह्म

---

यन्निस्तत्त्वरूपत्वं स मायाधर्मो द्वितीयः शब्दो व्योम्नः सकाशादागतो धर्मस्तृतीय इत्यर्थः ॥ ८० ॥ ननु व्योमविवेचनप्रस्तावे वाय्वादिष्वनुवृत्तं सत् न तु व्योमेति भेदधीरित्यत्र वाय्वादावाकाशानुवृत्तिः निवारिता इदानीं व्योमानुवृत्तिरभिधीयते अतः पूर्वोत्तरविरोध इति शंकते सत इति व्योमानुवृत्तिरधुनोच्यते इति शेषः ॥ ८१ ॥ पूर्वमवकाशलक्षणस्वरूपानुवृत्तिः निवारिता इदानीं धर्मानुवृत्तिरेव अभिधीयते न स्वरूपानुवृत्तिरतो न व्याहतिरिति परिहरति छिद्रेति ॥ ८२ ॥ ननु वायोः सद्ब्रह्मविलक्षणत्वादसत्त्वलक्षणं मायामयत्वं यद्युच्यते तर्ह्यव्यक्तरूपमायावैलक्षण्यादमायामयत्वमपि किं न स्यादिति चोदयति नन्विति ॥ ८३ ॥ नाव्यक्तत्वं मायामयत्वे प्रयोजकं किं तु निस्तत्त्वं तत्तु मायायामिव वाय्वादावप्यस्तीति न मायामयत्वहानिरिति परिहरति निस्तत्त्वेति ॥ ८४ ॥ ननु शक्तिकार्ययोरुभयोरपि निस्तत्त्वरूपतायामविशिष्टायां व्यक्ताव्यक्तत्वलक्षणो भेदः कुत इत्याशंक्य तद्विचारः प्रस्तुतानुपयुक्त इति परिहरति सदसत्त्वेति असतो मायातत्कार्यरूपस्यावांतरभेदो व्यक्ताव्यक्तत्वरूप इत्यर्थः ॥ ८५ ॥ फलितमाह सद्वस्त्विति वायौ यः सदंशस्तद्ब्रह्मरूपं शिष्टोंऽशो निस्तत्त्वादिर्वायोः स्वरूपं स च वायुः निस्तत्त्वरूपत्वादेव आका-

शिष्टोंऽशो वायुर्मिथ्या यथा वियत् ॥ वासयित्वा चिरं वायोर्मिथ्यात्वं मरुतं त्यजेत् ॥ ८६ ॥ चिंतयेद्वन्हिमप्येवं मरुतो न्यूनवर्तिनम् ॥ ब्रह्मांडावरणेष्वेषा न्यूनाधिकविचारणा ॥ ८७ ॥ वायोर्दशांशतो न्यूनो वन्हिर्वायौ प्रकल्पितः ॥ पुराणोक्तं तारतम्यं दशांशैर्भूतपंचके ॥ ८८ ॥ वन्हिरुष्णः प्रकाशात्मा पूर्वानुगतिरत्र च ॥ अस्ति वन्हिः स निस्तत्त्वः शब्दवान् स्पर्शवानपि ॥ ८९ ॥ सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजो गुणः ॥ रूपं तत्र सतः सर्वमन्यद्बुद्ध्या विविच्यताम् ॥ ९० ॥ सतो विवेचिते वन्हौ मिथ्यात्वे सति वासिते ॥ आपो दशांशतो न्यूनाः कल्पिता इति चिंतयेत् ॥ ९१ ॥ संत्यापोऽमूः शून्यतत्त्वाः सशब्द-

---

शवन्मिथ्या इत्थं वायोर्मिथ्यात्वं चिरं वासयित्वा मरुतं त्यजेत् मरुत्सत्य इति बुद्धिं त्यजेदित्यर्थः ॥ ८६ ॥ वायौ उक्तं विचारं तेजस्यप्यतिदिशति चिंतयेदिति ननु सद्वस्तुन्येकदेशस्था माया तत्र इत्यादिना वियदादीनां न्यूनाधिकभाव उक्तः स लोके न क्वापि दृश्यते इत्याशंक्याह ब्रह्मांडेति ॥ ८७ ॥ वायोः कियतांशेन न्यूनो वन्हिरित्यत आह वायोरिति तस्य वास्तवत्वशंकां वारयति वायाविति नन्वयं न्यूनाधिकभावः स्वकपोलकल्पित इत्याशंक्याह पुराणोक्तमिति ॥ ८८ ॥ वन्हेः स्वरूपमाह वन्हिरिति अत्रापि वायाविव कारणधर्मा अनुगता इत्याह पूर्वेति के ते धर्मा इत्याकांक्षायामाह अस्तीति ॥ ८९ ॥ एवमग्नौ कारणधर्मानुगत्यनुवादपूर्वकं स्वकीयं धर्मं दर्शयति सन्मायेति इत्थं सविशेषणं वन्हिस्वरूपं व्युत्पाद्य इदानीं सद्वस्तुनो वन्हिं विविनक्ति तत्रेति तत्र तेषु मध्ये सतः सद्वस्तुनोऽन्यत्सर्वं धर्मजातं मिथ्येति बुद्ध्या विविच्यतां पृथक् क्रियतामित्यर्थः ॥ ९० ॥ एवं वन्हेर्मिथ्यात्वनिश्चयानंतरमपां मिथ्यात्वं चिंतयेदित्याह सतइति ॥ ९१ ॥ अस्यापि कारणधर्मान् स्वधर्मांश्च विभज्य दर्शयति संत्यापइति शब्देन सह वर्तते इति सशब्दः सशब्दश्चासौ स्पर्शश्च सशब्दस्पर्शः तेन युक्ता

स्पर्शसंयुताः ॥ रूपवत्योऽन्यधर्मानुवृत्या स्वीयो रसो गुणः ॥ ९२ ॥ सतो विवेचितास्वप्सु तन्मिथ्यात्वे च वासिते॥ भूमिर्दशांशतो न्यूना कल्पिताप्स्विति चिंतयेत् ॥ ९३ ॥ अस्ति भूस्तत्त्वशून्यास्यां शब्दरूपशौ सरूपकौ ॥ रसश्च परतो गंधो नैजः सत्ता विविच्यताम् ॥ ९४ ॥ पृथक्कृतायां सत्तायां भूमिर्मिथ्याऽवशिष्यते ॥ भूमेर्दशांशतो न्यूनं ब्रह्मांडं भूमिमध्यगम् ॥ ९५ ॥ ब्रह्मांडमध्ये तिष्ठंति भुवनानि चतुर्दश ॥ भुवनेषु वसंतेषु प्राणिदेहा यथायथम् ॥ ९६ ॥ ब्रह्मांडलोकदेहेषु सद्वस्तुनि पृथक्कृते ॥ असंतोऽडादयो भांतु तद्भानेऽपीह का क्षतिः ॥९७॥ भूतभौतिकमायानामसमत्वेऽत्यंतवासिते ॥ सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥ ९८॥ सदद्वैतात्पृथग्भूते द्वैते भूम्यादिरूपिणि ॥ तत्तदर्थक्रिया लोके तथा दृष्टा तथैव

इत्यर्थः ॥ ९२ ॥ विवेकध्यानाभ्यामपां मिथ्यात्वं निश्चित्यानंतरं भूमेर्मिथ्यात्वं चिंतनीयमित्याह सतइति ॥ ९३ ॥ तस्या मिथ्यात्वचिंतनाय तद्धर्मानपि विभजते अस्तिभूरिति तेभ्यः सत्तामात्रं पृथक् कर्त्तव्यमित्याह सत्तेति ॥ ९४ ॥ सत्तापृथक्करणेफलमाह पृथगिति इदानीं भौतिकेभ्यो ब्रह्मांडादिभ्यः सतो विवेचनाय तदवस्थानप्रकारं दर्शयति भूमेरिति ॥ ९५॥ ब्रह्मांडेति स्पष्टम् ॥ ९६ ॥ तेषु सद्विवेचने फलमाह ब्रह्मांडेति ॥ ९७ ॥ तद्भाने का क्षतिरित्युक्तमेवार्थं स्पष्टीकरोति भूतेति भूतानामाकाशादीनां भौतिकानां ब्रह्मांडादीनां मायायाश्च तत्कारणभूताया मिथ्यात्वे विवेकध्यानाभ्यां चित्ते दृढं वासिते सति सद्वस्तुनोऽद्वैतत्वबुद्धिः कदाचिन्न विहन्यते इत्यर्थः ॥ ९८ ॥ ननु भूम्यादीनामसत्त्वे विदुषो व्यवहारलोपः प्रसज्जेत इत्याशंक्य विवेकेन मिथ्यात्वनिश्चयेऽपि भूम्यादेः स्वरूपोप-

सा ॥ ९९ ॥ सांख्यकाणादबौद्धाद्यैर्जगद्भेदो यथा यथा ॥ उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेष तथा तथा ॥ १०० ॥ अवज्ञातं सदद्वैतं निःशंकैरन्यवादिभिः ॥ एवं का क्षतिरस्माकं तद्द्वैतमवजानताम् ॥ १०१ ॥ द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत् ॥ स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते ॥ १०२ ॥ एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥ स्थित्वाऽस्यामंतकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ १०३ ॥ सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ॥ तस्यांतकालस्तद्भेदबुद्धिरेव न चेतरः ॥ १०४ ॥ यद्वांऽतकालः प्राणस्य वियोगोऽस्तु प्रसिद्धितः ॥ तस्मिन्

---

मर्दनाभावान्न व्यवहारो लुप्यते इत्याह सदद्वैतादिति ॥ ९९ ॥ ननु सत्तत्त्वस्याद्वैतरूपत्वे सांख्यादिभिरभिधीयमानस्य भेदस्य कुतो न निरासः क्रियते इत्याशंक्य व्यावहारिकभेदस्यास्माभिरभ्युपगतत्वान्न तन्निरासाय प्रयत्यते इत्याह सांख्येति ॥ १०० ॥ ननु प्रमाणसिद्धस्य सत्त्वभेदस्य अवज्ञा अनुपपन्नेत्याशंक्याह अवज्ञातमिति यथाऽन्यवादिभिः सांख्यादिभिः निःशंकैः श्रुत्यादिसिद्धस्यापि सदद्वैतस्यावज्ञा क्रियते श्रुतियुक्त्यनुभवावष्टंभेनास्माभिः तदीयद्वैतानादरणे किं हीयते इत्यर्थः ॥ १०१ ॥ ननु निःप्रयोजनेयं द्वैतावज्ञा इत्याशंक्य जीवन्मुक्तिलक्षणप्रयोजनसद्भावान्मैवमित्याह द्वैतेति ॥ १०२ ॥ न केवलं जीवन्मुक्तिरेव प्रयोजनमपितु विदेहमुक्तिरपीत्यभिप्रायेण कृष्णवाक्यमप्युदाहरति एषेति ॥ १०३ ॥ अंतकालशब्देन वर्तमानदेहपातोऽभिधीयते इत्याशंकां वारयितुं विवक्षितमर्थमाह सदद्वैतेइति सद्रूपेऽद्वैतेऽनृतरूपे द्वैते च यदन्योन्याध्यासलक्षणमैक्यज्ञानमस्ति तस्यैक्यभ्रमस्यांतकालो नाम तयोरद्वैतद्वैतयोः सत्यानृतरूपेण भेदबुद्धिरेव नापरो वर्तमानदेहपात इत्यर्थः ॥ १०४ ॥ इदानीं लोकप्रसिद्धार्थस्वीकारेऽपि न दोष इत्यभि-

कालेऽपि न भ्रांतेर्गतायाः पुनरागमः ॥१०५॥ नीरोग उपविष्टो वा रुग्णो वा विलुठन् भुवि ॥ मूर्च्छितो वा त्यजत्वेष प्राणान् भ्रांतिर्न सर्वथा ॥ १०६ ॥ दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम् ॥ परेद्युर्नानधीतः स्यात्तद्वद्विद्या न नश्यति ॥१०७॥ प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना ॥ न नश्यति न वेदांतात्प्रबलं मानमीक्ष्यते ॥ १०८ ॥ तस्माद्वेदांतसंसिद्धं सदद्वैतं न बाध्यते ॥ अंतकालेऽप्यतो भूतविवेकान्निर्वृतिः स्थिता ॥ १०९ ॥ इति पंचदश्यां महाभूतविवेकः समाप्तः ॐ ॐ ॐ ॐ ॐ ॐ

---

प्रायेणाह यद्वेति ॥ १०५ ॥ उक्तमेवार्थं प्रपंचयति नीरोग इति ॥ १०६ ॥ ननु प्राणवियोगकाले मूर्च्छादिना ज्ञाननाशे भ्रांतिः स्यादेव इत्याशंक्य ज्ञाननाशाभावे दृष्टांतमाह दिने इति यथा प्रत्यहमधीते वेदे स्वप्नसुषुप्त्याद्यवस्थायां विस्मृतेऽपि परेद्युरनधीतवेदत्वं नास्ति तथा मृतिकालेऽपि तत्त्वानुसंधानाभावेऽपि ज्ञाननाशाभाव इत्यर्थः ॥ १०७ ॥ ज्ञाननाशाभावमेवोपपादयति प्रमाणेति ॥ १०८ ॥ उपपादितमर्थमुपसंहरति तस्मादिति ॥ १०९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्येन विदुषा विरचिता महाभूतविवेकदीपिका समाप्ता ॥ ॐ ॐ ॐ ॐ ॐ

॥ इति महाभूतविवेकः ॥

---

श्रीगणेशायनमः॥अथ पंचकोशविवेकः॥गुहाहितं ब्रह्म यत्तत् पंचकोशविवेकतः ॥ बोद्धुं शक्यं ततः कोशपंचकं प्रविविच्यते ॥१॥ देहादभ्यंतरः प्राणः प्राणादभ्यंतरं मनः ॥ ततः कर्त्ता ततो भोक्ता गुहा सेयं परंपरा ॥ २ ॥ पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते ॥ देहः सोऽन्नमयो नात्मा प्राक् चोर्ध्वं तदभावतः ॥ ३ ॥ पूर्वजन्मन्यसन्नेतज्जन्म संपा-

---

श्रीगणेशाय नमः॥ अथ पंचकोशविवेकदीपिका॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ पंचकोशविवेकस्य कुर्वे व्याख्यां समासतः ॥ १ ॥ तैत्तिरीयोपनिषत्तात्पर्यव्याख्यानरूपं पंचकोशविवेकाख्यं प्रकरणमारभमाण आचार्यः तत्र श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयं सूचयन् मुखतश्चिकीर्षितं ग्रंथं प्रतिजानीते गुहाहितमिति यो वेद निहितं गुहायां परमे व्योमन्निति श्रुत्या गुहाहितत्वेनाभिहितं यत् ब्रह्म अस्ति तत् गुहाशब्दवाच्यान्नमयादिकोशपंचकाविवेकेन ज्ञातुं शक्यते ततस्तेषांकोशानां पंचकं प्रकर्षेण प्रत्यगात्मनः सकाशाद्विभज्य प्रदर्श्यते इत्यर्थः ॥१॥ ननु केयं गुहा यस्यां निहितं ब्रह्म कोशपंचकविवेकेन अवबुध्यते इत्याशंक्य श्रुत्या गुहाशब्देन विवक्षितमर्थमाह देहादिति देहादन्नमयात्प्राणः प्राणमयः अभ्यंतरः आंतरः प्राणात्प्राणमयान्मनः मनोमयः अभ्यंतर आंतरस्ततो मनोमयात्कर्त्ता विज्ञानमयः आंतर इत्यनुषज्यते ततो विज्ञानमयाद्भोक्ता आनंदमयः सोऽपि पूर्ववदांतर इत्यर्थः सेयं अन्नमयाद्यानंदमयांतानां परंपरा गुहाशब्देनोच्यते इत्यर्थः ॥२॥ इदानीमन्नमयस्य स्वरूपं तदनात्मत्वं च दर्शयति पितृभुक्तेति पितृभुक्तान्नजात् मातृपितृभुक्तात् यवव्रीह्यादिलक्षणात् अन्नाज्जायमानं यद्वीर्यमस्ति तस्माद्वीर्यात् यो देहो जातः यश्च जननानंतरं क्षीराद्यन्नेनैव वर्धते स देहोऽन्नमयोऽन्नस्य विकारः स आत्मा न भवति कुत इत्यत आह प्रागिति जन्मनः प्राक् मरणादूर्ध्वं च तदभावतः तस्य देहस्याभावादित्यर्थः विवादाध्यासितो देह आत्मा न भवति कार्यत्वाद्घटादिवदिति भावः ॥ ३ ॥ हेतुरस्तु साध्यं मा भूद्विपक्षे बाधकाभावादप्रयोज-

दयेत्कथम् ॥ भाविजन्मन्यसन्कर्म न भुंजीतेह संचितम् ॥४॥ पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः ॥ वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ॥ ५ ॥ अहंतां ममतां देहे गेहादौ च करोति यः ॥ कामाद्यवस्थया भ्रांतो नासावात्मा मनोमयः ॥ ६ ॥ लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ॥

---

कोऽयं हेतुरित्याशंक्य अकृताभ्यागमकृतविप्रणाशाख्यबाधकसद्भावान्मैवमिति परिहरति पूर्वजन्मनीति एतद्देहरूपस्यात्मनः पूर्वस्मिञ्जन्मन्यसत्त्वादेतज्जन्महेत्वदृष्टासंभवेऽप्यस्य जन्मनोऽप्यंगीक्रियमाणत्वादकृताभ्यागमः प्रसज्जेत तथा भाविजन्मन्यप्यस्य देहरूपस्यात्मनोऽसत्त्वादभावादिहानुष्ठितयोः पुण्यपापयोः फलभोक्तुरभावेन भोगमंतरेणापि कर्मक्षयः प्रसज्जेत अयं कृतविप्रणाशः एवं कृतनाशाकृताभ्यागमरूपबाधकसद्भावादात्मनः कार्यत्वं नांगीकर्तव्यमिति भावः ॥ ४ ॥ एवमन्नमयकोशस्यानात्मत्वं प्रदर्श्य प्राणमयकोशस्य स्वरूपं तदनात्मत्वं च दर्शयति पूर्णइति यो वायुर्देहे पूर्णः पादादिमस्तकपर्यंतं व्याप्तः सन्बलं यच्छन् व्यानरूपेण सामर्थ्यं प्रयच्छन् अक्षाणां चक्षुरादीनामिंद्रियाणां प्रवर्तकः प्रेरको वर्तते स वायुः प्राणमय इत्युच्यते असावप्यात्मा न भवति तत्र हेतुमाह चैतन्येति विवादाध्यासितः प्राण आत्मा न भवति जडत्वाद्घटादिवदितिभावः ॥५॥ इदानीं मनोमयस्वरूपदर्शनपूर्वकं तस्याप्यनात्मत्वमाह अहंतामिति देहेऽहंतामहंभावं गृहादौ ममतां मदीयत्वाभिमानं च यः करोति असौ मनोमय इति स आत्मा न भवति कुत इत्यत आह कामादीति हेतुगर्भं विशेषणं कामक्रोधादिवृत्तिमत्त्वेनानियतस्वभावत्वादित्यर्थः मनोमयः आत्मा न भवति विकारित्वाद्देहवदिति भावः ॥ ६ ॥ अनंतरं कर्तृशब्दवाच्यस्य विज्ञानमयस्य स्वरूपं प्रदर्शयंस्तदनात्मत्वं दर्शयति लीनेति या चिच्छायोपेता धीश्चिदाभासयुक्ता बुद्धिः सुप्तौ सुप्तिकाले लीना विलीना सती बोधे जागरणकाले आनखाग्रपर्यंतं वर्तमाना सती वपुःशरीरं व्याप्नुयात् संव्याप्य वर्तते सा विज्ञानमयश-

चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥ ७ ॥ कर्तृत्वकरणत्वाभ्यां विक्रियेतांतरिंद्रियम् ॥ विज्ञानमनसी अंतर्बहिश्चैते परस्परम् ॥ ८ ॥ काचिदंतर्मुखा वृत्तिरानंदप्रतिबिंबभाक् ॥ पुण्यभोगे भोगशांतौ निद्रारूपेण लीयते ॥ ९ ॥ कादाचित्कत्वतोऽनात्मा स्यादानंदमयोऽप्ययम् ॥ बिंबभुतो य आनंद आत्माऽसौ सर्वदास्थितेः ॥ १० ॥ ननु देहमुप-

---

ब्दभाक् विज्ञानमयशब्देनोच्यमानाऽसावप्यात्मा न भवति विलयाद्यवस्थावत्त्वात् घटादिवादित्यर्थः ॥ ७ ॥ ननु मनोबुद्ध्योरंतःकारणत्वाविशेषात् मनोमयाविज्ञानमयरूपेण कोशद्वयकल्पना अनुपपन्नेत्याशंक्य कर्तृत्वकरणत्वाभ्यां भेदसद्भावाद्घटते एव मनोमयत्वादिभेद इत्याह कर्तृत्वेति अंतरिंद्रियमंतःकरणं कर्तृत्वकरणत्वाभ्यां कर्तृरूपेण करणरूपेण च विक्रियेत परिणमते इत्यर्थः एते कर्तृकरणे विज्ञानमनसी विज्ञानमनःशब्दवाच्ये भवतः एते च परस्परं अंतर्बाहिर्भावेन वर्तेते अतः कोशद्वयमुपपद्यते इत्यर्थः ॥ ८ ॥ इदानीं भोक्तृशब्दवाच्यस्य आनंदमयस्य अनात्मत्वं दर्शयितुं तस्य च स्वरूपमाह काचिदिति पुण्यभोगे पुण्यकर्मफलानुभवकाले काचिद्धीवृत्तिरंतर्मुखा सती आनंदप्रतिबिंबभाक् आत्मस्वरूपस्यानंदस्य प्रतिबिंबं भजते सैव भोगशांतौ पुण्यकर्मफलभोगोपरमे सति निद्रारूपेण लीयते विलीना भवति सा वृत्तिरानंदमय इत्यभिप्रायः ॥ ९ ॥ तस्य अनात्मत्वमाह कादाचित्कत्वत इति अयमानंदमयोऽपि कादाचित्कत्वादात्मा न स्यादभ्रादिपदार्थवदित्यर्थः ननु विद्यमानानामानंदमयादीनां सर्वेषामात्मत्वनिरासे नैरात्म्यं प्रसज्जेतेत्याशंक्याह बिंबभूतइति बुद्ध्यादौ प्रतिबिंबतयाऽवस्थितस्य प्रियादिशब्दवाच्यस्य आनंदमयस्य बिंबभूतः कारणभूतो य आनंदः असावेव आत्मा भवति कुत इत्यत आह सर्वदेति नित्यत्वादित्यर्थः विवादाध्यासित आनंद आत्मा भवितुमर्हति नित्यत्वात् य आत्मा न भवति नासौ नित्यो यथा देहादिः गगनादेरुत्पत्तिमत्त्वेनानित्यत्वान्नानैकांतिकतेति भावः ॥ १० ॥ चोदयति नन्विति अन्न-

क्रम्य निद्रानंदांतवस्तुषु ॥ मा भूदात्मत्वमन्यस्तु न कश्चिदनुभूयते ॥ ११ ॥ बाढं निद्रादयः सर्वेऽनुभूयंते न चेतरः ॥ तथाप्येतेऽनुभूयंते येन तं को निवारयेत् ॥ १२ ॥ स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता ॥ ज्ञातृज्ञानांतराभावादज्ञेयो न त्वसत्तया ॥ १३ ॥ माधुर्यादिस्वभावानामन्यत्र स्वगुणार्पिणाम् ॥ स्वस्मिंस्त-

---

मयाद्यानंदमयांतानां कोशानामुक्तैर्हेतुभिरात्मत्वं न घटते चेन्मा घटिष्ट अन्यस्त्वात्मानुपलभ्यमानत्वान्नैव संभवतीति ॥ ११ ॥ परिहरति बाढमिति अत्र निद्राशब्देन निद्रानंदो लक्ष्यते निद्रादयो देहांता उपलभ्यंते अन्यो नानुभूयते इति यदुक्तं तत्सत्यं कथं तर्हि तदतिरिक्तस्यात्मनोऽगीकार इत्यत आह तथापीति अन्यस्यानुपलभ्यमानत्वेऽपि यद्बलादेतेषां आनंदमयादीनामुपलभ्यमानता भवति सोऽनुभवः कथं नांगीक्रियते इत्यर्थः ॥ १२ ॥ ननूक्तेभ्योऽन्य आत्मा यदि विद्यते तर्ह्युपलभ्येत नोपलभ्यते अतो नास्तीत्याशंक्याह स्वयमिति आनंदमयादीनां साक्षिणोऽनुभवरूपत्वादेवानुभाव्यत्वं नास्तीति ननु अनुभवरूपत्वेऽप्यनुभाव्यत्वं कुतो न स्यादित्याशंक्याह ज्ञात्रिति ज्ञाता च ज्ञानं च ज्ञातृज्ञाने अन्ये ज्ञातृज्ञाने ज्ञातृज्ञानांतरे तयोरभावः तस्मादज्ञेयो ज्ञातविषयो न भवतीति ज्ञात्राद्यभावाद्वा न ज्ञायते स्वस्यैवासत्त्वाद्वा किमत्र निगमने कारणमित्यत आह न त्वसत्तयेति निद्रानंदादिसाक्षित्वेनासत्त्वस्य पूर्वमेव निराकृतत्वादिति भावः ॥ १३ ॥ अनुभवरूपस्यात्मनोऽनुभाव्यत्वाभावे दृष्टांतमाह माधुर्यादीति आदिशब्देन अम्लादयो गृह्यंते माधुर्यादयः स्वभावाः सहजा धर्माविशेषा येषां ते माधुर्यादिस्वभावाः गुडादयस्तेषामन्यत्र स्वसंसृष्टपदार्थेषु चणकादिषु स्वगुणार्पिणां स्वगुणान्माधुर्यादीनर्पयंतीति स्वगुणार्पिणस्तेषां स्वस्मिन्स्वस्वरूपे गुडादिलक्षणे तदर्पणापेक्षा तेषां माधुर्यादीनां अर्पणे संपादनेऽपेक्षा आकांक्षा माधुर्यादिकं केनचित्संपादनीयमित्येवंरूपा नो नैव विद्यते किंचान्यदर्पकं नास्ति गुडादीनां माधुर्यादिप्रदं वस्त्वंतरं नास्तीत्य-

दर्पणापेक्षा नो न चास्त्यन्यदर्पकम् ॥ १४ ॥ अर्पकांतर-राहित्येऽप्यस्त्येषां तत्स्वभावता ॥ मा भूत्तथानुभाव्यत्वं बोधात्मा तु न हीयते ॥ १५ ॥ स्वयंज्योतिर्भवत्येष पुरोऽस्माद्भासतेऽखिलात् ॥ तमेव भांतमन्वेति तद्भासा भास्यते जगत् ॥ १६ ॥ येनेदं जानते सर्वं तत्केनान्येन जानताम् ॥ विज्ञातारं केन विंद्याच्छक्तं वेद्ये तु साधनम् ॥ १७ ॥ स वेत्ति वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता ॥ विदिताविदिता-

र्थः ॥ १४ ॥ सदृष्टांतं फलितमाह अर्पकांतरेति माधुर्यादिसमर्पकवस्त्वंतराभावेऽपि येषां गुडादीनां माधुर्यादिस्वभावता यथा विद्यते एवमात्मनोऽप्यनुभवविषयत्वं मा भूदनुभवरूपता तु भवत्येवेत्यर्थः ॥१५॥ उक्तार्थे प्रमाणमाह स्वयमिति अत्रायं पुरुषः स्वयंज्योतिर्भवति अस्मात्सर्वस्मात्पुरतः सुविभाति तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिश्रुतयः आत्मनः स्वप्रकाशत्वं बोधयंतीत्यर्थः ॥ १६ ॥ येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति वाक्यमर्थतः पठति येनेदमिति येन साक्षिचैतन्यरूपेण आत्मना इदं सर्वं दृश्यजातं जानते प्राणिनः तं साक्षिणमात्मानमन्येन केन साक्ष्यभूतेन जडेन जानतामवगच्छेयुः पुमांस इति शेषः अस्यैव वाक्यस्य तात्पर्यमाह विज्ञातारमिति दृश्यजातस्य ज्ञातारं केन दृश्यभूतेन विंद्याद्विजानीयान्न केनापि जानातीत्यर्थः ननु मनसा ज्ञास्यतीत्याशंक्याह शक्तमिति साधनं तु ज्ञानसाधनं तु मनो वेद्ये ज्ञातव्यविषये शक्तं समर्थं न तु ज्ञातर्यात्मनि नैव वाचा न मनसा इत्यादिश्रुतेः स्वस्यापि ज्ञेयत्वे कर्मकर्तृत्वविरोधाच्चेति भावः ॥१७॥ आत्मनः स्वप्रकाशत्वे एव स वेत्ति वेद्यं न च तस्यास्ति वेत्ता अन्यदेव तद्विदितादथो अविदितादधीतिवाक्यद्वयमपि प्रमाणमिति मन्वानस्तद्वाक्यद्वयमर्थतः पठति स वेत्तीति स आत्मा यद्यद्वेद्यं तत्तत्सर्वं वेद्यं वेत्ति तस्यात्मनो वेदिता ज्ञाता अन्यो नास्ति तद्बोधस्वरूपकं ब्रह्म विदिताविदिताभ्यां विदितं ज्ञानेन विषयीकृतं अविदितमज्ञानेनावृतं ताभ्यां

भ्यां तत्पृथग्बोधस्वरूपकम् ॥ १८ ॥ बोधेऽप्यनुभवो यस्य न कथंचन जायते ॥ तं कथं बोधयेच्छास्त्रं लोष्ठं नरसमाकृतिम् ॥ १९ ॥ जिव्हा मेऽस्ति न वेत्युक्तिर्लज्जायै केवलं यथा ॥ न बुध्यते मया बोधो बोद्धव्य इति तादृशी ॥ २० ॥ यस्मिन्यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे ॥ यद्बोधमात्रं तद्ब्रह्मेत्येवंधीर्ब्रह्मनिश्चयः ॥ २१ ॥ पंचकोशपरित्यागे साक्षिबोधावशेषतः ॥ स्वस्वरूपं स एवस्याच्छून्यत्वं तस्य

---

पृथग्विलक्षणं बोधस्वरूपत्वादेवेत्यर्थः ॥ १८ ॥ ननु विदिताविदितातिरिक्तो बोधो नानुभूयते इत्याशंक्य विदितविशेषणस्य वेदनस्यैव बोधस्वरूपत्वात्तदनुभवाभावे विदितस्याप्यनुभवाभावप्रसंगाद्बोधानुभवो ऽवश्यमंगीकर्तव्य इति सोपहासमाह बोधेऽपीति यस्य मंदस्य बोधेऽपि घटादिस्फुरणरूपेऽप्यनुभवः साक्षात्कारः कथंचन कथमपि न जायते नोत्पद्यते तं नरसमाकृतिं नरसमाकारं लोष्ठं लोष्ठवज्जडं मनुष्यं शास्त्रं कथं बोधयेत् न कथमपि बोधयेदित्यर्थः ॥ १९ ॥ बोधो न बुध्यते इत्युक्तिरेव व्याहतेति सदृष्टांतमाह जिव्हेति मे जिव्हा आस्ति न वेत्युक्तिर्भाषणं यथा लज्जायै केवलं लज्जाजननायैव भवति न बुद्धिमत्त्वज्ञापनाय जिव्हया विना भाषणानुपपत्तेः एवं मया बोधो न बुध्यते इतः परं बोद्धव्य इत्युक्तिरपि तादृशी लज्जाहेतुरेव बोधेन विना तद्व्यवहारासिद्धेरित्यर्थः ॥ २० ॥ भवत्वेवंविधःस बोधस्तथापि प्रकृते ब्रह्मावबोधे किमायातमित्याशंक्याह यस्मिन्निति लोके जगति यस्मिन्यस्मिन् घटादिलक्षणे विषये बोधो ज्ञानमस्ति तत्तदुपेक्षणे तस्य तस्य घटादिविषयस्योपेक्षणेऽनादरणे कृते साति यद्बोधमात्रं घटादि सर्वत्रानुस्यूतं यत् स्फुरणमस्ति तदेव ब्रह्मेत्येवंरूपा धीर्बुद्धिर्ब्रह्मनिश्चयो ब्रह्मावगतिरित्यर्थः ॥ २१ ॥ ननु घटादिविषयोपेक्षया तदर्थानुभवरूपं ब्रह्मावगम्यते चेत्तर्हि कोशपंचकविवेकोऽयं निःप्रयोजनः स्यादित्याशंक्य ब्रह्मणः प्रत्यग्रूपताज्ञानेन विना संसारानिवृत्तेः तथात्वावबोधोपयोगित्वान्न तस्यापि वैयर्थ्यमित्याह पंचकोशेति पंचानां

**दुर्घटम् ॥२२॥ अस्ति तावत्स्वयं नाम विवादाविषयत्वतः ॥ स्वस्मिन्नपि विवादश्चेत्प्रतिवाद्यत्र को भवेत् ॥२३॥ स्वासत्त्वं तु न कस्मैचिद्रोचते विभ्रमं विना ॥ अत एव श्रुतिर्बाधं ब्रूते चासत्त्ववादिनः ॥२४॥ असद्ब्रह्मेति चेद्वेद स्वयमेव भवेदसत् ॥ अतोऽस्य मा भूद्वेद्यत्वं स्वसत्त्वं त्वभ्युपेयताम् ॥२५॥ कीदृक् तर्हीति चेत्पृच्छेदीदृक्ता ना-**

---

कोशानामन्नमयादीनां परित्यागे बुध्याऽनात्मत्वानिश्चये कृते तत्साक्षिरूपस्य बोधस्यावशेषणात् स साक्षिरूपो बोध एव स्वस्वरूपं निजं रूपं ब्रह्मैव स्यात् नन्वन्नमयादीनां अनुभवसिद्धानां त्यागे शून्यपरिशेषः स्यादित्याशंक्याह शून्यत्वमिति तस्य साक्षिबोधस्य शून्यत्वं दुर्घटं दुःसंपाद्यमित्यर्थः ॥ २ २ ॥ दुर्घटत्वमेवोपपादयति अस्तीति स्वयंशब्दवाच्यं स्वस्वरूपं लौकिकानां वैदिकानां च मते तावदस्त्येव कुत इत्यत आह विवादेति स्वस्वरूपस्य विप्रतिपत्तिविषयत्वाभावादित्यर्थः विपक्षे बाधकमाह स्वस्मिन्निति स्वात्मन्यपि विप्रतिपत्तौ सत्यामत्रास्यां विप्रातिपत्तौ कः प्रतिवादी स्यान्न कोपीत्यर्थः ॥ २ ३ ॥ ननु स्वासत्त्ववाद्येव प्रतिवादी भविष्यतीत्याशंक्य तथाविधः कोऽपि नास्तीत्याह स्वासत्त्वमिति भ्रांतिमेकां विहायान्यस्यां दशायां स्वस्याभावः केनापि नांगीक्रियते इत्यर्थः कुत एवं निश्चीयते इत्याशंक्याह अतइति यतः कस्मैचिन्न रोचते अत एव श्रुतिरपि असत्त्ववादिनो बाधं ब्रूते ॥ २४ ॥ केयं श्रुतिरित्याकांक्षायां असन्नेवेत्यादिकां तां श्रुतिमर्थतः पठति असदिति यदि ब्रह्मासदिति जानीयात्तर्हि स्वयमेव ब्रह्मणोऽसत्त्वज्ञान्यसद्भवेत्स्वस्यैव ब्रह्मरूपत्वादित्यर्थः फलितमाह अतइति ॥ २ ५ ॥ इदानीमात्मनः स्वप्रकाशत्वं वक्तुकामस्तस्य वेद्यत्वाभावे कीदृक्स्वरूपमिति प्रश्नमुत्थापयति कीदृगिति अयमभिप्रायः आत्मन ईदृक्त्वादिना केनचिद्रूपेण वैशिष्ट्यांगीकारे तेनैव रूपेण वेद्यत्वं स्यात् तदनंगीकारे शून्यत्वमिति सत्यमीदृक्ताद्यंगीकारे तथैव वेद्यत्वं तत्तु नांगीक्रियते इत्याह ईदृगिति उपलक्षणमेतत्तादृक्त्व-

स्ति तत्र हि ॥ यदनीदृगताटृक् च तत्स्वरूपं विनिश्चिनु ॥ २६ ॥ अक्षाणां विषयस्त्वीदृक् परोक्षस्तादृगुच्यते ॥ विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता ॥ २७ ॥ अवेद्योऽप्यपरोक्षोऽतःस्वप्रकाशो भवत्ययम् ॥ सत्यं ज्ञानमनंतं चेत्यस्तीह ब्रह्मलक्षणम् ॥ २८ ॥ सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः ॥ बाधः किंसाक्षिको ब्रूहि न त्वसा-

---

स्यापि उभयाभावमेवाह यदनीदृगिति ॥ २६ ॥ न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशंक्य ईदृक्तादृक्शब्दयोः अर्थमभिदधानस्तदवाच्यत्वमुपपादयति अक्षाणामिति प्रत्यक्षस्यैव घटादेरीदृक्शब्दवाच्यत्वं दृष्टं परोक्षस्यैव धर्मादेस्तादृक्शब्दवाच्यत्वं द्रष्टुरात्मनस्तु इंद्रियजन्यज्ञानविषयत्वाभावान्नेदृक्त्वं स्वत्वेनैव परोक्षत्वाभावान्न तादृक्त्वमित्यर्थः ॥ २७ ॥ तर्हि शून्यमिति द्वितीयं पक्षं फलदर्शनव्याजेन परिहरति अवेद्यइति इंद्रियजन्यज्ञानविषयत्वाभावेऽप्यपरोक्षत्वात् स्वप्रकाश इत्यर्थः अत्रायं प्रयोगः आत्मा स्वप्रकाशः संवित्कर्मतामंतरेणापरोक्षत्वात् संवेदनवदिति न च विशेषणासिद्धो हेतुः आत्मनः संवित्कर्मत्वे कर्मकर्तृभावविरोधप्रसंगात् स्वस्वरूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यविरोध इति चेत् गमनक्रियायामपि एकस्यैव स्वरूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यातिप्रसंगात् न च साधनाविकलो दृष्टांतः संवेदनस्य संवेदनांतरापेक्षायामनवस्थानादिति तर्कमते घटो घटज्ञानेन भासते घटज्ञानमनुव्यवसायेनेति संवेदनवत्स्वप्रकाशे दृष्टांतः साधनाविकल इति चेन्न ज्ञानस्य ज्ञानांतरेण भासनाभावात् साधनविकलः नन्वात्मनः स्वप्रकाशत्वेन सिद्धत्वेऽपि ब्रह्मलक्षणाभावात् न ब्रह्मत्वसिद्धिरित्याशंक्य तल्लक्षणं तत्र योजयति सत्यमिति सत्यं ज्ञानमनंतं ब्रह्मेति श्रुत्या यद्ब्रह्मणो लक्षणमुक्तं तदात्मनि विद्यते इत्यर्थः ॥ २८ ॥ आत्मनः सत्यत्वोपपादनाय तावत्सत्यत्वस्य लक्षणमाह सत्यत्वमिति बाधशून्यत्वं सत्यत्वं सत्यमबाध्यं बाध्यं मिथ्येति तद्विवेक इति पूर्वाचार्यैरुक्तत्वात् अस्तु प्रकृते किमायातमित्यत आह

क्षिक इष्यते ॥२९॥ अपनीतेषु मूर्तेषु ह्यमूर्तं शिष्यते वियत् ॥ शक्येषु बाधितेष्वंते शिष्यते यत्तदेव तत् ॥ ३० ॥ सर्वबाधेन किंचिच्चेद्यन्न किंचित्तदेव तत् ॥ भाषा एवात्र भिद्यंते निर्बाधं तावदस्ति हि ॥३१॥ अत एव श्रुतिर्बाध्यं

---

जगदिति जगतः स्थूलसूक्ष्मशरीरादिलक्षणस्य यो बाधः सुप्तिमूर्च्छासमाधिषु अविद्यमानता तत्साक्षित्वेनैव वर्तमानस्यात्मनो बाधः किंसाक्षिकः कः साक्षी अस्य बाधस्यासौ किंसाक्षिकः न कोऽपि साक्षी विद्यते इत्यर्थः असाक्षिकोऽप्यात्मबाधः किं न स्यादित्याशंक्याह नत्विति साक्षिरहितो बाधो नाभ्युपगंतव्योऽन्यथाऽतिप्रसंगादिति भावः ॥ २९ ॥ उक्तमर्थं दृष्टांतेन स्पष्टयति अपनीतेष्विति मूर्तेषु गृहादिगतेषु घटादिष्वपनीतेषु गृहादिभ्यो निःसारितेषु सत्सु यथापनेतुमशक्यं नभ एवावशिष्यते एवं स्वव्यतिरिक्तेषु मूर्तामूर्तेषु देहेंद्रियादिषु निराकर्तुं शक्येषु नेतिनेतीतिश्रुत्या निराकृतेषु सत्सु अंते अवसाने सर्वनिराकरणसाक्षित्वेन यो बोधोऽवशिष्यते स एव बाधरहित आत्मेत्यर्थः ॥ ३० ॥ ननु प्रतीयमानस्य सर्वस्यापि निषेधे किंचिन्नावशिष्यते अतः कथं शिष्यते यत्तदेव तदित्यवशिष्टस्यात्मत्वमुच्यते इति शंकते सर्वबाधइति न किंचिदवशिष्यते इति वदतापि तथा प्रयोगसिद्धये सर्वाभावविषयं ज्ञानमवश्यमभ्युपेतव्यं अतस्तदेवास्मदभिमतात्मस्वरूपमित्यभिप्रायेण परिहरति यन्नेति न किंचिदितिशब्देन यच्चैतन्यमुच्यते तदेव तद्ब्रह्मेत्यर्थः ननु न किंचिदित्यभाववाचकेन नकिंचिच्छब्देन कथं चैतन्यमुच्यते इत्याशंक्य बाधसाक्षिणोऽवश्यमभ्युपेयत्वादभिधायकशब्देष्वेव विप्रतिपत्तिर्नाभिधेये इति परिहरति भाषेति अत्र बाधसाक्षिणि प्रत्यगात्मनि भाषा एव नकिंचित्साक्षीत्यादिशब्दा एव भिद्यंते निर्बाधं बाधरहितं साक्षिचैतन्यं तु विद्यते एवेत्यर्थः ॥ ३१ ॥ उक्तमर्थं श्रुत्यारूढं करोति अतएवेति यतः साक्षिचैतन्यमबाध्यमत एव सएषनेति नेत्यात्मेति श्रुतिरतव्द्यावृत्तिरूपतोऽनात्मपदार्थनिराकरणद्वारेण बाध्यं निराकरणयोग्यं सर्वमनात्मकवस्तुजातं बाधित्वा निराकृत्य अदो निराकर्तुमशक्यं प्रत्यक्स्वरूपं शेषयत्यवशेष-

बाधित्वा शेषयत्यदः ॥ स एष नेति नेत्यात्मेत्यतद्व्यावृत्तिरूपतः ॥ ३२ ॥ इदं रूपं तु यद्यावत्तत्त्यक्तुं शक्यतेऽखिलम् ॥ अशक्यो ह्यनिदंरूपः स आत्मा बाधवर्जितः ॥ ३३ ॥ सिद्धं ब्रह्मणि सत्यत्वं ज्ञानत्वं तु पुरेरितम् ॥ स्वयमेवानुभूतित्वादित्यादिवचनैः स्फुटम् ॥ ३४ ॥ न व्यापित्वाद्देशतोऽतो नित्यत्वान्नापि कालतः ॥ न वस्तुतोऽपि सार्वात्म्यादानंत्यं ब्रह्मणि त्रिधा ॥ ३५ ॥ देशकालान्यवस्तूनां कल्पि-

---

यति नेतिनेतीश्रुतिर्बाधयोग्यं बाधित्वा बाधितुमशक्यं अवशेषयतीत्युक्तं तत्र कीदृशं बाधितुं शक्यं कीदृशमशक्यमिति विवक्षायां तदुभयं विभज्यते दर्शयति इदंरूपमिति इदंरूपमित्येवं रूपं दृश्यत्वेनानुभूयमानं रूपं स्वरूपं यस्य देहादेस्तदिदं रूपं तुशब्दोऽवधारणे यद्यावदिति पदद्वयं सर्वदृश्योपसंग्रहार्थं एवंच सति यद्दृश्यं तदखिलं त्यक्तुं शक्यत एवेत्यर्थः संपद्यते अनिदंरूपः प्रत्यक्त्वेनेदंतयाऽवगंतुं अयोग्यः साक्षी अशक्यस्त्यक्तुमित्यर्थः हीतिनिपातेन प्रसिद्धिद्योतकेन त्यक्तुः स्वरूपत्वेन त्यागायोग्यतां सूचयति फलितमाह आत्मेति यो बाधरहितः साक्षी स एवात्मा नाहंकारादिर्दृश्य इत्यर्थः ॥ ३३ ॥ भवत्वात्मनो बाध्यत्वं प्रकृते किमायातमित्यत आह सिद्धमिति ब्रह्मणि ब्रह्मलक्षणे यत्सत्यत्वमभिहितं तदात्मनि सिद्धं भवतु सत्यत्वं ज्ञानत्वं कथमित्याकांक्षायां तत्पूर्वमेवोपपादितमित्याह ज्ञानत्वमिति स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता इत्यादिभिर्वचनैर्ज्ञानरूपत्वं पूर्वमेव सम्यगभिहितमित्यर्थः ॥ ३४ ॥ ननु सत्यत्वज्ञानत्वयोरात्मनि सिद्धत्वेऽप्यनंत्यं न घटते ब्रह्मण्यपि तस्यासिद्धेरित्याशंक्य ब्रह्मणि तावत्तत्साधयति नव्यापित्वादिति नित्यं विभुं सर्वगतं सुसूक्ष्मं आकाशवत्सर्वगतश्चनित्यः नित्यो नित्यानां चेतनश्चेतनानां इदं सर्वं यदयमात्मा सर्वं ह्येतद्ब्रह्म ब्रह्मैवेदं सर्वं इत्यादि श्रुतिषु व्यापित्वनित्यत्वसर्वात्मत्वप्रतिपादनाद्ब्रह्मणस्त्रिविधमप्यानंत्यं देशकालवस्तुकृतपरिच्छेदराहित्यमभ्युपेतव्यमित्यर्थः ॥ ३५ ॥ न केवलं श्रुतितः किंतु यु-

तत्वाच्च मायया ॥ न देशादिकृतोऽतोऽस्ति ब्रह्मानंत्यं स्फुटं ततः ॥ ३६ ॥ सत्यं ज्ञानमनंतं यद्ब्रह्म तद्वस्तु तस्य तत् ॥ ईश्वरत्वं च जीवत्वमुपाधिद्वयकल्पितम् ॥ ३७ ॥ शक्तिरस्त्यैश्वरी काचित्सर्ववस्तुनियामिका ॥ आनंदमयमारभ्य गूढा सर्वेषु वस्तुषु ॥ ३८ ॥ वस्तुधर्मा नियम्येरन् शक्त्या

क्तितोऽपीत्याह देशकालेति परिच्छेदहेतूनां देशकालान्यवस्तूनां मायया कल्पितत्वाच्च गंधर्वनगरादिभिर्गगनस्येव न देशादिभिः कृतः पारमार्थिकः परिच्छेदो ब्रह्माणि संभवति यतोऽतो ब्रह्मण्यानंत्यं तावद्व्यक्तमेव तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्रत्येवं न विचिकित्स्यामित्यों सत्यमात्मैव नृसिंहो देवो ब्रह्म भवति अयमात्मा ब्रह्मेत्यादिभिः श्रुतिभिरात्मनो ब्रह्माभेदप्रतिपादनात्तस्याप्यानंत्यं सिद्धमिति तात्पर्यं ॥ ३६ ॥ ननु जडस्य जगतो ब्रह्मण्यारोपितत्वेन ब्रह्मणः परिच्छेदकत्वाभावेऽपि चेतनयोः जीवेश्वरयोः तदसंभवात्तत्कृतपरिच्छेदवत्त्वेन आनंत्यं ब्रह्मणो न संगच्छेत इत्याशंक्य तयोरप्यौपाधिकरूपत्वेन पारमार्थिकत्वाभावान्न तयोरपि वास्तवपरिच्छेदहेतुत्वमित्यभिप्रायेणाह सत्यमिति यत्सत्यादिरूपं ब्रम्ह तद्वस्तु तदेव पारमार्थिकं तस्य ब्रह्मणो यल्लोकप्रसिद्धमीश्वरत्वं जीवत्वं च तद्वक्ष्यमाणोपाधिद्वयेन कल्पितं अतः कल्पितत्वादेव जडवज्जीवेश्वरयोरपि तत्परिच्छेदकत्वाभाव इति भावः ॥ ३७॥ किं तदुपाधिद्वयमित्याकांक्षायां तदुभयं क्रमेण दिदर्शयिषुरादावीश्वरोपाधिभूतां शक्तिं निरूपयति शक्तिरिति ऐश्वरी ईश्वरोपाधितया ईश्वरसंबंधिनी काचित्सदसत्त्वादिभीरूपैर्निर्वक्तुमशक्या सर्ववस्तुनियामिका सर्वेषामंतर्यामिब्राह्मणोक्तानां पृथिव्यादीनां नियम्यवस्तूनां नियमनकर्त्री शक्तिरस्ति सा कुत्र तिष्ठति कुतो वा नोपलभ्यते इत्याशंक्याह आनंदेति आनंदमयादिषु ब्रह्मांडांतेषु सर्वेषु वस्तुषु गूढा वर्ततेऽतो नोपलभ्यते इत्यर्थः ॥ ३८ ॥ नियमेनानुपलभ्यमानायास्तस्याः असत्त्वमेव किं न स्यादितित्याशंक्य जगन्नियमनान्यथानुपपत्त्या सावश्यमभ्युपेयेत्याह वस्तुधर्मा इति वस्तूनां पृथिव्यादीनां काठिन्यद्रवत्वादयो यदा शक्त्या न व्यवस्थाप्यंते तदा ते-

नैव यदा तदा ॥ अन्योन्यधर्मसांकर्याद्विप्लवेत जगत्खलु ॥ ३९ ॥ चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा ॥ तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ॥ ४० ॥ कोशोपाधिविवक्षायां याति ब्रह्मैव जीवतां ॥ पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति ॥ ४१ ॥ पुत्रादेरविवक्षायां न पिता न पितामहः ॥ तद्वन्नेशो नापि जीवः शक्तिकोशाविवक्षणे ॥ ४२ ॥ य एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयं ॥ ब्रह्मणो

---

षां धर्माणां सांकर्याद्विमिश्रणेनैकत्रावस्थानात् जगद्विप्लवेत अनियतव्यवहारविषयतां प्राप्नुयादित्यर्थः खल्विति प्रसिद्धिं द्योतयाति ॥ ३९ ॥ ननु जडाया अस्या जगन्नियामकत्वं न युज्यते इत्याशंक्याह चिच्छायेति सा शक्तिश्चिच्छायावेशतश्चिदाभासप्रवेशाच्चेतन इव चेतनत्वमापन्ना इव विभाति प्रतीयते अतोऽस्या नियामकत्वं घटते इत्यर्थः अस्तु प्रस्तुते किमायातमित्यत आह तच्छक्तीति सा चासौ शक्तिश्चेति कर्मधारयः सैवोपाधिस्तेन संयोगः संबंधस्तस्माद्ब्रह्मैव सत्यादिलक्षणमीश्वरतां सर्वज्ञत्वादिधर्मयोगितां व्रजेत् प्राप्नुयात् ॥ ४० ॥ जीवत्वोपाधिभूतानां कोशानां प्रागेवाभिहितत्वात्तन्निमित्तकं जीवत्वमिदानीमाह कोशोपाधीति कोशा एव उपाधिः कोशोपाधिस्तद्विवक्षायां पर्यालोचनायां क्रियमाणायां ब्रह्मैव सत्यादिलक्षणमेव जीवतां जीवव्यवहारविषयतां गच्छति नन्वेकस्यैव विरुद्धधर्मद्वययोगित्वं युगपन्न क्वापि दृष्टचरमित्याशंक्याह पितेति यथैक एव देवदत्त एकदैव पुत्रं प्रति पिता भवति पौत्रं प्रति तु पितामह एवं ब्रह्मापि कोशोपाधिविवक्षायां जीवो भवति शक्त्युपाधिविवक्षायां ईश्वरश्च भवतीत्यर्थः ॥ ४१ ॥ वस्तुतस्तु जीवत्वमीश्वरत्वं वा ब्रह्मणो नास्तीत्येतत्सदृष्टांतमाह पुत्रादेरिति ॥ ४२ ॥ इदानीमुक्तज्ञानस्य फलमाह यएवमिति यः साधनचतुष्टयसंपन्न एवमुक्तेन प्रकारेण पंचकोशविवेकपुरःसरं ब्रह्म प्रत्यगभिन्नं सत्यादिलक्षणं वेद साक्षात्करोति एष स्वयं ब्रह्मैव भवति सयोह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति ब्रह्मविदाप्नोति

नास्ति जन्मातः पुनरेष न जायते ॥ ४३ ॥ इति पंचदश्यां पंचकोशविवेकः ॥ ३ ॥ ॐ ॐ ॐ ॐ ॐ ॐ

---

परम् इत्यादिश्रुतिभ्यःततोऽपि किमित्यत आह ब्रह्मणइति न जायते म्रियते वा विपश्चिदित्यादिश्रुतेः ब्रह्मणस्तावज्जन्म नास्ति अत एव विद्वानपि स्वात्मनस्तद्रूपत्वावगमान्नैव जायते न स पुनरावर्तते इति श्रुतेरिति ॥ ४३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता पंचकोशविवेकव्याख्यासमाप्ता ॥ ३ ॥ ॐ ॐ ॐ

॥ इति पंचकोशविवेकः ॥

द्वैतविवेकः प्रकरणं ४.



**श्री० अथ द्वैतविवेकः ॥ ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते ॥ विवेके सति जीवेन हेयो बंधः स्फुटीभवेत् ॥ १ ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ स मायी सृजतीत्याहुः श्वेताश्वतरशाखिनः ॥ २ ॥ आत्मा वा इदमग्रेऽभूत्स ईक्षत सृजा इति ॥ संकल्पेनासृजल्लोकान्स एता-**

---

श्री० अथ द्वैतविवेकव्याख्या ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ मया द्वैतविवेकस्य क्रियते पदयोजना ॥ १ ॥ चिकीर्षितस्य ग्रंथस्य निष्प्रत्यूहपरिपूरणाय अभिलषितदेवतातत्त्वानुस्मरणलक्षणमंगलमाचरन् अस्य वेदांतप्रकरणत्वाच्छास्त्रीयमेवानुबंधचतुष्टयं सिद्धवत्कृत्य ग्रंथारंभं प्रतिजानीते ईश्वरेणेति ईश्वरेण कारणोपाधिकेनांतर्यामिणा जीवेनापि कार्योपाधिकेनाहंप्रत्ययिना च सृष्टमुत्पादितं द्वैतं जगद्विविच्यते विभज्य प्रदर्श्यते अस्य द्वैतविवेचनस्य काकदंतपरीक्षावन्निष्प्रयोजनत्वं वारयति विवेकइति विवेके सति जीवेश्वरसृष्टयोर्द्वैतयोर्विवेचने कृते सति जीवेन पूर्वोक्तेन हेयः परित्याज्यो बंधो बंधहेतुर्द्वैतं स्फुटीभवेत्स्पष्टतां गच्छेत् एतावज्जीवेन हेयमिति निश्चीयते इत्यर्थः ॥ १ ॥ नन्वदृष्टद्वारा जीवानामेव जगद्धेतुत्वं वादिनो वर्णयंति अतः कथमीश्वरसृष्टत्वमुच्यते जगत इत्याशंक्य बहुश्रुतिविरोधान्नेदं चोद्यमुत्थापयितुमर्हति इत्यभिप्रेत्य श्वेताश्वतरवाक्यं तावदर्थतः पठति मायांत्विति मायोपाधिकमीश्वरं प्रस्तुत्यास्मान्मायी सृजते विश्वमेतदिति तस्यैवेश्वरस्य जगत्स्रष्टृत्वं श्वेताश्वतरशाखिनो वर्णयंतीत्यर्थः ॥ २ ॥ ऐतरेयोपनिषद्वाक्यमर्थतोऽनुसंक्रामति आत्मेति आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचनमिषत्स ईक्षत लोकान्नुसृजा इति स इमान्लोकानसृजतेत्यनेन वाक्येनाद्वितीयस्य पर-

निति बव्हृचाः ॥ ३ ॥ खं वाय्वग्निजलोर्व्योषध्यन्नदेहाः क्रमादमी ॥ संभूता ब्रह्मणस्तस्मादेतस्मादात्मनोऽखिलाः ॥४॥ बहुस्यामहमेवातः प्रजायेयेति कामतः ॥ तपस्तप्त्वाऽसृजत्सर्वं जगदित्याह तित्तिरिः ॥५॥ इदमग्रे सदेवासीद्बहुत्वाय तदैक्षत ॥ तेजोऽबन्नांडजादीनि ससर्जेति च सामगाः ॥ ६ ॥ विस्फुलिंगा यथा वन्हेर्जायंते ऽक्षरतस्तथा ॥ विविधाश्चिज्जडा भावा इत्याथर्वणिका श्रुतिः ॥ ७ ॥ जगदव्याकृतं पूर्वमासीद्व्याक्रियताधुना ॥ दृश्याभ्यां नामरूपा-

---

मात्मन एव जगत्स्रष्टृत्वं बव्हृचा ऋक्शाखाध्यायिन आहुरित्यर्थः ॥ ३ ॥ ईश्वरस्य जगत्कारणत्वे तैत्तिरीयश्रुतिरपि प्रमाणमित्यभिप्रेत्य तद्वाक्यमर्थतः पठति द्वाभ्यां खमिति ॥ ४ ॥ सत्यं ज्ञानमनंतं ब्रह्मेत्युपक्रम्य तस्माद्वा एतस्मादात्मन आकाशः संभूतः इत्यादिना अन्नात्पुरुष इत्यंतेन वाक्येन गुहाहितत्वेन प्रत्यगभिन्नाद्ब्रह्मण आकाशादिदेहपर्यंतं जगदुत्पन्नमित्यभिधायोपरिष्टादपि सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंचनेति वाक्येन तस्यैव ब्रम्हणो जगत्सर्जनेच्छापूर्वकपर्यालोचनेन जगत्स्रष्टृत्वं तित्तिरिराहेत्यर्थः ॥ ५ ॥ छांदोग्येऽपि ब्रम्हण एव जगत्स्रष्टृत्वं श्रुतमित्याह इदमिति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति सद्रूपमद्वितीयं ब्रह्मोपक्रम्य तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेत्यादिना तस्यैवेक्षणपूर्वकं तेजोऽबन्नस्रष्टृत्वमभिधाय तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवंत्यांडजं जीवजमुद्भिज्जमित्यादिना अंडजादिशरीरनिर्मातृत्वं च सामगा वर्णयंतीत्यर्थः ॥ ६ ॥ मुंडकोपनिषद्यपि तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंते सरूपास्तथा अक्षराद्विविधाः सोम्य भावाः प्रजायंते तत्र चैवापियंतीत्यक्षरशब्दवाच्याद्ब्रम्हणो जगदुत्पत्तिः श्रूयते इत्याह विस्फुलिंगा इति ॥७॥ एवं बृहदारण्यकेऽप्यव्याकृतशब्दवाच्याद्ब्रम्हणो नामरूपात्मकं जगदुत्पन्नमिति श्रुतमित्याह द्वाभ्यां जगदिति

भ्यां विराडादिषु ते स्फुटे ॥ ८ ॥ विराण्मनुर्नरा गावः खरा-श्वाजावयस्तथा ॥ पिपीलिकावधिर्द्वंद्वमिति वाजसनेयिनः ॥ ९ ॥ कृत्वा रूपांतरं जैवं देहे प्राविशदीश्वरः ॥ इति ताः श्रुतयः प्राहुर्जीवत्वं प्राणधारणात् ॥ १० ॥ चैतन्यं यद-धिष्ठानं लिंगदेहश्च यः पुनः ॥ चिच्छाया लिंगदेहस्था त-त्संघो जीव उच्यते ॥ ११ ॥ माहेश्वरी तु माया या तस्या

---

तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौनामायमिदंरूप इति वाक्येन सृष्टेः पुरा स्पष्टनामरूपत्वेनाव्याकृतशब्दवाच्यान्मा-योपाधिकाद्ब्रम्हणो नामरूपस्पष्टीकरणलक्षणा सृष्टिरुक्ता तयोर्नाम-रूपयोर्विराडादिषु स्थूलकार्येषु स्पष्टता च तदिदमप्येतर्हि नाम-रूपाभ्यामेव व्याक्रियतेऽसौनामायमिदंरूप इति वाक्येनाभिहिता ते च विराडादय आत्मैवेदमग्रआसीत्पुरुषविध इत्यादिना एवमेव यदिदं किंच मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजतेत्यंतेन दर्शिता इत्यर्थः ॥ ८ ॥ ९ ॥ उदाहृताभिः श्रुतिभिः द्वैतसृष्ट्यभिधानानंतरं ब्रम्हणो जीवरूपेण तत्र प्रवेशोऽप्यभिहित इत्याह कृत्वेति श्रुतयः जैवं जीवसंबंधिरूपांतरं अवि-क्रियब्रम्हणो विलक्षणं विकारिरूपमित्यर्थः देहे देहजाते जीवत्वं कुत इत्यत आह जीवत्वमिति प्राणादीनां स्वामित्वेन प्रेरकत्वं प्राणधारणं त-स्माज्जैवं रूपं कृत्वा प्राविशदित्युक्तं ॥ १० ॥ किंतदित्यपेक्षायामाह चै-तन्यमिति यदधिष्ठानं लिंगदेहकल्पनाधारभूतं यच्चैतन्यमस्ति यश्च तत्र क-ल्पितो लिंगदेहो यश्च तस्मिन् लिंगदेहे वर्तमानश्चिदाभासस्तत्संघस्तेषां त्रयाणां समूहो जीवशब्देनोच्यते इत्यर्थः ॥ ११ ॥ नन्वीश्वरस्यैव जीव-रूपेण प्रविष्टत्वे तस्याज्ञत्वदुःखित्वादिविरुद्धधर्मवत्त्वं कुत इत्याशंक्याह माहेश्वरीत्विति माहेश्वरी मायिनं तु महेश्वरमिति श्रुत्युक्ता महेश्वरसं-बंधिनी या मायाऽस्ति तस्या निर्माणशक्तिवज्जगत्सर्जनसामर्थ्यवन्मोहश-क्तिश्च मोहनसामर्थ्यमप्यस्ति तदेतज्जडं मोहात्मकमितिश्रुतेः ततः किमि-त्यत आह तंजीवमिति असौ मोहनशक्तिस्तं पूर्वोक्तं जीवं मोहयति चिदानं-

निर्माणशक्तिवत् ॥ विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ ॥ १२ ॥ मोहादनीशतां प्राप्य मग्नो वपुषि शोचति ॥ ईशसृष्टमिदं द्वैतं सर्वमुक्तं समासतः ॥ १३ ॥ सप्तान्नब्राह्मणे द्वैतं जीवसृष्टं प्रपंचितं ॥ अन्नानि सप्तज्ञानेन कर्मणाऽजनयत्पिता ॥ १४ ॥ मर्त्यान्नमेकं देवान्ने द्वे पश्वन्नं चतुर्थकम् ॥ अन्यत्रितयमात्मार्थमन्नानां विनियोजनम् ॥ १५ ॥ व्रीह्यादिकं दर्शपूर्णमासौ क्षीरं तथा मनः ॥ वाक् प्राणश्चेति सप्तत्वमन्नानामवगम्यताम् ॥ १६ ॥ ईशेन यद्यप्ये-

---

दादिस्वरूपज्ञानरहितं करोति ॥ १२ ॥ ततोऽपि किमित्यत आह मोहादिति मोहात्पूर्वोक्तादनीशतामिष्टानिष्टप्राप्तिपरिहारयोरसामर्थ्यं प्राप्य वपुषि निमग्नः शरीरे तादात्म्याभिमानं गतः शोचति दुःखित्वाद्यभिमानं करोति समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान इति श्रुतेरित्यर्थः वक्ष्यमाणसांकर्यपरिहाराय वृत्तं निगमयति ईशेति समासतः संक्षेपेणेत्यर्थः ॥ १३ ॥ ननु जीवस्य द्वैतस्रष्टृत्वे किं मानमित्याशंक्याह सप्तान्नेति कथं तत्र प्रपंचितमित्याशंक्य सप्तान्नशब्दवाच्यद्वैतसृष्टिप्रतिपादकं यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति वाक्यमर्थतः संगृह्णाति अन्नानीति पिता स्वादृष्टद्वारा जगदुत्पादनेन सर्वलोकपालको जीव इत्यर्थः ॥ १४ ॥ नन्वन्नसप्तकसर्जनं किमर्थमित्याशंक्य तद्विनियोगोऽप्येकमस्य साधारणं द्वे देवानभाजयत् त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छदिति वाक्येनोक्त इत्याह मर्त्यान्नमिति विनियोजनमुक्तमिति शेषः ॥ १५ ॥ तानि च सप्तान्नान्येकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते इत्यादिना अयमात्मा वाङ्मयो मनोमयः प्राणमय इत्यंतेन वाक्यसंदर्भेणैषदूनकंडिकाद्वयरूपेण दर्शितानीत्याहव्रीह्यादिकमिति ॥ १६ ॥ ननूक्तसप्तान्नानां जगदंतःपातित्वेन ईश्वरनिर्मितत्वात् जीवनिर्मितत्वाभिधानमयुक्तमित्याशंक्य तत्स्वरूपस्येश्वरनिर्मितत्वेऽपि भोग्यत्वाकारस्य जीवनिर्मितत्वान्नैवमित्याह ईशेनेति ज्ञानकर्मभ्यां ज्ञानं विहितं प्रतिषिद्धं च देव-

तानि निर्मितानि स्वरूपतः ॥ तथापि ज्ञानकर्मभ्यां जीवोऽकार्षीत्तदन्नताम् ॥ १७॥ ईशकार्यं जीवभोग्यं जगद्द्वाभ्यां समन्वितम् ॥ पितृजन्या भर्तृभोग्या यथा योषित्तथेष्यताम् ॥ १८॥ मायावृत्त्यात्मको हीशसंकल्पः साधनं जनौ ॥ मनोवृत्त्यात्मको जीवसंकल्पो भोगसाधनम् ॥ १९ ॥ ईशनिर्मितमण्यादौ वस्तुन्येकविधे स्थिते ॥ भोक्तृधीवृत्ति नानात्वात्तद्भोगो बहुधेष्यते ॥ २०॥ हृष्यत्येको मणिं लब्ध्वा क्रुध्यत्यन्यो ह्यलाभतः ॥ पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति ॥ २१ ॥ प्रियोऽप्रिय उपेक्ष्यश्चेत्याकारा मणिगास्त्रयः ॥ सृष्टा जीवैरीशसृष्टं रूपं साधारणं

---

तापरयोषिदादिविषयध्यानं कर्म च विहितं यज्ञादिरूपं प्रतिषिद्धं हिंसादिरूपं ताभ्यामित्यर्थः तदन्नतां तेषां व्रीह्यादिप्राणांतानां स्वभोगोपकरणत्वमित्यर्थः ॥ १७ ॥ किमुक्तं भवतीति तत्राह ईशकार्यमिति जगत्सत्तात्वेन उक्तं व्रीह्यादिरूपं ईशकार्यत्वेन जीवभोग्यत्वेन च द्वाभ्यां संबद्धमित्यर्थः एकस्योभयसंबंधे दृष्टांतमाह पितृजन्येति ॥ १८ ॥ ईशजीवयोर्जगत्सर्जने किं साधनमित्यत आह मायेति ॥ १९ ॥ नन्वीशसृष्टवस्तुस्वरूपातिरिक्तो भोग्यत्वाकार एव नास्ति को जीवेन सृज्यते इत्याशंक्याह ईशनिर्मितेति एकस्मिन्नेव विषये बहुविधोपभोग उपलभ्यमानस्तत्प्रयोजकं भोग्याकारभेदं गमयतीत्यर्थः ॥ २० ॥ ननु सति भोगभेदे भोग्यभेदः कल्प्येत स एव नास्तीत्याशंक्य दृश्यमानत्वान्नैवमित्याह हृष्यतीति एको मण्यर्थी तं लब्ध्वा हृष्यति अन्यस्तथाविधस्तदलाभात् कुध्यति अत्र मणौ विषये विरक्तस्तु तं मणिं पश्यत्येव लाभालाभनिमित्तौ हर्षक्रोधौ न प्राप्नोतीत्यर्थः ॥ २१ ॥ के ते भोगभेदोपरक्ता जीवसृष्टा आकारभेदा इत्यत आह प्रियइति मणिनिष्ठाः प्रियत्वाप्रियत्वोपेक्ष्यत्वलक्षणा आकारभेदा जीवैः सृष्टास्त्रिष्वपि साधारणमनुस्यूतं यन्मणि-

त्रिषु ॥ २२ ॥ भार्या स्नुषा ननांदा च याता मातेत्यनेकधा ॥ प्रातियोगिधिया योषिद्भिद्यते न स्वरूपतः ॥२३॥ ननु ज्ञानानि भिद्यंतामाकारस्तु न भिद्यते ॥ योषिद्वपुष्यतिशयो न दृष्टो जीवनिर्मितः ॥२४॥ मैवं मांसमयी योषित्काचिदन्या मनोमयी ॥मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ॥ २५ ॥ भ्रांतिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ॥ जाग्रन्मानेन मेयस्य न मनोमयतेति चेत् ॥ २६ ॥ बाढं माने तु मेयेन योगात्स्याद्विषयाकृतिः ॥ भाष्यवार्तिककाराभ्यामयमर्थ उदीरितः ॥ २७ ॥ मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ॥ रूपादीन् व्याप्नुवच्चित्तं

---

रूपं तदीश्वरनिर्मितमित्यर्थः ॥ २२ ॥ उक्तं जीवसृष्टाकारभेदमुदाहरणांतरेण स्पष्टयति भार्येति ननांदा भर्तृभागिनी याता देवरपत्नी प्रतियोगिधिया भर्तृश्वशुरादिलक्षणप्रतियोगिगोचरया बुद्ध्यातत्तदपेक्षयेत्यर्थः ॥२३॥ ननु योषिद्विषयाणि भार्यास्नुषेत्यादिज्ञानान्येव भिन्नान्युपलभ्यंते न तु तद्विषयभूताया योषितः स्वरूपे भेदो दृश्यते अतः प्रतियोगिधिया योषिद्भिद्यते इत्युक्तमयुक्तमिति शंकते नन्विति ॥ २४ ॥ ज्ञानवैलक्षण्यस्य ज्ञेयवैलक्षण्याविनाभूतत्वात् ज्ञेयाकारभेदोऽगीकर्तव्य एवेत्याशयेन परिहरति मैवमिति ॥ २५ ॥ ननु भ्रांत्यादिस्थले बाह्यविषयाभावात् तत्रत्यं वस्तु मनोमयमस्तु प्रमितिस्थले तु तदनुपपन्नं बाह्यवस्तुनः सत्त्वादिति शंकते भ्रांतीति मानेन प्रत्यक्षादिप्रमाणेन मेयस्य प्रमेयस्येत्यर्थः ॥ २६ ॥ प्रमितिस्थले बाह्यं विषयसत्त्वमंगीकरोति बाढमिति कथं तर्हि तद्विषयस्य मनोमयत्वमुच्यते इत्यत आह मानेत्विति माने विषयाकृतिस्तु तस्य मेयेन योगात्संबंधात्स्यात् नन्विदं स्वकपोलकल्पितमित्याशंक्याह भाष्येति ॥ २७ ॥ तत्र तावद्भाष्यकारवचनमुदाहरति मूषेति यथा द्रुतं ताम्रं मूषायां सिक्तं सत्तन्निभं जायते तत्समानाकारवद्भवति तथा रूपादीन् विषयान् व्याप्नुवद्विषयीकुर्वच्चितं ध्रुवमवश्यं तन्निभं दृश्यते उपलभ्यते

तन्निभं दृश्यते ध्रुवम् ॥ २८ ॥ व्यंजको वा यथाऽऽलोको व्यंग्यस्याकारतामियात् ॥ सर्वार्थव्यंजकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ २९ ॥ मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति तत् ॥ मेयाभिसंगतं तच्च मेयाभत्वं प्रपद्यते ॥ ३० ॥ सत्येवं विषयौ द्वौ स्तो घटौ मृन्मयधीमयौ ॥ मृन्मयो मानमेयः स्यात्साक्षिभास्यस्तु धीमयः ॥ ३१ ॥ अन्वयव्यतिरेकाभ्यां धीमयो जीवबंधकृत् ॥ सत्यस्मिन् सुखदुःखे स्तस्त-

इत्यर्थः ॥ २८ ॥ ननु ताम्रादेरग्निसंपर्काद्द्रुतस्य मूषानिषिक्तस्य कठिनमूषाभिघातेन शैत्यापत्तौ मूषाकारापत्तावपि बुद्धेरमूर्तायास्ताम्रादिविलक्षणाया विषयव्याप्तावपि कुतस्तदाकारापत्तिरित्याशंक्य दृष्टांतांतरमाह व्यंजकइति यथा वा व्यंजकः प्रकाशक आलोक आतपादिर्व्यंग्यस्य प्रकाश्यस्य घटादेराकारतामाकारवत्तामियात्प्राप्नुयादेवं धीरपि सर्वार्थस्य व्यंजकत्वात् सकलपदार्थप्रकाशकत्वात् अर्थाकारा अर्थस्याकार इव आकारो यस्याः सा तथा प्रदृश्यते प्रकर्षेणोपलभ्यते इत्यर्थः ॥ २९ ॥ इदानीं वार्तिककारवचनमाह मातुरिति मातुः साधिष्ठानबुद्धिस्थचिदाभासरूपात्प्रमातुः मानाभिनिष्पत्तिः मानस्य साभासांतःकरणवृत्तिरूपस्य अभिनिष्पत्तिरुत्पत्तिःभवतीति शेषः निष्पन्नमुत्पन्नं तन्माने मेयं घटादिरूपमेति प्राप्नोति किंच तन्मानं मेयाभिसंगतं प्रमेयेण संबद्धं सन्मेयाभत्वं मेयस्याभेवाभा यस्य तन्मेयाभं तस्य भावस्तत्त्वं मेयसमानाकारतां प्रपद्यते प्राप्नोतीत्यर्थः॥ ३० ॥ भवत्वेवं प्रकृते किमायातमित्यत आह सत्येवमिति ननु मृन्मयघटस्येव मनोमय घटस्य तेनैव मनसा ग्रहीतुमशक्यत्वात् ग्राहकांतराभावाच्चासिद्धिरेव इत्याशंक्य ग्राहकांतराभावोऽसिद्ध इत्याह मृन्मयइति यथा मृन्मयो मानमेयः तथा धीमयः साक्षिभास्य इत्यर्थः ॥ ३१ ॥ भवत्वेवं द्विविधं द्वैतं अत्र कस्य हेयत्वं कस्य वा नेति न ज्ञायते इत्याशंक्य जीवसृष्टस्यैव हेयत्वमित्यभिप्रेत्य तस्य बंधहेतुत्वं दर्शयति अन्वयेति अन्वयव्यतिरेकावेव दर्शयति सत्यस्मिन्निति अ-

स्मिन्नसति न द्वयम् ॥ ३२ ॥ असत्यापि च बाह्यार्थे स्वप्नादौ बध्यते नरः ॥ समाधिसुप्तिमूर्च्छासु सत्यप्यस्मिन्न बध्यते ॥ ३३ ॥ दूरदेशं गते पुत्रे जीवत्येवात्र तत्पिता ॥ विप्रलंभकवाक्येन मृतं मत्वा प्ररोदिति ॥ ३४ ॥ मृतेऽपि तस्मिन्वार्तायामश्रुतायां न रोदिति ॥ अतः सर्वस्य जीवस्य बंधकृन्मानसं जगत् ॥ ३५ ॥ विज्ञानवादो बाह्यार्थवैयर्थ्यात्स्यादिहेति चेत् ॥ न ह्याकारमाधातुं बाह्यस्यापेक्षितत्वतः ॥ ३६ ॥ वैयर्थ्यमस्तु वा बाह्यं न वारयितुमी-

---

स्मिन्जीवसृष्टे मानसप्रपंचे सति विद्यमाने सुखदुःखे स्तो भवतः असति तु तस्मिन्न द्वयं सुखं दुःखं च नास्तीत्यर्थः ॥ ३२ ॥ ननूक्तावन्वयव्यतिरेकौ बाह्यार्थविषयौ किं न स्यातामित्यत आह असतीति नरो मनुष्य एतदुपलक्षणमन्येषामपि स्वप्नादौ स्वप्नस्मृत्यादिकाले बाह्यार्थेऽनुकूले योषिदादौ प्रतिकूले व्याघ्रादौ च पारमार्थिके विषयेऽसत्यपि अविद्यमानेऽपि बध्यते सुखदुःखाभ्यां युज्यते समाध्यादिषु तु अस्मिन्बाह्यार्थे सत्यपि न बध्यते न सुखदुःखादिभाग् भवति अतस्तद्विषयावन्वयव्यतिरेकौ न स्त इत्यर्थः ॥ ३३ ॥ मनोमयप्रपंचस्य बंधकत्वेनान्वयव्यतिरेकावुदाहरणेन स्पष्टयति दूरदेशमिति देशांतरं प्राप्ते पुत्रे तत्र जीवत्येव सत्यत्र स्वगृहे स्थितः तस्य पिता विप्रलंभकस्य मिथ्यावचनैः परवंचकस्य त्वत्पुत्रो मृत इत्येवंरूपेण वाक्येन स्वपुत्रं मृतं कल्पयित्वा प्रकर्षेण रोदनं करोति ॥ ३४ ॥ तस्मिन्नेव पुत्रे तत्रैव मृतेऽपि तन्मृतिवार्तायामश्रुतायां सत्यां न रोदनं करोति फलितमाह अतइति ॥ ३५ ॥ धीमयस्यैव जगतो बंधहेतुत्वांगीकारे बाह्यार्थापलापादपसिद्धांतापातः स्यादिति शंकते विज्ञानेति परिहरति यद्यपि मानसप्रपंचस्यैव बंधहेतुत्वं तथापि तद्धेतुत्वेन बाह्यार्थस्यापि स्वीकारान्न विज्ञानवादप्रसंग इति भावः ॥ ३६ ॥ ननु न ह्याकारसमर्पणाय बाह्यपदार्थोऽपेक्षणीयः पूर्वपूर्वमानसप्रपंचसंस्कारस्य एवोत्तरोत्तरमानसप्रपंचहेतुत्वोपपत्तेरित्याशंक्य प्रौढवादेन तदं-

इमहे ॥ प्रयोजनमपेक्षंते न मानानीति हि स्थितिः ॥ ३७॥ बंधश्चेन्मानसद्वैतं तन्निरोधेन शाम्यति ॥ अभ्यसेद्योगमेवातो ब्रम्हज्ञानेन किं वद ॥ ३८ ॥ तात्कालिकद्वैतशांतावप्यागामिजनिक्षयः ॥ ब्रम्हज्ञानं विना न स्यादिति वेदांतडिंडिमः ॥ ३९ ॥ अनिवृत्तेऽपीशसृष्टे द्वैते तस्य मृषात्मताम् ॥ वुध्वा ब्रम्हाद्वयं बोद्धुं शक्यं वस्त्वैक्यवादिनः ॥ ४० ॥ प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः ॥ विरोधिद्वैताभा-

---

गीकरोति वैयर्थ्यमिति तर्हि विज्ञानवादात्को भेद इत्यत आह बाह्यमिति विज्ञानवादिनो बाह्यार्थमेवापलपंति वयं न तथेत्ययमेव भेद इत्यर्थः प्रयोजनशून्यत्वादभ्युपगमोऽप्ययुक्त एवेत्याशंक्याह प्रयोजनमिति मानाधीना वस्तुसिद्धिः न प्रयोजनाधीना मानासिद्धस्य प्रयोजनशून्यत्वमात्रेणासत्त्वस्य लौकिकैर्वादिभिर्वाऽनभ्युपगमादिति भावः ॥ ३७ ॥ मानसद्वैतस्यैव बंधहेतुत्वे तस्य मनोनिरोधात्मकयोगेनैव निवृत्तिसंभवाद्ब्रम्हज्ञानस्य बंधनिवर्तकत्वाभ्युपगमो विरुध्येतेति शंकते बंधश्चेदिति ॥ ३८ ॥ योगेन किं द्वैतोपशमस्तात्कालिक उच्यते आत्यंतिको वेति विकल्प्याद्यमंगीकृत्य द्वितीयं दूषयति तात्कालिकेति ज्ञात्वा देवं मुच्यते सर्वपाशैर्ज्ञात्वा शिवं शांतिमत्यंतमेति यदा चर्मवदाकाशं वेष्टयिष्यंति मानवाः तदा देवमविज्ञाय दुःखस्यांतो भविष्यतीत्यादिश्रुतिष्वन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानादेव बंधनिवृत्तिरभिधीयते इति भावः ॥ ३९ ॥ ननु बाह्यद्वैतनिवारणमंतरेणाद्वितीयब्रह्मज्ञानमेव नोदीयादित्याशंक्य तन्निवारणाभावेऽपि तस्य मिथ्यात्वज्ञानादेव पारमार्थिकमद्वैतं बोद्धुं शक्यते इत्याह अनिवृत्तेपीति ॥ ४० ॥ न द्वैतमृषात्वज्ञानमद्वैतज्ञानप्रयोजकमपि तु तन्निवारणमेवेत्याभिनिवेशमानं प्रत्याह प्रलयइति प्रलये प्रलयावस्थायां तन्निवृत्तौ तु तस्य द्वैतस्य निवृत्तौ सत्यां तु विरोधिद्वैताभावेऽप्यद्वैतज्ञानविरोधित्वेन भवदभिमतस्य द्वैतस्य निवारणे सत्यपि गुरुशास्त्राद्यभावतः गुरुशास्त्रादिरूपस्य ज्ञानसाधनस्याभावाद्धेतोरद्वयं वस्तु बोद्धुं शक्यं न भवति अतस्तन्निवा-

वेऽपि न शक्यं बोद्धुमद्वयम् ॥ ४१ ॥ अबाधकं साधकं च द्वैतमीश्वरनिर्मितम् ॥ अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥ ४२ ॥ जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा ॥ उपाददीत शास्त्रीयमातत्त्वस्यावबोधनात् ॥ ४३ ॥ आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ॥ बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥ ४४ ॥ शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ॥ परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ ४५ ॥ ग्रंथमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ॥ पलालमिव धान्यार्थी त्यजेद् ग्रंथमशेषतः ॥ ४६ ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ नानुध्यायाद्बहून् श-

---

रणमप्रयोजकमिति भावः ॥ ४१ ॥ तथापि सति द्वैते कथमद्वैतज्ञानमित्याशंक्याह अबाधकमिति ईश्वरनिर्मितं द्वैतमबाधकं तन्मृषात्वज्ञानेनैवाद्वैतज्ञानोत्पत्तेरुक्तत्वात्साधकं च गुरुशास्त्रादिरूपस्य तस्य ज्ञानसाधनत्वादाकाशादिरूपद्वैतमस्माभिरपनेतुमशक्यं चेति हेतोस्तद्द्वैतमास्तां कुतः कारणाद्द्विष्यते इत्यर्थः ॥ ४२ ॥ इदानीं जीवसृष्टद्वैतं विभजते जीवेति किं तद्द्विविधमपि सदा हेयमेव नेत्याह उपाददीतेति आतत्त्वस्य अवबोधनात् तत्त्वस्यावबोधनपर्यंतमित्यर्थः ॥ ४३ ॥ किं तच्छास्त्रीयं द्वैतमित्याकांक्षायामाह आत्मेति प्रत्यग्रूपस्य ब्रह्मणो विचाराख्यं यच्छ्रवणादिकं तच्छास्त्रीयं मानसं जगदित्यर्थः नन्वातत्त्वस्यावबोधनादित्युक्तमनुपपन्नं आसुप्तेरामृतेः कालं नयेद्वेदांतचिंतयेत्युक्तत्वादित्याशंक्याह बुद्धे इति तत्त्वे ब्रह्मात्मैक्यलक्षणे बुद्धे साक्षात्कृते सतीत्यर्थः तर्ह्यासुप्तेरिति वाक्यस्य का गतिरिति चेत् दद्यान्नावसरं किंचित्कामादीनांमनागपीति पूर्वार्धे कामाद्यवसरप्रदानस्य निषिद्धत्वात्तत्परतैवेति वदामः अतो न काऽप्यनुपपत्तिरिति भावः ॥ ४४ ॥ तत्त्वबोधोत्तरकालं तद्धेयत्वप्रतिपादनपराः श्रुतीरुदाहरति शास्त्राणीत्यारभ्य ॥ ४५ ॥ ॥ ४६ ॥ ४७ ॥ तमेवैकं विजानीथेत्यनेन तमेवैकं जानथ आत्मानमन्या वा-

ब्दान् वाचो विग्लापनं हि तत् ॥ ४७ ॥ तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ ॥ यच्छेद्वाङ्मनसी प्राज्ञ इत्याद्याः श्रुतयः स्फुटाः ॥ ४८ ॥ अशास्त्रीयमपि द्वैतं तीव्रं मंदमिति द्विधा ॥ कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत् ॥ ४९ ॥ उभयं तत्त्वबोधात् प्राङ्निवार्यं बोधसिद्धये ॥ शमः समाहितत्वं च साधनेषु श्रुतं यतः ॥ ५० ॥ बोधादूर्ध्वं च तद्धेयं जीवन्मुक्तिप्रसिद्धये ॥ कामादिक्लेशबंधेन युक्तस्य न हि मुक्तता ॥ ५१ ॥ जीवन्मुक्तिरियं मा भूज्जन्माभावे त्वहंकृती ॥ तर्हि जन्मापि तेऽस्त्वेव स्वर्गमात्रात्कृती भवान् ॥ ५२ ॥ क्षयातिशयदोषेण स्वर्गो हेयो यदा तदा ॥

---

चो विमुंचथ अमृतस्यैष सेतुरिति श्रुतिरर्थतः पठितेति ॥ ४८ ॥ अशास्त्रीयस्यापि द्वैतस्यावांतरभेदमाह अशास्त्रीयमिति द्विधा द्विविधमपि क्रमेणोदाहरति कामेति इतरत् मंदमित्यर्थः ॥ ४९ ॥ किमनयोः शास्त्रीयद्वैतस्येव तत्त्वबोधोत्तरकालमेव हेयत्वं नेत्याह उभयमिति प्राङ्निवारणं किमर्थमित्यत आह बोधसिद्धये इति तत्र लिंगमाह शमइति यतस्तत्त्वबोधात्प्राक् तयोर्हेयत्वं तत एव नित्यानित्यवस्तुविवेकादिब्रम्हज्ञानसाधनेषु मध्ये शांतः समाहित इति पदाभ्यां शांतिसमाधी श्रूयेते इत्यर्थः ॥ ५० ॥ ननु तत्त्वबोधात्प्राङ्निवार्यमित्यभिधानादुत्तरकालमस्य स्वीकार्यता स्यादित्याशंक्याह बोधादिति उक्तमर्थं व्यतिरेकमुखेन द्रढयति कामादीति कामादिरूपो यः क्लेशः स एव बंधः तेन युक्तस्य बद्धस्य मुक्तता जीवन्मुक्तत्वं न हि नास्त्येवेत्यर्थः ॥ ५१ ॥ ननु जन्मादिसंसारादुद्विग्नस्यात्यंतिकपुरुषार्थरूपया विदेहमुक्त्यैवालं किमनया आपातिकया जीवन्मुक्त्येति शंकते जीवन्मुक्तिरिति ऐहिकभोगनिवृत्तिभयाज्जीवन्मुक्तित्यागे आमुष्मिकभोगनिवृत्तिभयात् विदेहमुक्तिरपि त्याज्या स्यादिति प्रतिबंद्या परिहरति तर्हीति ॥ ५२ ॥ प्रतिबंदी मोचनं शंकते क्षयेति दोषयुक्तत्वेन स्वर्गादेरत्याज्यत्वे सकलपुरुषार्थविघातकत्वेनातीव दोषरूपस्य

स्वयं दोषतमात्माऽयं कामादिः किं न हीयते ॥५३॥ तत्त्वं बुध्वाऽपि कामादीन्निःशेषं न जहासि चेत् ॥ यथेष्टाचरणं ते स्यात्कर्मशास्त्रातिलंघिनः ॥ ५४॥ बुद्धाद्वैतस्वतत्त्वस्य यथेष्टाचरणं यदि ॥ शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ ५५॥ बोधात्पुरा मनोदोषमात्रात्क्लिश्नास्यथाधुना ॥ अशेषलोकनिंदा चेत्यहो ते बोधवैभवं ॥ ५६ ॥ विड्वराहादितुल्यत्वं मा कांक्षीस्तत्त्वविद्भवान् ॥ सर्वधीदोषसंत्यागाल्लोकैः पूज्यस्व देववत् ॥ ५७॥ काम्यादिदोषदृष्ट्याद्याः कामादित्यागहेतवः ॥ प्रसिद्धो मोक्षशास्त्रेषु तानन्विष्य सुखी

---

कामादेः सुतरां त्याज्यत्वमित्याह तदेति ॥ ५३ ॥ ननु वैराग्यादिसंपादनेनात्यंतानर्थहेतोः कामादेस्त्यक्तत्वादैहिकभोगमात्रोपयोगिकामाद्यभ्युपगमे को दोष इत्याशंक्याह तत्त्वमिति तत्त्वविस्त्वाभिमानेन विधिनिषेधशास्त्रमतिक्रम्य कामाद्यधीनतया वर्तमानस्य तव यथेष्टाचरणं स्यादित्यर्थः ॥५४॥ अस्तु को दोष इत्याशंक्य तदनिष्टत्वप्रतिपादनपरं सुरेश्वराचार्यवचनमुदाहरति बुद्धाद्वैतेति बुद्धमद्वैतस्वतत्त्वमद्वैतस्वरूपं ब्रह्म येन स बुद्धाद्वैतस्वतत्त्वस्तत्त्ववित् तस्य यथेष्टाचरणं यदि स्यात् तर्हि अशुचिभक्षणादिकमपि स्यात् तथा सति शुनां तत्त्वदृशां चैव न कोऽपि विशेषः स्यादित्यर्थः ॥ ५५ ॥ एतावता किमनिष्टमापादितमित्याशंक्य सोपहासमुत्तरमाह बोधादिति तत्त्वज्ञानोदयात्प्राक्कामक्रोधादिचित्तदोषैस्तव क्लेशोऽभूत् इदानीं तु सर्वलोकनिंदामपि सहस्व इति क्लेशद्वैगुण्यमिति भावः ॥ ५६ ॥ तर्हि किं कर्तव्यमित्यत आह विड्वराहेति सर्वोत्कर्षहेतुज्ञानवान् त्वं कामादित्यागाशक्तत्वेन सर्वाधमविड्वराहादिसाम्यं मा कांक्षीः किंतु कामादिलक्षणसकलमनोदोषहानेन सर्वजनैर्देववत्पूज्यस्व पूज्यो भवेत्यर्थः॥ ५७ ॥ तत्त्यागोपायमाह काम्येति काम्याः कामनाविषयाः स्रगादय आदयो येषां द्वेष्यादीनां ते काम्यादयस्तेषां येदोषा अनित्यत्वसातिशयत्वादयस्तेषां दृष्टिः अवलोकनमाद्यं येषां कोपस्वरूपविचारादीनां ते तथोक्तास्ते-

भव ॥ ५८ ॥ त्यज्यतामेष कामादिर्मनोराज्ये तु का क्षतिः ॥ अशेषदोषबीजत्वात्क्षतिर्भगवतेरिता ॥ ५९ ॥ ध्यायतो विषयान्पुंसः संगस्तेषूपजायते ॥ संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६० ॥ शक्यं जेतुं मनोराज्यं निर्विकल्पसमाधितः ॥ सुसंपादः क्रमात्सोऽपि सविकल्पसमाधिना ॥ ६१ ॥ बुद्धतत्त्वेन धीदोपशून्येनैकांतवासिना ॥ दीर्घं प्रणवमुच्चार्य मनोराज्यं विजीयते ॥ ६२ ॥ जिते तस्मिन्वृत्तिशून्यं मनस्तिष्ठति मूकवत् ॥ एतत्पदं वसिष्ठेन रामाय बहुधेरितं ॥ ६३ ॥ दृश्यं नास्तीति बोधेन मनसो दृश्य-

षां कामादित्यागहेतुत्वे प्रमाणमाह प्रसिद्धाइति भवतु ततः किमायातमित्यत आह तानन्विष्येति ॥ ५८ ॥ ननु कामादीनामनर्थहेतुत्वात्त्याज्यत्वमस्तु मनोराज्यस्य तु अतथात्वात्तत्त्यागो नापेक्षित इति शंकते त्यज्यतामिति साक्षादनर्थहेतुत्वाभावेऽपि परंपरया तद्धेतुत्वात्त्याज्यत्वमेवेत्याभिप्रेत्य परिहरति अशेषेति ॥ ५९ ॥ परंपरयाऽनर्थहेतुत्वप्रदर्शनपरं भगवद्वाक्यमुदाहरति ध्यायतइति ॥ ६० ॥ तर्ह्यस्य मनोराज्यस्य कः परिहारोपाय इत्यत आह शक्यमिति सोऽपिकुतः सिध्यतीत्याह सुसंपाद इति ॥ ६१ ॥ नन्वष्टांगयोगयुक्तस्य तथाऽस्तु तद्राहितस्य का गतिरित्यत आह बुद्धतत्त्वेनेति बुद्धमवगतं तत्त्वं ब्रह्मात्मैक्यलक्षणं येन स बुद्धतत्त्वस्तेन कामक्रोधादिबुद्धिदोषरहितेन एकांतवासिना विजनदेशनिवासशीलेन पुरुषेण दीर्घं षड्द्वादशादिमात्रोपेतं प्रणवमोंकारमुच्चार्य मनोराज्यं विजीयते विनिवार्यते इत्यर्थः ॥ ६२ ॥ मनोराज्यविजये किं भवतीत्यत आह जिते तस्मिन्निति यथा मूकः सकलवाग्व्यवहाररहितस्तिष्ठत्येवं मनोऽपि सर्वव्यापाररहितं अवतिष्ठते इत्यर्थः अवृत्तिकमनोऽवस्थानस्य पुरुषार्थत्वे प्रमाणमाह एतत्पदमिति एतत्पदमियं दशेत्यर्थः ॥ ६३ ॥ वसिष्ठश्लोकद्वयवाक्यमुदाहरति दृश्यमिति नेह नानास्ति किंचनेत्यादिश्रुत्याऽद्वितीयब्रह्मातिरिक्तजगदभावज्ञानेन मनसः सकाशात् दृश्यनिवारणं

मार्जनम् ॥ संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ६४ ॥ विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ॥ संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ ६५ ॥ विक्षिप्यते कदाचिद्धीः कर्मणा भोगदायिना ॥ पुनः समाहिता सा स्यात्तदैवाभ्यासपाटवात् ॥ ६६ ॥ विक्षेपो यस्य नास्त्यस्य ब्रह्मवित्त्वं न मन्यते ॥ ब्रह्मैवायमिति प्राहुर्मुनयः पारदर्शिनः ॥ ६७ ॥ दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥ यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम् ॥ ६८ ॥ जीवन्मुक्तेः परा काष्ठा जीवद्वैतविवर्जनात् ॥ लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् ॥ ६९ ॥ इति श्रीमत्परमहंसपरिव्राज-

---

संपन्नं यदि तर्हि निरतिशयं मोक्षसुखं निष्पन्नमिति जानीयादित्यर्थः ॥ ६४ ॥ किंच अद्वैतशास्त्रमत्यर्थं विचारितं तथा परस्परं गुरुशिष्यादिसंवादद्वारा चिरकालं प्रत्यायितं च एवं कृत्वा किं निश्चितमित्यत आह संत्यक्तेति सम्यक्परित्यक्तकामादिवासनान्मनसस्तूष्णींभावादृतेऽधिकः पुरुषार्थो नास्तीति निश्चितमित्यर्थः ॥ ६५ ॥ एवं निर्वृत्तिकस्य चित्तस्य प्रारब्धकर्मणा विक्षेपे सति तत्प्रतीकारोपायः क इत्यपेक्षायामाह विक्षिप्यतेइति भोगप्रदेन प्रारब्धकर्मणा बुद्धिः कदाचिद्विक्षिप्यते चेत्तर्हि सा बुद्धिरभ्यासदार्ढ्यात्तदैव पुनरपि समाहिता स्यादित्यर्थः ॥ ६६ ॥ सदा चित्तविक्षेपराहितस्य ब्रह्मवित्त्वमप्यौपचारिकमित्याह विक्षेपइति पारदर्शिनो वेदांतपारगा इत्यर्थः ॥ ६७ ॥ अत्रापि वसिष्ठवाक्यमुदाहरति दर्शनादर्शनेइति यो ब्रह्म जानामि न जानामीति व्यवहारद्वयं परित्यज्य स्वयमद्वितीयचैतन्यमात्ररूपेणावतिष्ठते स स्वयं ब्रह्मैव न ब्रह्मविदित्यर्थः॥ ६८ ॥ सकलद्वैतविवेचनमुपसंहरति जीवन्मुक्तेरिति असावुक्तप्रकारा जीवन्मुक्तेः परा काष्ठा निरातिशयपर्यवसानभूमिर्जीवद्वैतस्य मनोमयप्रपंचस्य विवर्जनात्परित्यागाल्लभ्यते प्राप्यते अतःकारणादिदं जीवद्वैतमीशद्वैतादीश्वरसृष्टद्वैताद्विवेचितं विविच्य प्रदर्शितमित्यर्थः ॥ ६९ ॥ इति श्रीमत्परमहंसपरि-

काचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकृतद्वैतविवेकः समाप्तः ॥ ४ ॥ ❀ ❀ ❀ ❀ ❀

---

व्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता द्वैतविवेकपदयोजना समाप्ता ॥ ४ ॥ ❀ ❀ ❀

॥ इति द्वैतविवेकः ॥

---

# महावाक्यविवेकः

प्रकरणं ५.



अथ महावाक्यविवेकः॥ येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च॥ स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितं॥१॥ चतुर्मुखेंद्रदेवेषु मनुष्याश्वगवादिषु॥ चैतन्यमेकं ब्रह्मातः

---

श्रीगणेशाय नमः॥ अथ महावाक्यविवेकव्याख्या॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ॥ महावाक्यविवेकस्य कुर्वे व्याख्यां समासतः॥१॥ मुमुक्षोर्मोक्षसाधनब्रह्मात्मैकत्वावगतिसिद्धये प्रसिद्धानां चतुर्णां महावाक्यानां अर्थं क्रमेण निरूपयन् परमकृपालुराचार्य आदौ तावदैतरेयारण्यकगते प्रज्ञानंब्रह्मेति महावाक्ये प्रज्ञानशब्दस्यार्थमाह येनेक्षते इति येन चक्षुर्द्वारा निर्गतांतःकरणवृत्त्युपहितचैतन्येन इदं दर्शनयोग्यं रूपादिकमीक्षते पश्यति पुरुषस्तथा श्रोत्रद्वारा निर्गतांतःकरणवृत्त्युपाधिकेन येन शब्दजातं शृणोति तथैव घ्राणद्वारा निर्गतांतःकरणवृत्त्युपाधिकेन येन गंधजातं जिघ्रति येन वागिंद्रियावच्छिन्नेन व्याकरोति शब्दजातं व्याहरति येन रसनेंद्रियद्वारा निर्गतांतःकरणवृत्त्युपाधिकेन स्वाद्वस्वादू रसौ विजानाति अनुक्तसमुच्चयार्थश्चशब्दः तथाचोक्तानुक्तैः सकलेंद्रियैः अंतःकरणवृत्तिभेदैश्चोपलक्षितं यच्चैतन्यमस्ति तदेवात्र प्रज्ञानमित्युच्यते इत्यर्थः अनेन येन वा पश्यतीत्यादेः सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानीत्यंतस्यावांतरवाक्यसंदर्भस्यार्थः संक्षिप्य दर्शितः॥१॥ एवं प्रज्ञानशब्दस्यार्थमभिधाय ब्रह्मशब्दस्यार्थमाह चतुर्मुखेति उत्तमेषु देवादिषु मध्यमेषु मनुष्येषु अधमेषु अश्वगवादिषु देहधारिषु आकाशादिभूतेषु च जगज्जन्मादिहेतुभूतं यदेकं चैतन्यमास्ति तद्ब्रह्मेत्यर्थः अनेन च एष ब्रह्मैष इंद्र इत्यादेः प्रज्ञाप्रतिष्ठेत्यंतस्यावांतरवाक्यस्यार्थः संक्षिप्य दर्शितः इत्थं पदार्थमभिधाय वाक्यार्थमाह अतइति यतः सर्वत्रावस्थितं प्रज्ञानं ब्रह्म अतो मय्यपि स्थितं प्रज्ञानं ब्रह्मैव प्रज्ञानत्वाविशेषादि-

प्रज्ञानं ब्रह्ममय्यपि ॥ २ ॥ परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि ॥ बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३ ॥ स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः॥ अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहं ॥ ४ ॥ एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ॥ सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥ ५ ॥ श्रोतुर्देहेंद्रियातीतं वस्त्वत्र त्वंपदेरि-

---

त्यर्थः ॥ २ ॥ एवं ऋक्शाखागतं महावाक्यार्थं निरूप्य यजुःशाखासु मध्ये बृहदारण्यकोपनिषद्गतस्याहंब्रम्हास्मीति महावाक्यस्यार्थाविष्करणाय अहंशब्दस्यार्थमाह परिपूर्णइति परिपूर्णः स्वभावतो देशकालवस्तुभिरपरिच्छिन्नः परमात्मा अस्मिन्मायाकल्पिते जगति विद्याधिकारिणि शमादिसाधनसंपन्नत्वेन विद्यासंपादनयोग्येऽस्मिंश्छ्रवणाद्यनुष्ठानवति देहे मनुष्यादिशरीरे बुद्धेर्बुद्ध्युपलक्षितस्य सूक्ष्मशरीरस्य साक्षितया विकारित्वेनावभासकतया स्थित्वाऽवस्थाय स्फुरन् प्रकाशमानोऽहमितीर्यते लक्षणयाऽहंपदेनोच्यते इत्यर्थः ॥ ३ ॥ ब्रह्मशब्दार्थमाह स्वतइति स्वतः परिपूर्णः स्वभावतो देशकालाद्यनवच्छिन्नः पूर्वोक्तः परमात्माऽत्रास्मिन्महावाक्ये ब्रह्मशब्देन ब्रह्मेत्यनेन पदेन वर्णितः लक्षणयोक्त इत्यर्थः एतद्वाक्यगतेन अस्मीतिपदेन पदद्वयसामानाधिकरण्यलभ्यं जीवब्रह्मणोः ऐक्यं परामृश्यते इत्याह अस्मीति फलितमाह तेनेति ॥ ४ ॥ इदानीं छांदोग्यश्रुतिगतस्य तत्त्वमसीतिवाक्यस्यार्थप्रकाशनाय तत्पदलक्ष्यार्थमाह एकमेवेति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितिवाक्येन सृष्टेः पुरा स्वगतादिभेदशून्यं नामरूपरहितं यत्सद्वस्तु प्रतिपादितमस्ति अस्य सद्वस्तुनोऽधुनाऽपि सृष्ट्युत्तरकालेऽपि तादृक्त्वं विचारदृष्ट्या तथात्वं तदितिपदेनेर्यते लक्ष्यते इत्यर्थः ॥ ५ ॥ त्वंपदलक्ष्यार्थमाह श्रोतुरिति श्रोतुः श्रवणाद्यनुष्ठानेन महावाक्यार्थप्रतिपत्तुर्देहेंद्रियातीतं देहेंद्रियोपलक्षितस्थूलादिशरीरत्रयसाक्षितया तद्विलक्षणं वस्तु सद्वस्त्वेव त्वंपदेरितं वाक्यगतेन त्वामिति पदेन लक्षितमित्यर्थः एतद्वाक्यस्थेन असीतिपदे-

तम् ॥ एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥६॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥ अहंकारादिदेहांतात्प्रत्यगात्मेति गीयते ॥ ७ ॥ दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ॥ ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥ इति महावाक्यविवेकः समाप्तः ॥ ७ ७

---

न तत्त्वंपदसामानाधिकरण्यलब्धं पदार्थद्वयैक्यं शिष्यं प्रति प्रत्याय्यत इत्याह एकतेति सिद्धमर्थमाह तदैक्यमिति तयोस्तत्त्वंपदार्थयोरैक्यं प्रमाणसिद्धमेकत्वमनुभूयतां मुमुक्षुभिरित्यर्थः ॥ ६ ॥ क्रमप्राप्तस्याथर्वणवेदगतस्य अयमात्मा ब्रह्मेति वाक्यस्यार्थं व्याचिकीर्षुरादावयमात्मेति पदद्वयेन विवक्षितमर्थं क्रमेण दर्शयति स्वप्रकाशेति अयमित्युक्तितोऽयमितिशब्देन स्वप्रकाशापरोक्षत्वं स्वप्रकाशेनापरोक्षत्वं मतमभिमतं अदृष्टादिवन्नित्यपरोक्षत्वं घटादिवत् दृश्यत्वं च व्यावर्तयितुं विशेषणद्वयमिति बोद्धव्यं देहादिष्वप्यात्मशब्दप्रयोगदर्शनादत्रात्मशब्देन किं विवक्षितमित्याकांक्षायामाह अहंकारेति अहंकार आदिर्यस्य प्राणमनइंद्रियदेहसंघातस्य सोऽहंकारादिः तथा देहः अंतो यस्योक्तसंघातस्य स देहांतोऽहंकारादिश्चासौ देहांतश्चेति तथा तस्मात्प्रत्यगधिष्ठानतया साक्षितया चांतर आत्मेति गीयते अस्मिन्वाक्ये इत्यर्थः ॥ ७ ॥ ब्राह्मणादिष्वपि ब्रह्मशब्दस्य प्रयोगदर्शनात्तद्व्यावर्तनायात्रविवक्षितमर्थमाह दृश्यमानस्येति दृश्यत्वेन मिथ्याभूतस्य सर्वस्याकाशादेर्जगतस्तत्त्वमधिष्ठानतया तद्बाधावधित्वेन च पारमार्थिकं सच्चिदानंदलक्षणं यद्रूपमस्ति तद्ब्रह्मशब्देनेर्यते कथ्यते इत्यर्थः वाक्यार्थमाह तद्ब्रह्मेति यदुक्तलक्षणं ब्रह्म स्वप्रकाशात्मरूपं स्वरूपं यस्य तत्स्वप्रकाशात्मरूपकं स एवेत्यर्थः ॥ ८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता महावाक्यविवेकव्याख्या समाप्ता ॥ ५ ॥

॥ इति महावाक्यविवेकः ॥

---

## चित्रदीपः प्रकरणं ६.



श्रीगणेशाय नमः ॥ यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् ॥ परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् ॥ १ ॥ यथा धौतो घट्टितश्च लांछितो रंजितः पटः ॥ चिदंतर्यामी सूत्रात्मा विराट् चात्मा तथेर्यते ॥ २ ॥ स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोऽन्नविलेपनात् ॥ मष्याकारैर्लांछितः स्याद्रंजितो वर्णपूरणात् ॥ ३ ॥ स्वतश्चिदंतर्यामी तु मायावी सूक्ष्म-

---

श्रीगणेशाय नमः ॥ शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजं ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ १ ॥ यस्य स्मरणमात्रेण विघ्ना दूरं प्रयांति हि वंदेऽहं दंतिवक्त्रं तं वांछितार्थप्रदायकं ॥ २ ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ क्रियते चित्रदीपस्य व्याख्या तात्पर्यबोधिनी ॥ ३ ॥ चिकीर्षितस्य ग्रंथस्य निष्प्रत्यूहपरिपूरणाय परमात्मनीतिपदेनेष्टदेवतातत्त्वानुसंधानलक्षणं मंगलमाचरन्नस्य ग्रंथस्य वेदांतप्रकरणत्वात्तदीयैरेव विषयादिभिस्तद्वत्तासिद्धिं मनसि निधायाध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते इतिन्यायमनुसृत्य परमात्मन्यारोपितस्य जगतः स्थितिप्रकारं सदृष्टांतं प्रतिजानीते यथेति चित्रपटे यथा वक्ष्यमाणानां अवस्थानां चतुष्टयं तथैव परमात्मन्यपि वक्ष्यमाणमवस्थाचतुष्टयं ज्ञेयमिति ॥ १ ॥ किं तदित्याकांक्षायां दृष्टांतदार्ष्टांतिकयोरुभयोरप्यवस्थाचतुष्टयं क्रमेणोद्दिशति यथेति धौतो घट्टितो लांछितो रंजित इत्येवंप्रकाराश्चतस्रोऽवस्था यथा चित्रपटे उपलभ्यंते तथा परमात्मन्यपि चिदंतर्यामी सूत्रात्मा विराट्चेत्यवस्थाचतुष्टयं बोद्धव्यमित्यर्थः ॥ २ ॥ दृष्टांतस्थितानामवस्थानां स्वरूपं क्रमेण व्युत्पादयति स्वतइति अत्र आस्ववस्थासु मध्ये स्वतो द्रव्यांतरसंबंधं विना शुभ्रो धौत इत्युच्यते अन्नेन लिप्तो घट्टितः मषीमयैराकारैर्युक्तो लांछितः यथायोग्यं वर्णैः पूरितो रंजितः स्यात् ॥ ३ ॥ दार्ष्टांतिके

सृष्टितः ॥ सूत्रात्मा स्थूलसृष्टचैव विराडित्युच्यते परः ॥४॥ ब्रह्माद्याः स्तंबपर्यंताः प्राणिनोऽत्र जडा अपि ॥ उत्तमाधमभावेन वर्तंते पटचित्रवत् ॥ ५ ॥ चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् ॥ चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः ॥ ६ ॥ पृथक् पृथक् चिदाभासाश्चैतन्याध्यस्तदेहिनाम् ॥ कल्प्यंते जीवनामानो बहुधा संसरंत्यमी ॥७॥ वस्त्राभासास्थितान् वर्णान् यद्वदाधारवस्त्रगान् ॥ वदंत्यज्ञास्तथा जीवसंसारं चिद्गतं विदुः ॥ ८ ॥ चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्यते ॥ सृष्टिस्थमृत्तिकादीनां चिदा-

---

ताः व्युत्पादयति स्वतइति परः परमात्मा मायातत्कार्यरहितश्चिदित्युच्यते मायायोगादंतर्यामी अपंचीकृतभूतकार्यसमष्टिसूक्ष्मशरीरयोगात्सूत्रात्मा पंचीकृतभूतकार्यसमष्टिस्थूलशरीरोपाधियोगाद्विराडिति ॥ ४ ॥ ननु परमात्मनः चित्रपटस्थानीयत्वे तदाश्रितानि चित्राणि वक्तव्यानीत्यत आह ब्रह्माद्याइति अत्र परमात्मनि उत्तमाधमभावेन वर्तमानं ब्रह्मादिस्तंबपर्यंतं चेतनात्मकं गिरिनद्यादि जडजातं च चित्रस्थानीयमित्यर्थः ॥ ५ ॥ ब्रह्मादिजगतश्चेतनस्थानीयत्वे कारणं वक्तुं दृष्टांतमाह चित्रेति यथा चित्रे लिखितानां मनुष्यादिशरीराणामेव नानावर्णोपेता वस्त्रविशेषा लिख्यंते ते च शीताद्यनिवारकत्वाद्वस्त्राभासा एव ॥ ६ ॥ दार्ष्टांतिकमाह पृथगिति एवं परमात्मन्यारोपितानां देवादीनां शरीराणामेव जीवनामानश्चिदाभासाः प्रत्येकं कल्प्यंते न पर्वतादीनां तेषां तत्कल्पने कारणमाह बहुधेति अमी जीवाः देवतिर्यङ्मनुष्यादिशरीरप्राप्त्या बहुधा संसरंति न परमात्मा तस्य निर्विकारित्वादित्यभिप्रायः ॥ ७ ॥ ननु सर्वे वादिनो लौकिकाश्चात्मन एव संसार इति वदंति तत्र किं कारणमित्याशंक्य अज्ञानमेव कारणमिति सदृष्टांतमाह वस्त्राभासेति ॥ ८ ॥ गिरिनद्यादीनां तु चिदाभासकल्पनाऽभावं दृष्टांतपुरःसरमाह चित्रस्थेति प्रयोजनाभावादि-

भासस्तथा न हि ॥ ९ ॥ संसारः परमार्थोऽयं संलग्नः स्वात्मवस्तुनि ॥ इति भ्रांतिरविद्या स्याद्विद्ययैषा निवर्तते ॥ १० ॥ आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः ॥ इति बोधो भवेद्विद्या लभ्यतेऽसौ विचारणात् ॥ ११ ॥ सदा विचारयेत्तस्मात् जगज्जीवपरात्मनः॥जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥ १२ ॥ नाप्रतीतिस्तयोर्बाधः किंतु मिथ्यात्वनिश्चयः ॥ नोचेत्सुषुप्तिमूर्च्छादौ मुच्येतायत्नतो जनः ॥ १३ ॥ परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः ॥ न जगद्विस्मृतिर्नोचेज्जीवन्मुक्तिर्न संभवेत् ॥ १४॥ परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा ॥ तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥ १५ ॥ अस्ति ब्रह्मेति चेद्वेद परो-

---

ति भावः ॥ ९ ॥ एवमात्मन्यारोपितस्य संसारस्य ज्ञाननिवर्त्यत्वसिद्धये तन्मूलभूतामविद्यामाह संसारइति ॥ १० ॥ केयं विद्या तल्लाभोपायश्च क इत्याकांक्षायां विद्यास्वरूपं तल्लाभोपायं च दर्शयति आत्माभासस्येति चिदाभासस्येत्यर्थः ॥ ११ ॥ विचाराल्लभ्यते विद्येत्युक्तं कस्य विचाराल्लभ्यते विद्येत्याशंक्याह सदेति ननु परात्मा विचार्यतां मोक्षावस्थायां फलरूपेणावस्थानाज्जीवजगतोर्विचारः कोपयुज्यते इत्याशंक्य तयोरपवादेन परमात्मावशेषणे उपयुज्यते इत्याह जीवभावेति ॥ १२ ॥ ननु विचारेण जीवभावजगद्भावबाधे स्वात्मैव शिष्यते इत्युक्तविचारेण जीवजगतोर्बाधे तदप्रतीत्या व्यवहारलोपः प्रसज्जेतेत्याशंक्य बाधशब्दस्य विवक्षितमर्थं विपक्षे दंडं चाह नाप्रतीतिरिति सुषुप्तिमूर्च्छादौ स्वत एव द्वैतप्रतीत्यभावात्तत्त्वज्ञानं विनाऽपि मुक्तिः स्यादित्यर्थः ॥ १३ ॥ स्वात्मैव शिष्यते इत्यनेनापि परमात्मनः सत्यत्वज्ञानमेव विवक्ष्यते न तदतिरिक्तजगद्विस्मृतिर्जीवन्मुक्त्यभावप्रसंगादित्याह परमात्मेति ॥ १४ ॥ सदा विचारयेदित्युक्त्या देहपातपर्यंतं विचारप्रसक्तौ सत्यां तस्यावधिमाह परोक्षेति ॥ १५ ॥ विचारजन्या विद्या परोक्षत्वापरोक्षत्वभेदेन द्वेधेत्युक्तं

क्षज्ञानमेव तत् ॥ अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते ॥ १६ ॥ तत्साक्षात्कारसिद्ध्यर्थमात्मतत्त्वं विविच्यते ॥ येनायं सर्वसंसारात् सद्य एव विमुच्यते ॥ १७ ॥ कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ॥ घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा ॥ १८ ॥ घटावच्छिन्नखे नीरं यत्तत्र प्रतिबिंबितः ॥ साभ्रनक्षत्र आकाशो जलाकाश उदीर्यते ॥ १९ ॥ महाकाशस्य मध्ये यन्मेघमंडलमीक्ष्यते ॥ प्रतिबिंबतया तत्र मेघाकाशो जले स्थितः ॥ २० ॥ मेघांशरूपमुदकं तुषाराकारसंस्थितं ॥ तत्र खप्रतिबिंबोऽयं नीरत्वादनुमीयते ॥ २१ ॥ अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ॥

---

तयोरुभयोः स्वरूपं क्रमेण दर्शयति अस्तिब्रह्मेति ॥ १६ ॥ एवंविधात्मसाक्षात्कारासाधारणकारणमात्मतत्त्वविवेचनं प्रतिजानीते तत्साक्षात्कारेति येन साक्षात्कारेण पुमान् सद्य एव विमुच्यते तत्साक्षात्कारसिद्ध्यर्थमिति पूर्वेणान्वयः ॥ १७ ॥ चिदात्मनः पारमार्थिकमेकत्वं निश्चेतुं व्यवहारदशायां प्रतीयमानं चैतन्यभेदमुद्दिशति कूटस्थइति एकस्याश्चितेश्चातुर्विध्ये दृष्टांतमाह घटाकाशेति ॥ १८ ॥ घटावच्छिन्नस्य घटाकाशस्य तदनवच्छिन्नस्य च महाकाशस्य प्रसिद्धत्वात्तौ विहायाप्रसिद्धं जलाकाशं व्युत्पादयति घटावच्छिन्नेति घटावच्छिन्ने आकाशे यदुदकमस्ति तत्र जले प्रतिबिंबितोऽभ्रनक्षत्रसहित आकाशो जलाकाश इत्युच्यते ॥ १९ ॥ अभ्राकाशं व्युत्पादयति महाकाशस्येति तत्र मेघमंडले यज्जलं तस्मिन्नित्यर्थः ॥ २० ॥ ननु मेघजलस्याप्रतीयमानत्वान्नभसस्तत्र कथं प्रतिबिंबितत्वज्ञानमित्याशंक्याह मेघांशेति मेघस्थजलस्य प्रत्यक्षेणानुपलंभेऽपि वृष्टिलक्षणकार्येण मेघे तदुपादानमुदकं सूक्ष्मावयवरूपमस्ति इत्यनुमीयते उदकत्वेनैव लिंगेन प्रतिबिंबवत्त्वमपि विमतं जलं आकाशबिंबवद्भवितुमर्हति जलत्वात् घटगतजलवदित्यनुमानेन मेघांशरूपे जलेऽप्याकाशप्रतिबिंबसद्भावोऽवगम्यते इत्यर्थः ॥ २१ ॥ एवं दृष्टांतभूतमाकाशचतुष्टयं

कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते ॥ २२ ॥ कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिंबकः ॥ प्राणानां धारणाज्जीवः संसारेण स युज्यते ॥ २३ ॥ जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहितः तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते ॥ २४ ॥ अयं जीवो न कूटस्थं विविनक्ति कदाचन ॥ अनादिरविवेकोऽयं मूलाविद्येति गम्यतां ॥ २५ ॥ विक्षेपावृत्तिरूपाभ्यां द्विधाऽविद्या व्यवस्थिता ॥ न भाति नास्ति कूटस्थ इत्यापादनमावृतिः ॥ २६ ॥ अज्ञानी विदु-

---

व्युत्पाद्य दार्ष्टांतिके प्रथमोद्दिष्टं कूटस्थं व्युत्पादयति अधिष्ठानेति पंचीकृतापंचीभूतकार्यत्वेन स्थूलसूक्ष्मरूपस्य देहद्वयस्याविद्याकल्पितस्याधारतया वर्तमानत्वेन ताभ्यामवच्छिन्न आत्मा कूटस्थ इत्युच्यते तत्र कूटस्थशब्दप्रवृत्तौ निमित्तमाह कूटवदिति ॥ २२ ॥ एवं कूटस्थं व्युत्पाद्य जीवस्य कूटस्थे कल्पितबुद्धिप्रतिबिंबकत्वेन तत्पक्षपातित्वात्तं व्युत्पादयति कूटस्थइति तस्य जीवशब्दाभिधेयत्वे निमित्तमाह प्राणानामिति कूटस्थातिरिक्तजीवकल्पनमप्रयोजकमित्याशंक्य अविकारिणः कूटस्थस्य संसारासंभवान्निर्वाहार्थं सोऽगीकर्तव्य इत्याह संसारेणेति ॥ २३ ॥ ननु जीवातिरिक्तः कूटस्थोऽस्ति चेत्किमिति न प्रतिभासते इत्याशंक्य जीवेन तिरोहितत्वादिति सदृष्टांतमाह जलेति नन्वेतत्तिरोधानं न क्वापि शास्त्रे प्रतिपादितमित्याशंक्य तस्यान्योन्याध्यासशब्देनाभिधानान्मैवमित्याह सोऽन्योन्याध्यासइति उच्यते भाष्यादिष्विति शेषः ॥ २४ ॥ नन्वयमेवाध्यासश्चेदस्य कारणरूपाविद्या वक्तव्येत्याशंक्य जीवकूटस्थयोः संसारदशायां भेदाप्रतीतिरेव अविद्येत्याह अयमिति ॥ २५ ॥ पूर्वोक्तस्य जीवस्य अविद्याकल्पितत्वस्य स्पष्टीकरणाय अविद्यां विभजते विक्षेपेति विक्षेपहेतुत्वेनाभ्यर्हितत्वादावृतिं प्रथमं लक्षयति नभातीति कूटस्थो न भाति न प्रकाशते नास्ति चेतिव्यवहारहेतुरावरणमित्यर्थः ॥ २६ ॥ नन्वविद्यायास्तत्कृतावरणस्य च सद्भावे किं प्रमाणमित्याशंक्य लोकानु-

षा पृष्टः कूटस्थं न प्रबुध्यते ॥ न भाति नास्ति कूटस्थ इति बुध्वा वदत्यपि ॥ २७ ॥ स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः ॥ इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ ॥ २८ ॥ स्वानुभूतावविश्वासे तर्कस्याप्यनवस्थितेः ॥ कथं वा तार्किकंमन्यस्तत्त्वनिश्चयमाप्नुयात् ॥ २९ ॥ बुद्ध्यारोहाय तर्कश्चेदपेक्षेत तथा सति ॥ स्वानुभूत्यनुसारेण तर्क्यतां मा कुतर्क्यतां ॥ ३० ॥ स्वानुभूतिरविद्यायामावृतौ च प्रदर्शिता ॥ अतः कूटस्थचैतन्यमविरोधीति तर्क्यताम् ॥ ३१ ॥ त-

---

भव एवेत्याह अज्ञानीति विदुषा कूटस्थं किं जानासीति पृष्टोऽज्ञानी तं न जानामीत्यज्ञानमनुभूय वक्ति अयमविद्यानुभवः न केवलमज्ञानानुभवमेव वक्ति अपि तु नास्ति न भाति कूटस्थ इति कूटस्थाभावाभाने चानुभूय वदति अयमावरणानुभवः अत उभयत्रानुभवः प्रमाणमिति भावः ॥ २७ ॥ ननु भवन्मते आत्मनः स्वप्रकाशत्वात्तस्मिन्नविद्या नोपपद्यते तेजस्तिमिरयोरिव विरुद्धस्वभावत्वेन तयोः संबंधानुपपत्तेरविद्याऽभावे च तत्कृतमावरणं दुर्निरूप्यं स्यात्तदभावे च तन्मूलकस्य विक्षेपस्यासंभवः विक्षेपाभावे च ज्ञाननिवर्त्यस्यानर्थस्याभावात् ज्ञानवैयर्थ्यं ततस्तत्प्रतिपादकं शास्त्रप्रमाणं स्यादित्याशंक्यैतत्सर्वं पूर्वोक्तानुभवबाधितमित्याह स्वप्रकाशइति न हि दृष्टेऽनुपपन्नं नामेति न्यायादिति भावः ॥ २८ ॥ नन्वनुभवस्योक्ततर्कविरोधेनाभासत्वान्न तेन तत्त्वनिश्चय इत्याशंक्य अनुभवप्रामाण्यानभ्युपगमे केवलतर्कस्यानिश्चायकस्य स्वेनैवाभ्युपगतत्वान्न तार्किकस्य तत्त्वनिश्चयः क्वापि स्यादित्याह स्वानुभूताविति ॥ २९ ॥ नन्वनुभवः तत्त्वनिश्चायक एव तथाप्यनुभूयमानस्यार्थस्य संभावितत्वज्ञानाय तर्कोऽप्यभ्युपेतव्य इत्याशंकामनूद्य तर्ह्यनुभवानुसारेणैव तर्को वर्णनीयो न तद्विरोधेनेत्याह बुद्ध्यारोहायेति ॥ ३० ॥ कोऽसावनुभवो यदनुसारेण तर्को वर्णनीय इत्याकांक्षायां पूर्वोक्तमविद्यादिगोचरमनुभवं स्मारयति स्वानुभूतिरिति फलितमाह अतइति ॥ ३१ ॥ तमेव

च्चेद्विरोधिकेनेयमावृतिर्ह्यनुभूयतां ॥ विवेकस्तु विरोध्य-स्यास्तत्त्वज्ञानिनि दृश्यतां ॥ ३२ ॥ अविद्यावृतकूटस्थे दे-हद्वययुता चितिः ॥ शुक्तौ रूप्यवदध्यस्ता विक्षेपाध्यास एव हि ॥ ३३ ॥ इदमंशश्च सत्यत्वं शुक्तिगं रूप्य ईक्ष्यते ॥ स्वयंत्वं वस्तुता चैवं विक्षेपे वीक्ष्यतेऽन्यगं ॥ ३४ ॥ नील-पृष्ठत्रिकोणत्वं यथा शुक्तौ तिरोहितं ॥ असंगानंदताद्येवं कूटस्थेऽपि तिरोहितम् ॥ ३५ ॥ आरोपितस्य दृष्टांते रूप्यं नाम यथा तथा ॥ कूटस्थाध्यस्तविक्षेपनामाहमिति नि-श्चयः ॥ ३६ ॥ इदमंशं स्वतः पश्यन् रूप्यमित्यभिमन्य-

---

तर्कमभिनीय दर्शयति तच्चेदिति अविद्यावरणसाधकचैतन्यस्यैव तद्विरो-धित्वेऽविद्याप्रतीतिरेव न स्यादिति भावः तर्ह्यविद्यायाः को विरोधीत्यत आह विवेकइति विवेकः उपनिषद्विचारजन्यं ज्ञानं विवेकस्य अविद्या-विरोधित्वं क्व दृष्टमित्यत आह तत्त्वज्ञानिनीति ॥ ३२ ॥ एवमविद्यावरणे दर्शयित्वा विक्षेपाध्यासमाह अविद्येति पूर्वोक्ताविद्यावरणवति कूटस्थे प्रत्यगात्मन्यारोपितस्थूलसूक्ष्मशरीरसहिताश्चिदाभासो विक्षेपाध्यास इत्यर्थः ॥ ३३ ॥ अस्य विक्षेपस्याध्यासत्वसिद्धये शुक्तिरजताध्याससाम्यं दर्शयति इदमंशश्चेति शुक्तिकायां स्थितं पुरोदेशादिसंबंधित्वमबाध्यत्वं च यथाऽऽ-रोपिते रजतेऽवभासते एवं स्वयंत्वं वस्तुत्वं च कूटस्थनिष्ठमारोपिते चिदा-भासेऽवभासते इत्यर्थः॥ ३४ ॥ एवं सामान्यांशप्रतीतिमुभयत्र प्रदर्श्य विशे-षांशाप्रतीतिसाम्यं दर्शयति नीलेति ॥ ३५ ॥ साम्यान्तरं दर्शयति आरो-पितस्येति दृष्टांते शुक्तिस्थले आरोपितपदार्थस्य रूप्यनाम रूप्यमिति ना-म यथा एवं कूटस्थे कल्पितस्य चिदाभासरूपविक्षेपस्य पूर्वोक्तस्याहमिति नामेत्यर्थः ॥ ३६ ॥ ननु दृष्टांते पुरोवर्तिनि शुक्तिशकले इंद्रियसन्निकर्षे जाते सति रूप्यमिदमिति तदतिरिक्तरजताभिमान उपपद्यते नैवं दार्ष्टांतिके आत्मातिरिक्तवस्त्वभिमान इत्याशंक्यात्रापि स्वप्रकाशतया चिदात्मन्य-वभासमाने तदतिरिक्तोऽहमित्यभिमान उपलभ्यतेऽतो न वैषम्यमित्यभि-

ते ॥ तथा स्वं च स्वतः पश्यन्नहमित्यभिमन्यते ॥ ३७ ॥ इदंत्वरूप्यते भिन्ने स्वत्वाहंते तथेष्यताम् ॥ सामान्यं च विशेषश्च ह्युभयत्रापि गम्यते ॥ ३८ ॥ देवदत्तः स्वयं गच्छेत्त्वं वीक्षस्व स्वयं तथा ॥ अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते ॥ ३९ ॥ इदं रूप्यमिदं वस्त्रमिति यद्वदिदं तथा ॥ असौत्वहमित्येषु स्वयमित्यभिमन्यते ॥ ४० ॥ अहंत्वाद्भिद्यतां स्वत्वं कूटस्थे तेन किं तव ॥ स्वयंशब्दार्थ एवैष कूटस्थ इति मे भवेत् ॥ ४१ ॥ अन्यत्ववारकं स्वत्वमिति चेदन्यवारणम् ॥ कूटस्थस्यात्मतां वक्तुरिष्टमेव हि तद्भवेत् ॥ ४२ ॥ स्वयमात्मेति पर्यायौ तेन लोके तयोः सह ॥

---

प्रायेणाह इदमंशमिति ॥ ३७ ॥ ननु स्वयमहंशब्दयोरेकार्थत्वात्कथं दृष्टांतदार्ष्टांतिकयोः साम्यमित्याशंक्येदंरूप्यशब्दार्थयोः स्वयमहंशब्दार्थयोश्च सामान्यविशेषरूपत्वस्योभयत्र साम्यान्मैवमित्याह इदमिति ॥ ३८ ॥ स्वयंशब्दार्थस्य सामान्यरूपत्वं स्पष्टीकर्तुं लौकिकं प्रयोगं तावद्दर्शयाति देवदत्तइति ॥ ३९ ॥ भवत्वेवं लोके प्रयोगः कथमेतावता स्वयंशब्दार्थस्य सामान्यरूपत्वमित्याशंक्येदंशब्दार्थवदित्याह इदंरूप्यमिति यथा रूप्यवस्त्रादौ सर्वत्रेदंशब्दस्य प्रयुज्यमानत्वात्तदर्थस्य सामान्यरूपत्वं तथा असौत्वमहमित्यादौ सर्वत्र स्वयंशब्दप्रयोगात्तदर्थस्यापि सामान्यरूपत्वमवगम्यते इत्यर्थः ॥ ४० ॥ भवतु स्वयमहंशब्दयोर्लोके भेद एतावता कूटस्थात्मनि किमायातमिति पृच्छति अहंत्वादिति सामान्यरूपः स्वयंशब्दार्थः एव कूटस्थ इतीदमायातमित्याह स्वयंशब्दार्थ इति ॥ ४१ ॥ ननु स्वत्वरूपो धर्मोऽन्यत्वं निवारयति न कूटस्थत्वं बोधयतीति शंकते अन्यत्ववारकमिति स्वयंशब्दार्थस्य कूटस्थस्यैवात्मत्वात्स्वत्वेनान्यवारणमिष्टमेवेति परिहरति अन्यवारणं कूटस्थस्येति ॥ ४२ ॥ ननु स्वयमात्मशब्दयोर्भिन्नप्रवृत्तिनिमित्तयोः गवाश्वादिशब्दयोरिवैकार्थत्वाभावात्कथं स्वयंशब्दार्थस्य कूटस्थस्यात्मत्वमित्याशंक्य हस्तकरादिशब्दवदेकार्थत्वो-

प्रयोगो नास्त्यतः स्वत्वमात्मत्वं चान्यवारकम् ॥ ४३ ॥ घटः स्वयं न जानातीत्येवं स्वत्वं घटादिषु ॥ अचेतनेषु दृष्टं चेत् दृश्यतामात्मसत्त्वतः ॥ ४४ ॥ चेतनाचेतनभिदा कूटस्थात्मकृता न हि ॥ किंतु बुद्धिकृता भासकृतैवेत्यवगम्यताम् ॥४५॥ यथा चेतन आभासः कूटस्थे भ्रांतिकल्पितः॥ अचेतनो घटादिश्च तथा तत्रैव कल्पितः ॥ ४६ ॥ तत्तेदंते अपि स्वत्वमिव त्वमहमादिषु ॥ सर्वत्रानुगते तेन तयोरप्यात्मतेति चेत् ॥ ४७ ॥ ते आत्मत्वेऽप्यनुगते तत्तेदंते ततस्तयोः ॥ आत्मत्वं नैव संभाव्यं सम्यक्त्वादेर्यथा

---

पपत्तेर्मैवमिति परिहरति स्वयमात्मेतीति पर्यायत्वे सहप्रयोगाभावं हेतुमाह तेनलोकइति फलितमाह अतःस्वत्वमिति ॥ ४३ ॥ ननु घटादिष्वचेतनेष्वपि स्वयंशब्दस्य प्रयोगदर्शनात्स्वयंत्वात्मत्वयोरेकत्वं न घटते इति शंकते घटइति घटादिष्वपि स्फुरणरूपेणात्मचैतन्यस्य सत्त्वात्तेष्वपि स्वयंशब्दप्रयोगो न विरुध्यते इत्याह दृश्यतामिति ॥ ४४ ॥ ननु घटादिष्वप्यात्मचैतन्यस्य सत्त्वे चेतनाचेतनविभागो निर्निमित्तकः स्यादित्याशंक्य चेतनाचेतनविभागस्य चिदाभाससत्त्वासत्त्वलक्षणकारणसद्भावान्मैवमिति परिहरति चेतनेति ॥४५॥ ननु चेतनाचेतनविभागस्य चिदाभाससत्त्वासत्त्वप्रयुक्तत्वाभ्युपगमे अचेतनेष्वात्मसत्त्वाभ्युपगमो निष्प्रयोजनः स्यादित्याशंक्य चेतनाचेतनविभागहेतुत्वेन कूटस्थस्यानभ्युपगम्यत्वेऽप्यचेतनकल्पनाधिष्ठानत्वेन कूटस्थोऽभ्युपगंतव्य इत्यभिप्रायेण घटादेस्तत्र कल्पितत्वं सदृष्टांतमाह यथाचेतनइति ॥ ४६ ॥ स्वत्वात्मत्वयोरेकत्वेऽतिप्रसंगं शंकते तत्तेदंतेअपीति त्वमहमादिषु सर्वत्रानुगतस्य स्वत्वस्येव सर्वत्रानुगतयोस्तत्तेदंतयोरप्यात्मस्वरूपता किं न स्यादिति भावः ॥ ४७ ॥ तत्तेदंतयोरात्मत्वाधिकवृत्तित्वादात्मत्वं न संभवतीत्याह तेआत्मत्वेपीति तत्तेदंते स्वत्वमिव यद्यपि त्वमहमादिषु अनुगते तथापि तेष्वनुवर्तमाने आत्मत्वेऽप्यनुगते तदात्मत्वमिदमात्मत्वमित्यादिव्यवहारसंभवादतस्तयो-

तथा ॥ ४८ ॥ तत्तेदंते स्वतान्यत्वे त्वंताहंते परस्परम् ॥ प्रतिद्वंद्वितया लोके प्रसिद्धे नास्ति संशयः ॥ ४९ ॥ अन्यतायाः प्रतिद्वंद्वी स्वयं कूटस्थ इष्यताम् ॥ त्वंतायाःप्रतियोग्येषोऽहमित्यात्मनि कल्पितः ॥ ५० ॥ अहंतास्वत्वयोर्भेदे रूप्यतेदंतयोरिव ॥ स्पष्टेऽपि मोहमापन्ना एकत्वं प्रतिपेदिरे ॥ ५१ ॥ तादात्म्याध्यास एवात्र पूर्वोक्ताविद्यया कृतः ॥ अविद्यायां निवृत्तायां तत्कार्यं विनिवर्तते ॥ ५२ ॥ अविद्यावृतितादात्म्ये विद्ययैव विनश्यतः ॥ वि-

---

रात्मत्वाधिकवृत्तित्वादात्मस्वरूपता न संभाव्यते तत्र दृष्टांतः सम्यक्त्वादेरिति आत्मत्वं सम्यगात्मत्वमसम्यगितिव्यवहारवशादात्मत्वेऽप्यनुवर्तमानयोः सम्यक्त्वासम्यक्त्वयोरिवेत्यर्थः ॥४८॥ एवं प्रासंगिकं परिसमाप्य फलितदर्शनाय लोकव्यवहारसिद्धमर्थमनुवदति तत्तेदंतेइति तत्ताप्रतियोगित्वमिदंतायास्तदिदमिति स्वत्वप्रतियोगित्वमन्यत्वस्य स्वयमन्यइति त्वंताप्रतियोगित्वमहंतायास्त्वमहमिति लोके प्रतिद्वंद्वित्वेन प्रयोगदर्शनात् प्रसिद्धमिति भावः ॥४९॥ भवत्वेवं लोके प्रकृते किमायातमित्यत आह अन्यतायाइति अन्यत्वप्रतियोगी स्वयंशब्दार्थः त्वंताप्रतियोग्यहंशब्दार्थश्चिदाभासः कूटस्थे कल्पित इत्यर्थः ॥ ५० ॥ ननूक्तप्रकारेण जीवकूटस्थयोर्भेदे सत्यपि सर्वे इत्थं किमिति न जानंतीत्याशंक्याह अहंतेति बुद्धिसाक्षिणः कूटस्थस्य बुध्या प्रत्यक्षीकर्तुमशक्यत्वादहमिति प्रतिभासमानयोः जीवकूटस्थयोर्भ्रांत्यैकत्वं प्रतिपन्ना इत्यर्थः ॥ ५१ ॥ नन्वस्य जीवकूटस्थयोरेकत्वभ्रमस्य किं कारणमित्यपेक्षायामाह तादात्म्येति अत्रास्मिन् ग्रंथे अनादिरविवेकोऽयमित्यत्रोक्तयाऽविद्ययेत्यर्थः यतोऽविद्याकार्यत्वमस्यातोऽविद्यानिवर्तकज्ञानेनैव तन्निवृत्तिरित्याह अविद्यायामिति ॥ ५२ ॥ नन्वध्यासस्याविद्याकार्यत्वात्तन्निवृत्त्या निवृत्तिरित्येतदनुपपन्नं ब्रह्मात्मैकत्वविद्यायामुत्पन्नायामप्यविद्याकार्यस्य देहादेरुपलभ्यमानत्वादित्यत आह अविद्यावृतीति अविद्यैककारणयोरावृतितादात्म्ययोर्विद्ययैव विनिवृत्तिः कर्म-

क्षेपस्य स्वरूपं तु प्रारब्धक्षयमीक्षते ॥ ५३ ॥ उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्षते ॥ इत्याहुस्तार्किकास्तद्वद- स्माकं किन्न संभवेत् ॥ ५४ ॥ तंतूनां दिनसंख्यानां तै- स्तादृक् क्षण ईरितः ॥ भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम् ॥ ५५ ॥ विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ॥ श्रुतियुक्त्यनुभूतिभ्यो वदतां किन्नु दुःशकम् ॥ ५६ ॥ आस्तां दुस्तार्किकैः साकं विवादः प्रकृतं ब्रुवे ॥ स्वाहमोः सिद्धमेकत्वं कूटस्थपरिणामिनोः ॥ ५७ ॥ भ्राम्यंते पंडितंमन्याः सर्वे लौकिकतैर्थिकाः ॥ अनादृत्य श्रुतिं मौर्ख्यात्केवलां युक्तिमाश्रिताः ॥ ५८ ॥ पूर्वापरपरामर्शविकलास्तत्र केचन ॥ वाक्याभासान् स्व-

---

सहिताविद्याजन्यस्य तु विक्षेपस्वरूपस्य कर्मावसानपर्यंतमवस्थानमित्य- विरोध इति भावः ॥ ५३ ॥ ननु प्रारब्धकर्मणो निमित्तमात्रत्वात्तत्सद्भा- वमात्रेणोपादाने विनष्टेऽपि कथं कार्यानुवृत्तिरित्याशंक्य शास्त्रांतरसिद्ध- दृष्टांतेन तदनुवृत्तिं संभावयति उपादानइति ॥ ५४ ॥ ननु तार्किकैः कार्यस्य क्षणमात्रमवस्थानमंगीकृतं न चिरकालमित्याशंक्याह तंतूना- मिति संसारस्यानादिकालमारभ्यानुवृत्तत्वात्तत्संस्कारवशेन कुलालचक्रभ्र- मवच्चिरकालानुवृत्तिर्न विरुध्यते इति भावः ॥ ५५ ॥ ननु तार्किकैर्यथा युक्तमभिहितं तद्वद्भवताऽपीत्याशंक्य स्वोक्तौ ततो वैषम्यं दर्शयति वि- नेति क्षोदक्षमं विचारसहं मानं विना प्रमाणमंतरेणेत्यर्थः तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इतिश्रुतिः चक्रभ्रमादिदृष्टांतो युक्तिः अनुभूतिर्विद्वदनुभवः एतेभ्यः प्रमाणेभ्यः किं वक्तुमशक्यमित्यभिप्रायः ॥ ५६ ॥ प्रकृतमनुसरति आस्तामिति स्वयमहंशब्दार्थयोः कूटस्थपरि- णामिनोरेकत्वं भ्रांत्या सिद्धं ॥ ५७ ॥ ननु कूटस्थजीवयोरेकत्वं भ्रांति- सिद्धं चेदिदं भ्रांतमिति केऽपि कुतो न जानंति इत्याशंक्य श्रुतितात्पर्य- पर्यालोचनशून्यत्वादित्याह भ्राम्यंत इति ॥ ५८ ॥ ननु श्रुत्यर्थप्रवक्तारोऽ-

स्वपक्षे योजयंत्यप्यलज्जया ॥ ५९ ॥ कूटस्थादिशरीरांतसंघातस्यात्मतां जगुः ॥ लोकायताः पामराश्च प्रत्यक्षाभासमाश्रिताः ॥ ६० ॥ श्रौतीकर्तुं स्वपक्षं ते कोशमन्नमयं तथा ॥ विरोचनस्य सिद्धांतं प्रमाणं प्रतिजज्ञिरे ॥ ६१ ॥ जीवात्मनिर्गमे देहमरणस्यात्र दर्शनात् ॥ देहातिरिक्तएवात्मेत्याहुर्लोकायताः परे ॥ ६२ ॥ प्रत्यक्षत्वेनाभिमताहंधीर्देहातिरेकिणम् ॥ गमयेदिंद्रियात्मानं वच्मीत्यादिप्रयोगतः ॥ ६३ ॥ वागादीनामिंद्रियाणां कलहः श्रुतिषु श्रुतः ॥ तेन चैतन्यमेतेषामात्मत्वं तत एव

---

पि केचिदित्थं कुतो न जानंतीत्याशंक्य तेषां साकल्येन श्रुत्यर्थपर्यालोचनाभावादित्याह पूर्वापरेति ॥ ५९ ॥ तत्र तावत्प्रत्यक्षैकप्रमाणाभ्युपगमेनातिस्थूलत्वाल्लोकायतादिपक्षं प्रथमतोऽनुभाषते कूटस्थादीति प्रत्यक्षसिद्धत्वेन देहादेरात्मत्वं पारमार्थिकं स्यादित्याशंक्योक्तं प्रत्यक्षाभासमिति ॥ ६० ॥ ते प्रत्यक्षैकप्रमाणवादिनोऽपि परव्यामोहनाय स्वमतं श्रुतिसिद्धमिति दर्शयितुं वाक्यमप्युदाहरंतीत्याह श्रौतीकर्तुमिति कोशमन्नमयमितिशब्देन अन्नमयकोशप्रतिपादकं स वा एष पुरुषोऽन्नरसमय इत्यादिवाक्यं लक्ष्यते विरोचनस्य सिद्धांतमिति तत्सिद्धांतप्रतिपादकमात्मैव देहमय इत्यादिवाक्यं लक्ष्यते एतद्वाक्यद्वयं प्रमाणत्वेन प्रतिजानंत एव न तूपपादयितुं क्षमाः प्रकरणविरोधादिति भावः॥६१॥अस्मिन् मते दोषदर्शनपुरःसरं मतांतरमुत्थापयति जीवात्मेति॥ ६२ ॥ कीदृशो देहातिरिक्त आत्मा केन वा प्रमाणेनावगम्यते इत्याशंकायामाह प्रत्यक्षत्वेनेति अहं वच्मि अहं पश्यामीत्यादिप्रयोगदर्शनात् देहातिरिक्ताहंबुद्धिगम्यानींद्रियाण्यात्मेत्यर्थः ॥ ६३ ॥ नन्विंद्रियाणामचेतनानां कथमात्मत्वमित्याशंक्य श्रुतिष्विंद्रियसंवादश्रवणादचेतनत्वमसिद्धमित्याह वागादीनामिति चेतनत्वस्यैवात्मलक्षणत्वात् चेतनानामिंद्रियाणां आत्मत्वमुचितमित्याह आत्मत्व-

हि ॥ ६४ ॥ हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ॥ चक्षुराद्यक्षलोपेऽपि प्राणसत्त्वे तु जीवति ॥ ६५ ॥ प्राणो जागर्ति सुप्तेऽपि प्राणश्रैष्ठ्यादिकं श्रुतं ॥ कोशः प्राणमयः सम्यग्विस्तरेण प्रपंचितः ॥ ६६ ॥ मन आत्मेति मन्यंत उपासनपरा जनाः ॥ प्राणस्याभोक्तृता स्पष्टा भोक्तृत्वं मनसस्ततः ॥६७॥ मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ श्रुतो मनोमयःकोशस्तेनात्मेतीरितं मनः ॥६८॥ विज्ञानमात्मेति पर आहुः क्षणिकवादिनः ॥ यतो विज्ञानमूलत्वं मनसो गम्यते स्फुटम् ॥ ६९ ॥ अहंवृत्तिरिदंवृत्तिरित्यंतःकरणं द्विधा ॥ विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत् ॥ ७० ॥ अहंप्रत्ययबीजत्वमिदंवृत्तेरिति

---

मिति ॥ ६४ ॥ मतांतरमुत्थापयितुं हैरण्यगर्भा इति ॥ ६५ ॥ प्राणस्यात्मत्वे श्रौतालिंगानीति दर्शयति प्राणइति प्राणादय एवैतस्मिन् पुरे जाग्रतीत्यादिना प्राणजागरणं श्रूयते तत्प्राणे प्रपन्न उदातिष्ठत् तदुक्थमभवत्तदेतदुक्थमिति प्राणस्य श्रैष्ठ्यादिकं श्रूयते अन्योऽतर आत्मा प्राणमय इत्यादिना प्राणमयः कोशः प्रपंचितः आदिशब्देन प्राणसंवादप्रवेशादिकं ग्राह्यं ॥ ६६ ॥ प्राणादप्यांतरस्य मनसः आत्मत्ववादिनो मतं दर्शयति मनआत्मेतीति प्राणस्यानात्मत्वे युक्तिमाह प्राणस्येति ॥ ६७ ॥ मनसः आत्मत्वे युक्तिप्रतिपादिकां श्रुतिमाह मनऐवति तस्माद्वा एतस्मात्प्राणमयादन्योऽतर आत्मा मनोमय इतिश्रुत्यंतरं दर्शयति श्रुतइति फलितमाह तेनेति ॥ ६८ ॥ मनसोऽप्यांतरस्य विज्ञानस्य आत्मत्ववादिनो बौद्धस्य मतं दर्शयति विज्ञानमिति विज्ञानस्यांतरत्वे युक्तिमाह यतइति ॥ ६९ ॥ विज्ञानमनःशब्दवाच्यस्यांतःकरणस्यैकत्वात् कथं मनोविज्ञानयोः कार्यकारणभाव इत्याशंक्य तमुपपादयितुं तयोर्भेदं तावद्दर्शयति अहंवृत्तिरिति ॥ ७० ॥ तयोः कार्यकारणभावमाह अहंप्रत्ययबीजत्वमिति तदेवोपपादयति अविदित्वेति अहंवृत्त्यु-

स्फुटम् ॥ अविदित्वा स्वमात्मानं बाह्यं वेत्ति न तु क्कचित् ॥ ७१ ॥ क्षणे क्षणे जन्मनाशावहंवृत्तेर्मितौ यतः ॥ विज्ञानं क्षणिकं तेन स्वप्रकाशं स्वतो मितेः ॥ ७२ ॥ विज्ञानमयकोशोऽयं जीव इत्यागमा जगुः ॥ सर्वसंसार एतस्य जन्मनाशसुखादिकः ॥ ७३ ॥ विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् ॥ अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुः ॥७४॥ असदेवेदमित्यादाविदमेव श्रुतं ततः ॥ ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रांतिप्रकल्पितम् ॥७५॥ निरधिष्ठानविभ्रांतेरभावादात्मनोऽस्तिता ॥ शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते ॥७६॥ अन्यो विज्ञान-

---

दयाभावे इदंवृत्त्यनुदयादनयोः कार्यकारणभाव इत्यर्थः ॥ ७१ ॥ तस्य विज्ञानस्य क्षणिकत्वेऽनुभवं प्रमाणयति क्षणेइति क्षणिकत्वमुपपाद्य स्वप्रकाशत्वमुपपादयति स्वप्रकाशमिति स्वेनैव प्रमितत्वादित्यर्थः ॥ ७१ ॥ विज्ञानस्यात्मत्वे आगमः प्रमाणमित्याह विज्ञानमयेति तस्माद्वा एतस्मान्मनोमयादन्योंऽतर आत्मा विज्ञानमयः विज्ञानं यज्ञं तनुत इत्यादिवाक्यं विज्ञानस्यात्मत्वप्रतिपादकमिति भावः ॥ ७३ ॥ बौद्धावांतरभेदस्य शून्यवादिनो मतं दर्शयति विज्ञानमिति ॥७४॥ तत्र श्रुतिमाह असदेवेदमितीति शून्यस्यैव तद्रूपत्वे प्रतीयमानस्य जगतः का गतिरित्यत आह ज्ञानेति ॥ ७५॥ तदेतन्मतं दूषयति निरधिष्ठानेति निःस्वरूपस्य शून्यस्याधिष्ठानत्वायोगान्निरधिष्ठानस्य भ्रमस्यानुपपत्तेर्जगत्कल्पनाधिष्ठानस्यात्मनः सत्ताऽभ्युपगंतव्या किंच शून्यवादिनोऽपि शून्यसाक्षित्वेनावश्यमात्माऽभ्युपगंतव्यः अन्यथा तस्यानभ्युपगमे अस्य शून्यस्योक्तिः शून्यमित्यभिधानं ते बौद्धस्य तव मते न सिध्येदिति भावः ॥ ७६ ॥ कस्तर्ह्यात्मेत्यत आह अन्यइति तस्माद्वा एतस्माद्विज्ञानमयादन्योंऽतर आत्माऽऽनंदमयः अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनेति च श्रुतिसद्भावादानंदमय आत्माऽभ्युपगं-

मयत आनंदमय आंतरः ॥ अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनम् ॥ ७७ ॥ अणुर्महान्मध्यमो वेत्येवं तत्रापि वादिनः ॥ बहुधा विवदंते हि श्रुतियुक्तिसमाश्रयात् ॥ ७८ ॥ अणुं वदंत्यांतरालाः सूक्ष्मनाडीप्रचारतः ॥ रोम्णः सहस्त्रभागेन तुल्यासु प्रचरत्ययम् ॥ ७९ ॥ अणोरणीयानेषोऽणुः सूक्ष्मात्सूक्ष्मतरं त्विति ॥ अणुत्वमाहुः श्रुतयः शतशोऽथ सहस्त्रशः ॥ ८० ॥ वालाग्रशतभागस्य शतधा कल्पितस्य च ॥ भागो जीवः स विज्ञेय इति चाहापरा श्रुतिः ॥ ८१ ॥ दिगंबरा मध्यमत्वमाहुरापादमस्तकम् ॥ चैतन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि ॥ ८२ ॥ सूक्ष्मनाडीप्रचारस्तु सूक्ष्मैरवयवैर्भवेत् ॥ स्थूलदेहस्य हस्ताभ्यां कंचुकप्रतिमोकवत् ॥ ८३ ॥ न्यूनाधिकशरीरेषु प्रवेशोऽपि

---

तव्य इति वैदिकदर्शनं वैदिकसिद्धांतः ॥ ७७ ॥ एवमात्मस्वरूपे विप्रतिपत्तिं प्रदर्श्य तत्परिमाणविशेषेऽपि वादिविप्रतिपत्तिं दर्शयति अणुरिति ॥ ७८ ॥ अत्राणुत्ववादिनस्तावद्दर्शयति अणुमिति अणुत्वाभिधाने हेतुमाह सूक्ष्मेति तदुपपादयति रोम्णइति नाडीष्विति शेषः सूक्ष्मासु नाडीषु संचारोऽणुत्वमंतरेण न घटते इत्यभिप्रायः ॥ ७९ ॥ अणुत्वे किं प्रमाणमित्यत आह अणोरिति अणोरणीयान्महतो महीयान् एषोऽणुरात्मा चेतसा वेदितव्यः सूक्ष्मात्सूक्ष्मतरं नित्यमित्यादिश्रुतय इत्यर्थः ॥ ८० ॥ श्रुत्यंतरमुदाहरति वालाग्रेति ॥ ८१ ॥ मध्यमपरिमाणवादिनो मतं दर्शयति दिगंबराइति तत्रोपपत्तिमाह आपादेति स एष इह प्रविष्ट आनखाग्रेभ्य इति श्रुतिरप्यत्र प्रमाणमित्याह आनखाग्रेति ॥ ८२ ॥ ननु मध्यमपरिमाणत्वे श्रुतिसिद्धो नाडीप्रचारो न घटते इत्याशंक्याह सूक्ष्मनाडीति यथा देहावयवयोर्हस्तयोः कंचुकप्रवेशेन देहस्य कंचुकप्रवेशस्तद्वदात्मावयवानां सूक्ष्माणां नाडीषु प्रचारेणात्मनोऽपि प्रचार उपचर्यते इत्यर्थः ॥ ८३ ॥ नन्वात्मनो नियतमध्यमपरिमाणत्वे कर्मवशान्न्यूनाधिक-

गमागमैः ॥ आत्मांशानां भवेत्तेन मध्यमत्वं विनिश्चितम् ॥ ८४ ॥ सांशस्य घटवन्नाशो भवत्येव तथा सति ॥ कृतनाशाकृताभ्यागमयोः को वारको भवेत् ॥८५॥ तस्मादात्मा महानेव नैवाणुर्नापि मध्यमः ॥ आकाशवत्सर्वगतो निरंशः श्रुतिसंमतः ॥ ८६ ॥ इत्युक्त्वा तद्विशेषे तु बहुधा कलहं ययुः ॥ अचिद्रूपोऽथ चिद्रूपश्चिदचिद्रूप इत्यपि ॥ ८७ ॥ प्राभाकरास्तार्किकाश्च प्राहुरस्याचिदात्मताम्॥ आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः॥८८॥ इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखासुखे ॥ तत्संस्काराश्च तस्यैते गुणाश्चितिवदीरिताः ॥ ८९ ॥ आत्मनो मनसा योगे

---

शरीरप्रवेशो न घटते इत्याशंक्यावयवागमापायाभ्यामात्मनो नियतमध्यमपरिमाणत्वाद्देहवदुभयं न विरुध्यते इत्याह न्यूनाधिकेति फलितमाह तेनेति ॥ ८४ ॥ आत्मनः सावयवत्वे घटादिवदनित्यत्वप्रसंगेनैतत् दूषयति सांशस्येति भवतु को दोषस्तत्राह तथासतीति कृतयोः पुण्यपापयोर्भोगमंतरेण नाशः अकृतयोरकस्मात् फलदातृत्वमकृताभ्यागमः एतद्दोषद्वयमात्मनोऽनित्यत्वाभ्युपगमे भवेदिति भावः ॥ ८५ ॥ अतः परिशेषादात्मनो विभुत्वं सिद्धमित्याह तस्मादिति तत्र प्रमाणमाह आकाशवदिति आकाशवत्सर्वगतश्च नित्यः निष्कलं निष्क्रियमित्याद्यागमः प्रमाणमित्यर्थः ॥ ८६ ॥ एवमात्मनो विभुत्वं प्रसाध्य तस्य चिद्रूपत्वं निश्चेतुं तावद्वादिविप्रतिपत्तिं दर्शयति इत्युक्त्वेति ॥ ८७ ॥ अचिद्रूपत्ववादिनो मतं दर्शयति प्राभाकराइति तत्प्रक्रियामनुभाषते आकाशवद्द्रव्यमिति आत्मा द्रव्यं भवितुमर्हति गुणवत्त्वादाकाशवदिति अनुमानं सूचितं आत्मनः पृथिव्यादिभ्यो भेदसाधकं विशेषगुणं दर्शयति शब्दवदिति आत्मा पृथिव्यादिभ्यो भिद्यते ज्ञानगुणत्वात् यत्पृथिव्यादिभ्यो न भिद्यते तत् ज्ञानगुणकमपि न भवति यथा पृथिव्यादीत्यनुमानं द्रष्टव्यं ॥ ८८ ॥ तस्यैव विशेषगुणांतराण्याह इच्छेति तत्संस्काराः भावनाः ॥ ८९ ॥ एषां गुणा-

स्वादृष्टवशतो गुणाः ॥ जायंतेऽथ प्रलीयंते सुषुप्तेऽदृष्टसंक्षयात् ॥ ९० ॥ चितिमत्त्वाच्चेतनोऽयमिच्छाद्वेषप्रयत्नवान् ॥ स्याद्धर्माधर्मयोः कर्ता भोक्ता दुःखादिमत्त्वतः ॥ ९१ ॥ यथाऽत्र कर्मवशतः कादाचित्कं सुखादिकं ॥ तथा लोकांतरे देहे कर्मणेच्छादि जन्यते ॥९२॥ एवं च सर्वगस्यापि संभवेतां गमागमौ ॥ कर्मकांडः समग्रोऽत्र प्रमाणमिति तेऽवदन् ॥ ९३ ॥ आनंदमयकोशो यः सुषुप्तौ परिशिष्यते ॥ अस्पष्टचित्स आत्मैषां पूर्वकोशोऽस्य ते गुणाः ॥ ९४ ॥ गूढं चैतन्यमुत्प्रेक्ष्य जडबोधस्वरूपतां ॥ आ-

---

नामुत्पत्तिविनाशकारणमाह आत्मनइति स्वादृष्टवशात आत्मनो मनसा योग इत्यन्वयः॥ ९० ॥आत्मनोऽचिद्रूपत्वे कथं चेतनत्वाभ्युपगम इत्याशंक्य चितिमत्त्वादित्याह चितिमत्त्वादिति आत्मनश्चेतनत्वे हेत्वंतरमाह इच्छेति तस्येश्वराद्वैलक्षण्यमाह स्यादिति॥ ९१॥नन्वात्मनो विभुत्वे लोकांतरगमनादिकं कथं घटेतेत्याशंक्यास्मिन् देहे कर्मवशादिच्छाद्युत्पत्तौ सत्यामत्रात्मनोऽवस्थानादिव्यवहार इव कर्मवशाल्लोकांतरे देहांतरोत्पत्तौ तदवच्छिन्नात्मप्रदेशे सुखाद्युत्पत्तिवशात्तत्रात्मनो गमनादिकव्यवहार इत्यौपचारिकमात्मनो गमनादिकमित्यभिप्रेत्याह यथात्रकर्मवशतइति ॥ ९२ ॥ एवमिति आत्मनः कर्तृत्वादिधर्मवत्त्वे किं प्रमाणमित्यत आह कर्मकांडइति ॥ ९३ ॥ नन्वन्यो विज्ञानमयात् आनंदमय आंतर इत्यत्रानंदमयस्यात्मत्वमुक्तमिदानीमिच्छादिमान् अन्यः प्रतिपाद्यतेऽतः पूर्वोत्तरविरोध इत्याशंक्याह आनंदमयेति सुषुप्तावस्पष्टचिद्य आनंदमयकोशः परिशिष्यते स पूर्वकोशः श्रौतेषु पंचकोशेषु प्रथम एषां प्राभाकरादीनामात्मा अस्यात्मनस्ते पूर्वोक्ताः ज्ञानादयो गुणा इत्यर्थः ॥ ९४ ॥ अस्यैवात्मनश्चिदचिद्रूपत्वं भाट्टा वर्णयंतीत्याह गूढमिति भाट्टा आत्मनो गूढमस्पष्टं चैतन्यमुत्प्रेक्ष्य ऊहित्वा चिज्जडोभयात्मकतां वर्णयंति चैतन्योत्प्रेक्षायां कारणमाह चिदुत्प्रेक्षेति उत्थितस्मृतेश्चिदुत्प्रेक्षा भवतीति योजना सुप्तेरुत्थितस्य

त्मनो ब्रुवते भाट्टाश्चिदुत्प्रेक्षोत्थितस्मृतेः ॥ ९५ ॥ जडो भूत्वा तदाऽस्वाप्समिति जाड्यस्मृतिस्तदा ॥ विना जाड्यानुभूतिं न कथंचिदुपपद्यते ॥ ९६ ॥ द्रष्टुर्दृष्टेरलोपश्च श्रुतः सुप्तौ ततस्त्वयं ॥ अप्रकाशप्रकाशाभ्यामात्मा खद्योतवद्युतः ॥ ९७ ॥ निरंशस्योभयात्मत्वं न कथंचिद् घटिष्यते ॥ तेन चिद्रूप एवात्मेत्याहुः सांख्यविवेकिनः ॥९८॥ जाड्यांशः प्रकृते रूपं विकारि त्रिगुणं च तत्॥चितो भोगापवर्गार्थं प्रकृतिः सा प्रवर्तते ॥९९॥ असंगायाश्चितेर्बंधमोक्षौ भेदाग्रहान्मतौ ॥ बंधमुक्तिव्यवस्थार्थं पूर्वेषामिव चिद्भिदा

---

जायमानात्स्मरणात्सौषुप्तचैतन्यस्योत्प्रेक्षा भवतीत्यर्थः ॥ ९५ ॥ चिदुत्प्रेक्षाप्रकारमेव स्पष्टयति जडोभूत्वेति तदा सुषुप्तिकाले जडो भूत्वाऽस्वाप्समित्येवंरूपा जाड्यस्मृतिरुत्थितस्य पुरुषस्य जायमाना सुषुप्तिकालीनजाड्यानुभवमंतरेण अनुपपद्यमाना तदानींतनजाड्यानुभवं कल्पयतीति भावः ॥९६॥ सुषुप्तौ चैतन्यलोपाभावे प्रमाणमाह द्रष्टुरिति न हि द्रष्टुः दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादिति श्रुतौ द्रष्टुरात्मनः स्वरूपभूतायाः दृष्टेर्लोपो न विद्यते विनाशरहितस्वभावत्वात् अन्यथा लोपवादिनोऽपि निःसाक्षिकस्य वक्तुमशक्यत्वात्सुषुप्तौ चैतन्यलोपाभावः श्रूयते ततोऽपि कारणादयमात्मा खद्योतवदस्फुरणस्फुरणाभ्यां युक्तो भवतीत्यर्थः ॥ ९७ ॥ अस्मिन् भाट्टमते दूषणाभिधानपुरःसरं सांख्यमतमुत्थापयति निरंशस्येति ॥ ९८ ॥ जाड्यस्मृतेस्तर्हि का गतिरित्याशंक्याह जाड्यांशइति तत् प्रकृतिरूपं सत्त्वरजस्तमोगुणात्मकं प्रकृतिकल्पनायां प्रयोजनमाह चितइति चितः पुरुषस्येति यावत् ॥ ९९ ॥ ननु चितोऽसंगत्वेन प्रकृतिपुरुषयोरत्यंतविविक्तत्वात् प्रकृतिप्रवृत्त्या कथं पुरुषस्य भोगापवर्गावित्याशंक्य तयोर्विवेकस्याग्रहणात्पुरुषे भोगापवर्गौ व्यवह्रियेते इत्याह असंगायाइति तार्किकादिभिरिव सांख्यैरात्मभेदोऽगीक्रियते इत्याह बंध-

॥१००॥ महतः परमव्यक्तमिति प्रकृतिरुच्यते ॥ श्रुतावसंगता तद्वदसंगो हीत्यतः स्फुटा ॥१॥ चित्सांनिधौ प्रवृत्तायाः प्रकृतेर्हि नियामकम् ॥ ईश्वरं ब्रुवते योगाः स जीवेभ्यः परः श्रुतः ॥ २ ॥ प्रधानक्षेत्रज्ञपतिर्गुणेश इति हि श्रुतिः ॥ आरण्यकेऽसंभ्रमेण ह्यंतर्याम्युपपादितः ॥ ३ ॥ अत्रापि कलहायंते वादिनः स्वस्वयुक्तिभिः ॥ वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरंति हि ॥ ४ ॥ क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः ॥ पुंविशेषो भवेदीशो जीववत्सोऽप्यसंगचित् ॥ ५ ॥ तथाऽपि पुंविशेषत्वाद्घटतेऽस्य नियंतृता ॥ अव्यवस्थौ बंधमोक्षावापतेतामिहान्यथा ॥ ६ ॥ भीषास्मादि-

---

मुक्तीति ॥ १०० ॥ प्रकृतिसद्भावे पुरुषस्यासंगत्वे च श्रुतिमुदाहरति महतइति ॥ १०१ ॥ एवं जीवविषयां वादिविप्रतिपत्तिं प्रदर्श्येश्वरविषयां तां प्रदर्शयितुं ईश्वररूपं तावत्स्थापयति चित्संनिधाविति ननु प्रकृतिपुरुषातिरिक्तेश्वरकल्पनमप्रमाणमित्याशंक्याह सजीवेभ्यइति ॥ २ ॥ तामेवेश्वरसद्भावप्रतिपादिकां श्रुतिं पठति प्रधानेति प्रधानं गुणसाम्यावस्थारूपं क्षेत्रज्ञा जीवास्तेषां पतिः गुणाः सत्त्वादयस्तेषामीशो नियामक इत्यर्थः न केवलमियमेव श्रुतिरीश्वरप्रतिपादिका अंतर्यामिब्राह्मणमपीत्याह आरण्यकइति ॥ ३ ॥ तामेव वादिविप्रतिपत्तिं प्रतिजानीते अत्राऽपीति प्रज्ञामनतिक्रम्य यथाप्रज्ञं ॥ ४ ॥ इदानीं पतंजलिनोक्तमीश्वरप्रतिपादकं क्लेशकर्मविपाकैस्तदाशयैरपरामृष्टः पुरुषविशेष ईश्वर इत्येतत्सूत्रमर्थतः पठति क्लेशेति क्लेशा अविद्यादयः पंच कर्माणि कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषामिति सूत्रितानि सति मूले तद्विपाका जात्यायुर्भोगा इत्युक्ताः कर्मविपाकाः फलविशेषास्तदाशयास्तेषां संस्कारास्तैः क्लेशादिभिरसंस्पृष्टः पुरुषविशेष ईश्वरो भवति सोऽपि जीववदसंगश्चिद्रूपश्चेत्यर्थः ॥५॥ नन्वसंगचिद्रूपत्वे कथं नियंतृत्वमित्यत आह तथाऽपीति ईश्वरस्य नियंतृत्वानभ्युपगमे दोषमाह अव्यवस्थाविति ॥ ६ ॥ असंगस्येश्वरस्य नियं-

त्येवमादावसंगस्य परात्मनः॥ श्रुतं तद्युक्तमप्यस्य क्लेशकर्माद्यसंगमात् ॥७॥ जीवानामप्यसंगत्वात् क्लेशादिर्न ह्यथाऽपि च॥ विवेकाग्रहतः क्लेशकर्मादि प्रागुदीरितं ॥ ८ ॥ नित्यज्ञानप्रयत्नेच्छा गुणानीशस्य मन्वते ॥ असंगस्य नियंतृत्वमयुक्तमिति तार्किकाः ॥ ९ ॥ पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा ॥ सत्यकामः सत्यसंकल्प इत्यादिश्रुतिर्जगौ ॥ १० ॥ नित्यज्ञानादिमत्त्वेऽस्य सृष्टिरेव सदा भवेत् ॥ हिरण्यगर्भ ईशोऽतो लिंगदेहेन संयुतः ॥ ११ ॥ उद्गीथब्राह्मणे तस्य माहात्म्यमतिविस्तृतं ॥ लिंगसत्त्वेऽपि जीवत्वं नास्य कर्माद्यभावतः ॥ १२ ॥ स्थूलदेहं विना लिंगदेहो न क्वापि दृश्यते ॥ वैराजो देह ईशोऽतः सर्व-

---

तृत्वं निष्प्रमाणकमित्याशंक्याह भीषेति तन्नियंतृत्वं श्रुतं ननु श्रुतमप्ययुक्तं कथमंगीक्रियते इत्यत आह युक्तमपीति जीवधर्मस्य क्लेशादेरभावादुपपन्नं चेत्यर्थः ॥ ७ ॥ ननु जीवा अप्यसंगचिद्रूपाः क्लेशादिरहिता एव तथाचेश्वरे को विशेष इत्याशंक्य जीवानां स्वतः क्लेशादिरहितत्वेऽपि बुध्या सह विवेकाग्रहात् क्लेशादिरस्तीति पूर्वोक्तं स्मारयति जीवानामिति ॥ ८ ॥ तार्किकास्त्वसंगस्य नियामकत्वमसहमाना जीवविलक्षणत्वाय ज्ञानादिगुणत्रयं नित्यमंगीकुर्वते इत्याह नित्येति ॥ ९ ॥ नन्विच्छादिगुणकस्य तस्य कथं जीवाद्वैलक्षण्यमित्याशंक्य गुणानां नित्यत्वादेवेति परिहरति पुंविशेषत्वमिति गुणानां नित्यत्वे प्रमाणमाह सत्येति ॥ १० ॥ तत्रापि दोषसद्भावात्पक्षांतरमाह नित्येति तस्य हिरण्यगर्भस्य किं रूपमित्यत आह लिंगदेहेनेति मायोपाधिकः परमात्मा लिंगशरीरसमष्ट्यभिमानेन हिरण्यगर्भ इत्युच्यते इत्यर्थः ॥ ११ ॥ हिरण्यगर्भस्येश्वरत्वे किं प्रमाणमित आह उद्गीथेति ननु लिंगशरीरयोगे जीवः स्यादित्याशंक्य अविद्याकामकर्माभावान्न जीव इत्याह लिंगसत्त्वेऽपीति ॥ १२॥ केवलं लिंगशरीरस्य स्थूलदेहं विहायानुपलभ्यमानत्वात् स्थूलशरीरस-

तो मस्तकादिमान् ॥ १३ ॥ सहस्रशीर्षेत्येवं च विश्वतश्चक्षुरित्यपि ॥ श्रुतामित्याहुरनिशं विश्वरूपस्य चिंतकाः ॥ १४ ॥ सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता ॥ ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥ १५ ॥ पुत्रार्थं तमुपासीना एवमाहुः प्रजापतिः ॥ प्रजा असृजतेत्यादिश्रुतिं चोदाहरंत्यमी ॥ १६ ॥ विष्णोर्नाभेः समुद्भूतो वेधाः कमलजस्ततः ॥ विष्णुरेवेश इत्याहुर्लोके भागवता जनाः ॥ १७ ॥ शिवस्य पादावन्वेष्टुं शार्ङ्ग्यशक्तस्ततः शिवः ॥ ईशो न विष्णुरित्याहुः शैवा आगममानिनः ॥ १८ ॥ पुरत्रयं सादयितुं विघ्नेशं सोऽप्यपूजयत् ॥ विनायकं प्राहुरीशं गाणपत्यमते रताः ॥ १९ ॥ एवमन्ये स्वस्वपक्षाभिमानेनान्यथाऽन्यथा ॥ मंत्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥ २० ॥ अंतर्यामिणमारभ्य स्थावरांतेशवादिनः ॥ संत्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात्

---

मष्टयभिमानी विराडेवेश्वर इत्याह स्थूलदेहंविनेति ॥ १३ ॥ तत्सद्भावे प्रमाणमाह सहस्रशीर्षेति श्रुतं वाक्यमिति शेषः विश्वरूपस्य चिंतकाः विराडुपासकाः ॥ १४ ॥ अत्रापि दोषदृष्ट्या देवतांतरमालंबते इत्याह सर्वइति ॥ १५ ॥ एवं कैरुच्यते इत्यत आह पुत्रार्थमिति प्रजापतिः प्रजा असृजतेत्यादिवाक्यं तत्र प्रमाणमित्याहुरित्याह प्रजापतिरिति ॥ १६ ॥ भागवतमतमाह विष्णोरिति ॥ १७ ॥ शैवानां मतं आह शिवस्येति ॥ १८ ॥ गाणपत्यमतमाह पुरत्रयमिति ॥ १९ ॥ उक्तन्यायमन्यत्राप्यतिदिशति एवमिति अन्ये भैरवमैरालाद्युपासकाः अन्यथाऽन्यथावर्णने कारणमाह स्वस्वेति तत्र तत्र प्रमाणानि संतीति दर्शयति मंत्रेति ॥ २० ॥ एवं कतिमतानीत्याशंक्य असंख्यानीत्याह अंतर्यामिणमिति

॥ २१ ॥ तत्त्वनिश्चयकामेन न्यायागमविचारिणां ॥ एकैव प्रतिपत्तिः स्यात् साऽप्यत्र स्फुटमुच्यते ॥ २२ ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ २३ ॥ इति श्रुत्यनुसारेण न्याय्यो निर्णय ईश्वरे ॥ तथा सत्यविरोधः स्यात्स्थावरांतेशवादिनाम् ॥ २४ ॥ माया चेयं तमोरूपा तापनीये तदीरणात् ॥ अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयं ॥ २५ ॥ जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः ॥ आ-

---

स्थावरेशवादो न क्वापि दृष्टचर इत्याशंक्याह अश्वत्थार्केति ॥ २१ ॥ नन्वेवं मतभेदे कस्योपादेयत्वं कस्य वा हेयत्वमित्याकांक्षायामाह तत्त्वनिश्चयेति तत्त्वनिश्चयकामेन तत्त्वनिश्चयेच्छया न्यायागमयोर्विचारणशीलानां पुरुषाणां प्रतिपत्तिरेकैव स्यात् सा कीदृशीत्यतआह साऽप्यत्रेति ॥ २२ ॥ तामेव प्रतिपत्तिं दर्शयितुं तदनुकूलां श्रुतिं पठति मायांत्विति मायामेव प्रकृतिं जगदुपादानकारणं विद्यात् जानीयात् मायिनं तु मायोपाधिकमंतर्यामिणमेव महेश्वरं मायाधिष्ठातारं निमित्तकारणं जानीयात् अस्य मायिनो महेश्वरस्यावयवभूतैरंशरूपैश्वरात्मकैर्जीवैः कृत्स्नमिदं जगव्द्याप्तमित्यस्याः श्रुतेरर्थः ॥ २३ ॥ एतच्छ्रुत्यनुसारेणेश्वरविषयो निर्णयो युक्त इत्याह इतीति कुतो युक्त इत्याशंक्य सर्वत्राविरुद्धत्वादित्याह तथेति सर्वस्यापीश्वरत्वाभ्युपगमान्न केनापि विरोध इति भावः ॥ २४ ॥ ननु जगत्प्रकृतिभूतायाःमायायाः किं रूपमित्यत आह मायाचेयमिति कुत इत्यत आह तापनीयइति माया च तमोरूपेति तापनीयोपनिषदि तमोरुपत्वस्याभिधानादित्यर्थः मायायास्तमोरूपत्वे किं प्रमाणमित्याकांक्षायां अनुभूतेरिति श्रुतिरेवात्रानुभवः प्रमाणमिति प्रतिजानीते इत्याह अनुभूतिमिति ॥ २५ ॥ तत्र मायायास्तमोरूपत्वे कोऽसावनुभव इत्याकांक्षायां तदेतज्जडं मोहात्मकमिति श्रुतिरेवात्रानुभवं स्पष्टयतीत्याह जडमिति अनंतमिति श्रुत्या सर्वानुभवसिद्धत्वमुच्यते इत्याह

बालगोपं स्पष्टत्वादानंत्यं तस्य साऽब्रवीत् ॥ २६ ॥ अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत् ॥ यत्र कुंठीभवेद्बुद्धिः स मोह इति लौकिकाः ॥ २७ ॥ इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ॥ युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥ २८ ॥ नासदासीद्विभातत्वान्नो सदासीच्च बाधनात् ॥ विद्यादृष्ट्या श्रुतं तुच्छं तस्यानित्यनिवृत्तितः ॥ २९ ॥ तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ॥ ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥३०॥ अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ ॥ प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥३१॥ अस्वतंत्रा हि माया स्या-

---

आबालेति जडं मोहं च प्रकृतेः कार्यं इति आबालगोपालादीनां सर्वेषां अनुभव इत्यर्थः ॥ २६ ॥ जडशब्दस्यार्थमाह अचिदात्मेति मोहशब्दार्थमाह यत्रेति ॥२७॥ उक्तप्रकारेण सर्वानुभवसिद्धत्वलक्षणमानंत्यं सिद्धमित्याह इत्थमिति एतज्जाड्यमोहलक्षणतमोरूपत्वं नन्वेवं मायायाः सर्वानुभवसिद्धत्वे घटादिवत् ज्ञानेनानिवर्त्यत्वं स्यादित्याशंक्याह युक्तीति तुशब्दः शंकाव्यावृत्त्यर्थः अनिर्वाच्यं सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यं तत्र किं प्रमाणमित्यत आह नासदिति ॥ २८ ॥ अस्याः श्रुतेरभिप्रायमाह नासदासीदिति बाधनान्नेह नानास्ति किंचनेति श्रुत्या निषेधादित्यर्थः सदसद्रूपत्वं तु विरुद्धत्वादयुक्तमिति श्रुत्योपेक्षितं एवं युक्तिदृष्ट्याऽनिर्वचनीयत्वं प्रदर्श्य तुच्छमिदं रूपमस्येति श्रुतिर्विद्वदनुभवेन तस्यास्तुच्छत्वं दर्शयतीत्याह विद्येति तुच्छत्वे हेतुमाह तस्येति ॥ २९ ॥ उपपादितमर्थमुपसंहरति तुच्छेति श्रौतबोधेन तुच्छा कालत्रयेऽप्यसती यौक्तिकबोधेनानिर्वचनीया लौकिकबोधेन वास्तवी चेत्येवं त्रिधा माया ज्ञेयेत्यर्थः ॥ ३० ॥ अस्य सत्त्वमसत्त्वं च दर्शयतीति श्रुतेरर्थमस्याः कृत्यमाह अस्येति एकस्या एव मायाया जगत्सत्त्वासत्त्वप्रदर्शकत्वे दृष्टांतमाह प्रसारणादिति ॥ ३१ ॥ स्वतंत्रास्वतंत्रत्वेनोति श्रुत्या

दप्रतीतेर्विना चितिं॥स्वतंत्राऽपि तथैव स्यादसंगस्यान्यथाकृतेः॥३२॥कूटस्थासंगमात्मानं जगत्त्वेन करोति सा॥चिदाभासस्वरूपेण जीवेशावपि निर्ममे॥३३॥ कूटस्थमनुपद्रुत्य करोति जगदादिकं॥ दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः॥ ३४ ॥ द्रवत्वमुदके वन्हावौष्ण्यं काठिन्यमश्मनि॥ मायाया दुर्घटत्वं च स्वतः सिध्यति नान्यतः॥ ३५॥ न वेत्ति लोको यावत्तां साक्षात्तावच्चमत्कृतिं॥ धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥ ३६ ॥ प्रसरंति हि चोद्यानि जगद्वस्तुत्ववादिषु॥ न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः॥ ३७॥ चोद्येऽपि यदि चोद्यं स्यात् त्वच्चोद्ये

मायायाः स्वातंत्र्यास्वातंत्र्ये दर्शिते तत्रोभयत्रोपपत्तिमाह अस्वतंत्रेति स्वभासकचैतन्यं विहाय न प्रकाशते इत्यस्वतंत्राऽसंगस्यात्मनोऽन्यथाकरणात् स्वतंत्राऽपीत्यर्थः॥ ३२ ॥ अन्यथाकरणमेव स्पष्टयति कूटस्थासंगमिति जीवेशावाभासेन करोतीति श्रुत्युक्तं जीवेश्वरविभागं च करोतीत्याह चिदाभासेति॥ ३३ ॥ नन्वात्मनोऽन्यथाकरणे कूटस्थत्वहानिः स्यादित्याशंक्याह कूटस्थमिति ननु कूटस्थत्वाविघातेन जगदादिस्वरूपत्वापादनं दुर्घटमित्याशंक्य मायायां दुर्घटैकविधायित्वान्नेदमाश्चर्यकारणमित्याह दुर्घटेति अन्यथा मायात्वमेव भज्येतेति भावः॥ ३४ ॥ मायाया दुर्घटकारित्वस्वभावत्वे दृष्टांतमाह द्रवत्वमिति उदकादीनां द्रवत्वादि यथा स्वाभाविकं तद्वन्मायाया दुर्घटकारित्वमित्यर्थः॥ ३५ ॥ ननु मायादुर्घटकारित्वमाश्चर्यकारणं न भवतीति उक्तं अनुपपन्नं लोके मायायाश्चमत्कारहेतुत्वदर्शनादित्याशंक्य मायायाः प्रयोक्तृत्वसाक्षात्कारपर्यंतमेवास्या आश्चर्यकारणत्वं नोपरिष्टादित्याह नवेत्तीति॥ ३६ ॥ किंच जगत्सत्यत्ववादिनो नैयायिकादीन् प्रत्येवंविधानि चोद्यानि कर्तव्यानि न मायावादिनं प्रति इत्याह प्रसरंतीति॥ ३७ ॥ मायावादिनं प्रति चोद्यकरणेऽतिप्रसंगमाह चोद्येऽपीति तर्हि किं कर्तव्यमित्यत आह परिहार्य-

चोद्यते मया ॥ परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यतां ॥ ३८ ॥ विस्मयैकशरीराया मायायाश्चोद्यरूपतः ॥ अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ॥ ३९ ॥ मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु ॥ लोकप्रसिद्धमायाया लक्षणं यत्तदीक्ष्यताम् ॥ ४० ॥ न निरूपयितुं शक्या विस्पष्टं भासते च या ॥ सा मायेतींद्रजालादौ लोकाः संप्रतिपेदिरे ॥ ४१ ॥ स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् ॥ मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥४२॥ निरूपयितुमारब्धे निखिलैरपि पंडितैः ॥ अज्ञानं पुरतस्तेषां भाति कक्षासु कासुचित् ॥ ४३ ॥ देहेंद्रियादयो भावा वीर्येणोत्पादिताः कथम् ॥ कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् ॥ ४४ ॥ वीर्यस्यैष स्वभावश्चेत्कथं तद्विदितं त्वया ॥ अन्वयव्यतिरेकौ यौ भग्नौ तौ वंध्यवीर्य-

---

मिति ॥ ३८ ॥ उक्तमेवार्थं प्रपंचयति विस्मयेति ॥ ३९ ॥ मायात्वनिश्चये तत्परिहारान्वेषणमुचितं स एव नेदानीं सिद्ध इति शंकते मायात्वमिति मायालक्षणसद्भावान्मायात्वं निश्चीयतामित्यभिप्रायेणाह तर्हीति किं लक्षणमित्यत आह लोकेति ॥ ४० ॥ तस्या अपि किं लक्षणमित्यत आह न निरूपयितुमिति ॥ ४१ ॥ दृष्टांते सिद्धं लक्षणं दार्ष्टांतिके योजयति स्पष्टमिति ॥ ४२ ॥ जगतोऽशक्यनिरूपणत्वं कथमित्याशंक्य तद्दर्शयति निरूपयितुमिति ॥ ४३ ॥ अशक्यनिरूपणत्वमेवोदाहरणेन स्पष्टयति ॥ ४४ ॥ स्वभाववादी शंकते वीर्यस्येति सिद्धांती पृच्छति कथं तदिति अन्वयव्यतिरेकाभ्यां जानामीत्याशंक्य व्याप्त्यभावान्नैवमित्याह अन्वयेति वंध्यवीर्यतः वंध्यायां च तत्र वीर्यस्य व्यर्थत्वात् व्याप्तिर्न घटते यत्र वीर्यं तत्र तत्र देहादिकं इति न अन्वयोऽपि

तः ॥ ४५ ॥ न जानामि किमप्येतदित्यंते शरणं तव ॥ अत एव महांतोऽस्य प्रवदंतींद्रजालताम् ॥ ४६ ॥ एतस्मात्किमिवेंद्रजालमपरं यद्गर्भवासस्थितम् ॥ रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरम् ॥ पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं ॥ पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति ॥ ४७ ॥ देहवद्वटधानादौ सुविचार्य विलोक्यताम् ॥ क्व धाना कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ॥ ४८ ॥ निरुक्तावभिमानं ये दधते तार्किकादयः ॥ हर्षमिश्रादिभिस्ते तु खंडनादौ सुशिक्षिताः ॥ ४९ ॥ अचिंत्याः खलु ये भावा न तांस्तर्केषु योजयेत् ॥ अचिंत्यरचनारूपं मनसाऽपि जगत्खलु ॥ ५० ॥ अचिंत्यरचनाशक्तिबीजं मायेति निश्चिनु ॥ मायाबीजं तदेवैकं सुषुप्तावनुभूयत ॥ ५१ ॥ जाग्रत्स्वप्नजगत्तत्र लीनं बीज इव द्रुमः ॥ तस्मादशेषजगतो वासनास्तत्र संस्थिताः ॥ ५२ ॥ या

---

॥ ४५ ॥ एवं पुनः पुनः पृष्टे सति किमपि न जानामीत्येवोत्तरं देयमिति फलितमाह नजानामीति ॥ ४६ ॥ उक्तानिर्वचनीयत्वे वृद्धसंमतिं दर्शयति एतस्मादिति ॥ ४७ ॥ न केवलं देहस्यैव दुर्निरूपत्वं किंतु वटवृक्षादेरपीत्याह देहवदिति ॥ ४८ ॥ नन्वास्माभिर्निर्वक्तुमशक्यत्वेऽपि उदयनादिभिराचार्यैर्निरूच्यते इत्याशंक्याह निरुक्ताविति ॥ ४९ ॥ उक्तार्थे सांप्रदायिकानां वाक्यं संवादयति अचिंत्याइति ॥ ५० ॥ ननु भवत्वेवं जगतोऽचिंत्यरचनात्वं मायायां किमायातमित्यत आह अचिंत्यरचनेति अचिंत्यरचनाशक्तिमत् यद्बीजं कारणं सैव मायेत्यर्थः नत्वेवंविधं कारणं क्व दृष्टमित्यत आह मायेति ॥ ५१ ॥ कथं तस्य जगद्बीजत्वमित्यत आह जाग्रदिति ततः किमित्यत आह तस्मादिति यतो जगत्कारणं मायाऽतोऽशेषजगद्वासनास्तत्र मायायां तिष्ठंतीत्यर्थः ॥ ५२ ॥ ततोऽपि

बुद्धिवासनास्तासु चैतन्यं प्रतिबिंबति ॥ मेघाकाशवदस्पष्टचिदाभासोऽनुमीयताम् ॥ ५३ ॥ साभासमेव तद्बीजं धीरूपेण प्ररोहति ॥ अतो बुद्धौ चिदाभासो विस्पष्टं प्रतिभासते ॥ ५४ ॥ मायाभासेन जीवेशौ करोतीति श्रुतौ श्रुतम् ॥ मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ ॥ ५५ ॥ मेघवद्वर्तते माया मेघस्थिततुषारवत् ॥ धीवासनाश्चिदाभासस्तुषारस्थखवत्स्थितः ॥ ५६ ॥ मायाधीनश्चिदाभासः श्रुतो मायी महेश्वरः ॥ अंतर्यामी च सर्वज्ञो जगद्योनिः स एव हि ॥ ५७ ॥ सौषुप्तमानंदमयं प्रक्रम्यैवं श्रुतिर्ज-

---

किं तत्राह याबुद्धीति ननु तासु प्रतिबिंबोऽस्ति चेत्कुतो नानुभूयते इत्याशंक्यास्पष्टत्वादित्याह मेघेति तर्हि कुतस्तत्सिद्धिरित्यत आह अनुमीयतामिति ॥ ५३ ॥ ननु मेघांशोदकस्यास्पष्टाकाशप्रतिबिंबवत्त्वेऽपि तज्जातीयस्य घटोदकस्य स्पष्टाकाशप्रतिबिंबवतः सद्भावान्मेघाकाशानुमानं घटते इह तथाविधदृष्टांताभावात्कथमनुमानोदय इत्याशंक्यात्रापि तथाविधदृष्टांतसंपादनाय आह साभासमिति चिदाभासविशिष्टं तदेवाज्ञानं बुद्धिरूपेण परिणममानं विस्पष्टचिदाभासवद्भवतीति भावः एवं चेदनुमानमत्र सूचितं भवति विमता बुद्धिवासनाश्चित्प्रतिबिंबवत्यो भवितुमर्हंति बुद्ध्यवस्थाविशेषत्वात् बुद्धिवृत्तिवदिति ॥ ५४ ॥ एवं जीवेश्वरयोर्मायिकत्वं श्रुत्युक्तमुपपादितमुपसंहरति मायाभासेनेति ननु जीवेशयोर्मायिकत्वे समाने कथमवांतरभेदसिद्धिरित्याशंक्यास्पष्टस्पष्टोपाधिमत्त्वेन मेघाकाशजलाकाशयोरिव तत्सिद्धिरित्याह मेघाकाशेति ॥ ५४ ॥ ईशस्य मेघाकाशसाम्यं स्फुटीकरोति मेघवदिति ॥ ५७ ॥ मायाप्रतिबिंबस्येश्वरत्वे किं प्रमाणमित्याशंक्य श्रुतिरेवेत्याह मायाधीनइति न केवलमीश्वरत्वमस्य श्रुतं अपित्वंतर्यामित्वादिकमपि धर्मजातं श्रुतमस्तीत्याह अंतर्यामीति ॥ ५७ ॥ ननु धीवासनाप्रतिबिंबस्येश्वरत्वादिकं कथं श्रुतिसिद्धं इत्याशंक्य तदुपपादिकां श्रुतिं दर्शयति सौषुप्तमिति सुषुप्तस्थाने एकीभूतः प्रज्ञानघन

गौ ॥ एष सर्वेश्वर इति सोऽयं वेदोक्त ईश्वरः ॥ ५८ ॥ सर्वज्ञत्वादिके तस्य नैव विप्रतिपद्यताम् ॥ श्रौतार्थस्याविर्तक्यत्वान्मायायां सर्वसंभवात् ॥ ५९ ॥ अयं यत्सृजते विश्वं तदन्यथयितुं पुमान् ॥ न कोऽपि शक्तस्तेनायं सर्वेश्वर इतीरितः ॥ ६० ॥ अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ॥ ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥ ६१ ॥ वासनानां परोक्षत्वात्सर्वज्ञत्वं न हीक्ष्यते ॥ सर्वबुद्धिषु तद्दृष्ट्वा वासनास्वनुमीयताम् ॥ ६२ ॥ विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ॥ अंतस्तिष्ठन् यमयति तेनां-

---

एवेत्यादिका श्रुतिः धीवासनाप्रतिबिंबरूपस्यानंदमयस्येश्वरत्वादिकं प्रतिपादयतीत्यर्थः ॥ ५८ ॥ नन्वानंदमयस्य सर्वज्ञत्वादिकं अनुभवविरुद्धमित्याशंक्याह सर्वज्ञत्वादिकइति कुत इत्यत आह श्रौतेति इतोऽपि न विप्रतिपत्तिः कार्येत्याह मायायामिति ॥ ५९ ॥ नन्वनुकूलयुक्त्यभावे श्रुतिरपि ग्रावप्लववाक्यवदर्थवादः स्यादित्याशंक्य श्रुतिप्रामाण्यसिद्धये सर्वेश्वरत्वादिकमुपपादयति अयमिति अयमानंदमयो यज्जाग्रदादि विश्वं सृजति तन्न केनाप्यन्यथाकर्तुं शक्यते अतोऽयं सर्वेश्वर इत्यर्थः ॥६०॥ इदानीं सर्वज्ञत्वमुपपादयति अशेषेति तत्र सौषुप्तेऽज्ञाने कारणभूते कार्यभूतानां सर्वप्राणिबुद्धीनां वासना निवसंति ताभिश्च वासनाभिः सर्वं जगत् क्रोडीकृतं विषयीकृतं तेन सर्वबुद्धिवासनावदज्ञानोपाधिकत्वेन सर्वज्ञ उच्यते इत्यर्थः ॥ ६१ ॥ ननु यदि सर्वज्ञत्वमस्ति तर्हि तत् कुतो नानुभूयते इत्याशंक्य तदुपाधीनां वासनानां परोक्षत्वान्नानुभव इत्याह वासनानामिति कथं तर्हि तदवगम इत्याशंक्याह सर्वबुद्धिष्विति सर्वबुद्धिनिष्ठं सर्वज्ञत्वं स्वकारणभूतवासनागतसर्वज्ञत्वपुरःसरं भवितुमर्हति कार्यनिष्ठधर्मविशेषत्वात्पटगतरूपादिवदित्यर्थः ॥ ६२ ॥ ससर्वज्ञत्वमुपपाद्यैषोंऽतर्यामीति श्रुत्युक्तमंतर्यामित्वमुपपादयति विज्ञानेति

तर्यामितां व्रजेत् ॥ ६३ ॥ बुद्धौ तिष्ठन्नांतरोऽस्याधियानीक्ष्यश्च धीवपुः ॥ धियमंतर्यमयतीत्येवं वेदेन घोषितम् ॥ ६४ ॥ तंतुः पटे स्थितो यद्वदुपादानतया तथा ॥ सर्वोपादानरूपत्वात् सर्वत्रायमवस्थितः ॥ ६५ ॥ पटादप्यांतरस्तंतुस्तंतोरप्यंशुरांतरः ॥ आंतरत्वस्य विश्रांतिर्यत्रासावनुमीयताम् ॥ ६६ ॥ द्वित्रांतरत्वकक्षाणां दर्शनेऽप्ययमांतरः ॥ न वीक्ष्यते ततो युक्तिश्रुतिभ्यामेव निर्णयः ॥६७॥ पटरूपेण संस्थानात् पटस्तंतोर्वपुर्यथा ॥ सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा ॥ ६८ ॥ तंतोः संकोचविस्तारचलनादौ पटस्तथा ॥ अवश्यमेव भवति न स्वातंत्र्यं पटे

---

अन्यत्र पृथिव्यादौ तिष्ठन् यमयति यतस्तेनेत्यन्वयः ॥ ६३ ॥ अस्मिन्नर्थेऽतर्यामिब्राह्मणं कृत्स्नं प्रमाणमिति दर्शयितुं तदेकदेशभूतं यो विज्ञाने तिष्ठन्नित्यादिवाक्यमर्थतोऽनुक्रामति बुद्धाविति ॥ ६४ ॥ इदानीमंतर्यामिब्राह्मणस्य प्रतिपर्यायव्याख्याने ग्रंथबाहुल्यभयाव्द्याख्यानस्य सर्वपर्यायसंचारित्वसिद्धये यः सर्वेषु भूतेष्विति पर्यायं व्याचक्षाणो यः सर्वेषु भूतेषु तिष्ठन्नित्यस्यार्थं दृष्टांतेनाह तंतुरिति ॥ ६५ ॥ ननूपादानतया सर्वत्रायमवस्थितश्चेत् किमिति सर्वत्र नोपलभ्यते इत्याशंक्य सर्वांतरत्वादित्याह पटादपीति अत्रेदमनुमानं आंतरत्वतारतम्यं क्वचिद्विश्रांतं तारतम्यत्वादणुत्वतारतम्यवदिति ॥ ६६ ॥ नन्वांतरत्वेऽप्यंश्वादिवदंतर्यामिणो दर्शनं किं न स्यादित्याशंक्य तेषामिव बाह्यत्वाभावान्न दृश्यते इत्यभिप्रायेणाह द्वित्रान्तरत्वेति कुतस्तर्हि तन्निर्णय इत्यत आह ततइति अचेतनस्य चेतनाधिष्ठानमंतरेण प्रवृत्त्यनुपपत्तिर्युक्तिः श्रुतिस्तूदाहृतैव ॥ ६७ ॥ यस्य सर्वाणि भूतानि शरीरमित्यस्यार्थमाह पटरूपेणेति पटरूपेणावस्थितस्य तंतोः पटः शरीरं यथा एवं सर्वरूपेणावस्थितस्य सर्वशरीरमित्यर्थः ॥ ६८ ॥ यः सर्वाणि भूतान्यांतरो यमयतीति वाक्यस्य तात्पर्य

मनाक् ॥ ६९ ॥ तथांतर्याम्ययं यत्र यया वासनया यथा॥ विक्रियेत तथाऽवश्यं भवत्येव न संशयः ॥७० ॥ ईश्वरः सर्वभुतानां हृद्देशेऽर्जुन तिष्ठति ॥ भ्रामयन्त्सर्वभूतानि यंत्रारूढानि मायया ॥ ७१ ॥ सर्वभूतानि विज्ञानमयास्ते हृदये स्थिताः॥ तदुपादानभूतेशस्तत्र विक्रियते खलु॥७२॥ देहादिपंजरं यंत्रं तदारोहोऽभिमानिता ॥ विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ ७३ ॥ विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः ॥ स्वशक्त्येशो विक्रियते मायया भ्रामणं हि तत् ॥ ७४ ॥ अंतर्यमयतीत्युक्त्याऽयमेवार्थः श्रुतौ श्रुतः ॥ पृथिव्यादिषु सर्वत्र न्यायोऽयं योज्यताम् धिया ॥ ७५ ॥ जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ॥ केनापि देवेन हृदि स्थितेन यथा नि-

---

सदृष्टांतमाह श्लोकद्वयेन तंतोरिति ॥ ६९ ॥ तंतुसंकोचादिना पटसंकोचादिर्यथा भवति एवं पृथिव्यादिभूपादानत्वेन स्थितोंऽतर्यामी यथा यया वासनया यथा घटादिकार्यरूपेण विक्रियेत तथा तत्कार्यजातमवश्यं भवतीति भावः ॥ ७० ॥ एवमंतर्यामिप्रतिपादिकां श्रुतिमुपन्यस्य स्मृतिमप्युपन्यस्याति ईश्वरइति ॥ ७१ ॥ सर्वभूतानामिति पदस्यार्थमाह सर्वभूतानीति ते च हृदयपुंडरीके स्थिताः ननु तेषां कुतो हृद्यवस्थानमित्याशंक्य हृद्यंतर्यामिणो विज्ञानमयाकारेण परिणामादित्याह तदुपादानेति ॥ ७२॥ यंत्रारूढानीत्यत्र यंत्रारोहशब्दयोरर्थमाह देहादीति भ्रामयन्नितिपदे प्रकृत्यर्थमाह विहितेति ॥ ७३ ॥ इदानीं णिच्प्रत्ययमायापदयोरर्थमाह विज्ञानमयेति ॥ ७४ ॥ श्रौतस्य यमयतीतिपदस्याप्ययमेवार्थ इत्याह अंतर्यमयतीति उक्तव्याख्यानं पर्यायांतरेष्वतिदिशति पृथिव्यादिष्विति ॥ ७५ ॥ प्रवृत्तिजातस्य सर्वेश्वराधीनत्वे वचनांतरमुदाहरति जानामिधर्ममिति

युक्तोऽस्मि तथा करोमि ॥ ७६ ॥ नार्थः पुरुषकारेणेत्येवं मा शंक्यतां यतः ॥ ईशः पुरुषकारस्य रूपेणापि विवर्तते ॥ ७७ ॥ ईदृग्बोधेनेश्वरस्य प्रवृत्तिर्मैव वार्यताम् ॥ तथाऽपीशस्य बोधेन स्वात्मासंगत्वधीजनिः ॥ ७८ ॥ तावता मुक्तिरित्याहुः श्रुतयः स्मृतयस्तथा ॥ श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम् ॥ ७९ ॥ आज्ञाया भीतिहेतुत्वं भीषास्मादिति हि श्रुतम् ॥ सर्वेश्वरत्वमेतत्स्यादंतर्यामित्वतः पृथक् ॥ ८० ॥ एतस्य वा अक्षरस्य प्रशासन इति श्रुतिः ॥ अंतः प्रविष्टःशास्ताऽयं जनानामिति च श्रुतिः ॥ ८१ ॥ जगद्योनिर्भवेदेष प्रभवाप्ययकृ-

---

॥ ७६ ॥ ननु प्रवृत्तेरीश्वराधीनत्वे पुरुषप्रयत्नो व्यर्थः स्यादित्याशंक्य पुरुषप्रयत्नस्यापीश्वररूपत्वान्मैवमिति परिहरति नार्थइति अर्थः प्रयोजनं पुरुषकारः पुरुषप्रयत्नः ॥ ७७ ॥ ननु पुरुषप्रयत्नस्यापीश्वररूपत्वे यमयाति भ्रामयतीति प्रतिपादितमंतर्यामिप्रेरणं वृथा स्यादित्याशंक्य तद्बोधेन स्वात्मासंगत्वज्ञानलक्षणफलस्य सत्त्वान्मैवमिति परिहरति ईदृगिति ईदृग्बोधेनेशस्य पुरुषकारादिरूपेणाप्यवस्थानज्ञानेन प्रवृत्तिः अंतर्यामिरूपेण प्रेरणा ॥ ७८ ॥ आत्मनोऽसंगत्वज्ञानेनापि किं प्रयोजनमित्यत आह तावतेति श्रुतिस्मृत्युदितस्यानतिलंघनीयत्वे स्मृतिं दर्शयति श्रुतिस्मृतीइति ॥ ७९ ॥ श्रुत्याऽपीश्वरस्य भीतिहेतुत्वमुक्तमित्याह आज्ञायाइति ईश्वरस्य भीतिहेतुत्वं किमर्थमुक्तमित्याशंक्य सर्वेश्वरत्वस्यांतर्यामित्वतः पार्थक्यसिद्धये इति मत्वाऽऽह सर्वेश्वरेति ॥ ८० ॥ बहिरंतश्चेश्वर एव नियामक इत्यत्र श्रुतिद्वयमाह एतस्येति ॥ ८१ ॥ क्रमप्राप्तस्यैष योनिरित्यर्थमाह जगद्योनिरिति प्रतिज्ञातार्थे प्रभवाप्ययौ हि भूतानामिति वाक्यं हेतुत्वेन योजयति प्रभवेति प्रभवाप्ययावुत्पत्तिप्रलयौ तत्कर्तृत्वात् जगद्योनिरित्यर्थः उत्पत्तिप्रलयशब्दयोर्विवक्षितमर्थमाह

त्त्वतः ॥ आविर्भावतिरोभावावुत्पत्तिप्रलयौ मतौ ॥ ८२ ॥ आविर्भावयति स्वस्मिन् विलीनं सकलं जगत् ॥ प्राणिकर्मवशादेष पटो यद्वत्प्रसारितः ॥ ८३ ॥ पुनस्तिरोभावयति स्वात्मन्येवाखिलं जगत् ॥ प्राणिकर्मक्षयवशात्संकोचितपटो यथा ॥ ८४ ॥ रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने ॥ तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥ ८५ ॥ आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना ॥ आरंभपरिणामादिचोद्यानां नात्र संभवः ॥ ८६ ॥ अचेतनानां हेतुः स्याज्जाड्यांशे नेश्वरस्तथा ॥ चिदाभासांशतस्त्वेष जीवानां कारणं भवेत् ॥ ८७ ॥ तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनां ॥ परः कारणतामेति भाव-

---

आविर्भावेति उत्पत्तिप्रलयावाविर्भावतिरोभावौ मताविति योजना ॥ ८२ ॥ आविर्भावकारित्वं सदृष्टांतमुपपादयति आविर्भावयतीति यथा संकुचितश्चित्रपटः स्वस्य प्रसारणेन स्वनिष्ठानि चित्राण्याविर्भावयति एवमीशोऽपीत्यर्थः ॥ ८३ ॥ तस्यैव प्रलयकारणत्वं दर्शयति पुनरिति स एव पटः संकुचितः चित्राणि यथा तिरोभावयति तद्वदित्यर्थः ॥ ८४ ॥ आविर्भावतिरोभावयोर्दृष्टांतांतराणि दर्शयति रात्रिघस्राविति घस्रोहः ॥ ८५ ॥ नन्वीश्वरस्य जगद्योनित्वं किं आरंभकत्वेन किंवा तदाकारपरिणामित्वेन नाद्यः अद्वितियस्यारंभकत्वायोगात् न द्वितीयः निरवयवस्य परिणामासंभवादित्याशंक्य विवर्तवादाश्रयणान्नायं दोष इति परिहरति आविर्भावेति ॥ ८६ ॥ नन्वेक एवेश्वरः कथं चेतनाचेतनजगदुपादानं भविष्यतीत्याशंक्य उपाधिप्राधान्येनाचेतनोपादानं चित्प्राधान्येन चेतनोपादानं च भविष्यतीत्याह अचेतनानामिति ॥ ८७ ॥ ननु मायाविन ईश्वरस्य जगत्कारणत्वप्रतिपादनमनुपपन्नं सुरेश्वराचार्यैः परमात्मन एव तदभिधानादिति शंकते द्वाभ्यां तमःप्रधान इति तमःप्रधानः तमोगुणप्रधानमायोपाधिकः

नाज्ञानकर्मभिः ॥ ८८ ॥ इति वार्तिककारेण जडचेतनहेतुता ॥ परमात्मन एवोक्ता नेश्वरस्येति चेच्छृणु ॥ ८९ ॥ अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव ॥ ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः ॥ ९० ॥ सत्यं ज्ञानमनंतं यत् ब्रह्म तस्मात्समुत्थिताः॥ खं वाय्वग्निजलोर्व्योषध्यन्नदेहा इति श्रुतिः ॥ ९१ ॥ आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता ॥ हेतोश्च सत्यता तस्मादन्योन्याध्यास इष्यते ॥ ९२ ॥ अन्योन्याध्यासरूपोऽसावन्नलिप्तपटो यथा ॥ घट्टितेनैकतामेति तद्वद्भ्रांत्यैकतां गतः ॥ ९३ ॥ मेघाकाशमहाकाशौ विविच्येते न पामरैः ॥ तद्वद्ब्रह्मेशयोरैक्यं पश्यंत्यापातदर्शिनः ॥ ९४ ॥ उपक्रमादिभिर्लिंगैस्तात्पर्य-

---

क्षेत्राणां शरीरादीनां भावनाज्ञानकर्मभिः भावना संस्कारः ज्ञानं देवताध्यानादिकर्म पुण्यापुण्यलक्षणं तैर्निमित्तभूतैरित्यर्थः॥८८ ॥ ८९॥ त्वंपदार्थइव तत्पदार्थेऽप्यधिष्ठानारोपयोरन्योन्याध्यासस्य विवक्षितत्वान्मैवमिति परिहरति अन्योन्याध्यासमिति ॥ ९० ॥ ननु सुरेश्वराचार्यैरीश्वरब्रह्मणोरन्योन्याध्यासः सिद्धवत्कृत्य व्यवहृत इति कुतोऽवगम्यते इत्याशंक्य श्रुत्यर्थपर्यालोचनवशादिति दर्शयितुं श्रुतिमर्थतः पठति सत्यमिति ॥ ९१ ॥ भवत्वेषा श्रुतिरनया कथमन्योन्याध्यासावगतिरित्यत आह आपातेति तत्र तस्यां श्रुतौ सत्यादिलक्षणस्य निर्गुणब्रह्मणो जगत्कारणत्वं जगत्कारणस्य मायाधीनाचिदाभासस्य च सत्यत्वमापाततः प्रतीयमानमन्योन्याध्यासमंतरेण न घटते इति भावः ॥ ९२ ॥ एवमन्योन्याध्याससिद्धमीश्वरब्रम्हणोरेकत्वं पूर्वत्रोदाहृतं घाट्टितपटदृष्टांतस्मारणेन द्रढयति अन्योन्येति ॥ ९३ ॥ भ्रांत्यैकत्वापत्तौ दृष्टांतमभिधायापातदर्शिनां भेदाप्रतीतौ पूर्वोक्तमेव दृष्टांतांतरं दर्शयति मेघाकाशेति तद्वत् ब्रह्मेशयोरैक्यं पश्यंति न भेदमित्यर्थः ॥ १४ ॥ कुतस्तर्हि ब्रह्मेशयोर्भेदावगतिरित्यत

स्य विचारणात् ॥ असंगं ब्रह्म मायावी सृजत्येष महेश्वरः ॥ ९५ ॥ सत्यं ज्ञानमनंतं चेत्युपक्रम्योपसंहृतम् ॥ यतो वाचो निवर्तंत इत्यसंगत्वनिर्णयः ॥ ९६ ॥ मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया ॥ अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत् ॥ ९७ ॥ आनंदमय ईशोऽयं बहुस्यामित्यवैक्षत ॥ हिरण्यगर्भरूपोऽभूत्सुप्तिः स्वप्नो यथा भवेत् ॥ ९८ ॥ क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ॥ द्विविश्रुधातिसद्भावात् द्विविधस्वप्नदर्शनात् ॥ ९९ ॥ सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्माकः ॥ सर्वाहंमा-

---

आह उपक्रमेति उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय इत्युक्तैः षड्विधैर्लिंगैः श्रुतितात्पर्यावधारणे सति ब्रह्मासंगं मायाविस्रष्टेत्यवगम्यत इति शेषः ॥ ९५ ॥ श्रुतावुपक्रमोपसंहारैकरूपप्रदर्शनेनोक्तं ब्रह्मणोऽसंगत्वं स्पष्टयति सत्यमिति अतोऽसंगत्वनिर्णयो भवतीति शेषः ॥ ९६ ॥ मायाविन ईश्वरस्य स्रष्टृत्वप्रतिपादिकां श्रुतिमर्थतो दर्शयति मायीति अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्ध इति श्रुतिरिश्वरस्य स्रष्टृत्वं जीवस्य तत्र जगति बद्धत्वं च दर्शयतीति भावः ॥ ९७ ॥ एवमानंदमयस्येश्वरस्य जगत्कारणत्वं प्रतिपाद्य तस्माज्जगदुत्पत्तिप्रकारमाह आनंदमयइति ईक्षित्वा च हिरण्यगर्भरूपोऽभूदित्यन्वयः तत्र दृष्टांतमाह सुप्तिरिति ॥ ९८ ॥ तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादौ क्रमेण सृष्टिश्रवणादिदं सर्वमसृजतेति युगपच्छ्रवणाच्च कस्योपादेयत्वं कस्य वा हेयत्वमित्याकांक्षायां श्रुतियुक्त्युपेतत्वादुभयं ग्राह्यमित्याह क्रमेति एषा जगत्सृष्टिर्द्विविधश्रुतिसद्भावात् क्रमेण युगपद्वा यथाश्रुति ज्ञेयेति योजना तत्रोपपत्तिर्द्विविधस्वप्नदर्शनादिति लोके क्रमयुक्तस्य चाक्रमयुक्तस्य च स्वप्नपदार्थजातस्य दर्शनादिति भावः ॥ ९९ ॥ हिरण्यगर्भस्य स्वरूपं निरूपयति सूत्रात्मेति सूत्रात्मा पटे सूत्रमिव जगत्यनुस्यूत आत्मा स्व-

नधारित्वात् क्रियाज्ञानादिशक्तिमान् ॥ २०० ॥ प्रत्यूषे वा प्रदोषे वा मग्नो मंदे तमस्ययं ॥ लोको भाति यथा तद्वदस्पष्टं जगदीक्ष्यते ॥ १ ॥ सर्वतो लांछितो मष्या यथा स्याद्घट्टितः पटः ॥ सूक्ष्माकारैस्तथेशस्य वपुः सर्वत्र लांछितं ॥ २ ॥ सस्यं वा शाकजातं वा सर्वतोऽकुरितं यथा ॥ कोमलं तद्वदेवैष पेलवो जगदंकुरः ॥ ३ ॥ आतपाभातलोको वा पटो वा वर्णपूरितः ॥ सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट् ॥ ४ ॥ विश्वरूपाध्याय एष उक्तः सूक्तेऽपि पौरुषे ॥ धात्रादिस्तंबपर्यंतानेतस्यावयवान्विदुः ॥ ५ ॥ ईशसूत्रविराड्वेधोविष्णुरुद्रेंद्रवन्हयः ॥ विघ्नभैरवमैरालमारिका

---

रूपं यस्य स सूक्ष्मदेह इत्याख्या यस्य स तथाविधः सर्वजीवघनात्मकः सर्वेषां जीवानां लिंगशरीरोपाधिकानां घनात्मकः समष्टिस्वरूपः तत्र हेतुः सर्वाहंमानेति सर्वेषु व्यष्टिलिंगशरीरेषु अहंमानवत्त्वादिति भावः इच्छाज्ञानक्रियाशक्तिमांश्च ॥ २०० ॥ हिरण्यगर्भावस्थायां जगत्प्रतीतौ दृष्टांतमाह प्रत्यूषइति प्रत्यूषः उषःकालः ॥ १ ॥ एवं लोकप्रसिद्धदृष्टांतमभिधाय यथा धौतइति पूर्वोक्तश्लोकेऽभिहितं लांछितं पटं दृष्टांतयति सर्वतइति यथा घट्टितः पटो मषीमयैराकारविशेषैर्लांछितो भवति तथा मायिन ईश्वरस्य वपुः अपंचीकृतभूतकार्यैर्लिंगशरीरैर्लीछितमित्यर्थः ॥ २ ॥ बुद्ध्यारोहाय वैभवात् दृष्टांतांतरमाह सस्यंवेति ॥ ३ ॥ एवं सूत्रात्मस्वरूपं विशदीकृत्य तस्यैवावस्थाभेदं पंचीकृतभूतकार्योपाधिकं विराजं दृष्टांतत्रयेण विशदयति आतपेति सूर्योदयानंतरमातपेन प्रकाशितो लोकः आतपाभातलोकः ॥ ४ ॥ तत्सद्भावे प्रमाणमाह विश्वरूपेति विश्वरूपाध्यायादौ कीदृक् रूपमुदितमित्याकांक्षायां ब्रह्मादिस्तंबपर्यंतजगद्रूपमुदितमित्याह धात्रादीति ॥ ५ ॥ एतावता प्रकृते किमायातमित्याशंक्यांतर्यामिप्रभृतिकुद्दालकादिपर्यंतं वस्तुजातं प्रत्ये-

यक्षराक्षसाः ॥ ६ ॥ विप्रक्षत्रियविट्शूद्रा गवाश्वमृगपक्षिणः ॥ अश्वत्थवटचूताद्या यवव्रीहितृणादयः ॥ ७ ॥ जलपाषाणमृत्काष्ठवास्याकुद्दालकादयः॥ईश्वराःसर्व एवैते पूजिताः फलदायिनः ॥ ८ ॥ यथा यथोपासते तं फलमीयुस्तथा तथा ॥ फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः ॥ ९ ॥ मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा ॥ स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा ॥ १० ॥ अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत् ॥ ईषजीवादिरूपेण चेतनाचेतनात्मकम् ॥ ११ ॥ आनंदमयविज्ञानमयावीश्वरजीवकौ ॥ मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पि-

---

कमीश्वरत्वेन पूज्यतामित्याह ईशेत्यादिना श्लोकत्रयेण ॥ ६ ॥ ७ ॥ ८ ॥ ते यथा यथोपासते तदेव भवतीति श्रुतिः तत्तत्पूजातस्तत्फलसद्भावे प्रमाणमित्याह यथायथेति ननु सर्वेषामीश्वरत्वे फलवैषम्यं कुत इत्याशंक्य पूज्यानामधिष्ठानानां पूजनानामर्चादीनां च सात्विकादिभेदेन वैषम्यमित्याह फलोत्कर्षेति ॥ ९ ॥ सांसारिकफलसिद्धिरेवं भवतु मुक्तिः कस्योपासनाद्भवतीत्याशंक्य ज्ञानव्यतिरेकेण केनापि न भवतीत्याह मुक्तिरिति तत्र दृष्टांतमाह स्वप्रबोधमिति स्वजागरणमंतरेण स्वनिद्राकल्पितस्वप्नो यथा न निवर्तते तथा ब्रह्मतत्त्वज्ञानमंतरेण तदज्ञानकल्पितः स्वसंसारो न निवर्तते इति भावः ॥ १० ॥ ननु द्वैतनिवृत्तिलक्षणाया मुक्तेः स्वप्नदृष्टांतेन तत्त्वबोधसाध्यत्वाभिधानमनुपपन्नं निवर्त्यस्य द्वैतस्य स्वप्नतुल्यत्वाभावादित्याशंक्यान्यथाग्रहणरूपत्वेन स्वप्नतुल्यत्वमस्त्येव त्रयमेतत्सुषुप्तं स्वप्नं मायामात्रमिति श्रुत्याऽभिहितत्वान्मैवमित्याह अद्वितीयेति ईशजीवादिरूपेण वर्तमानं चेतनाचेतनात्मकं यदखिलं जगदस्त्ययमद्वितीयब्रह्मतत्त्वे स्वप्न इति योजना ॥ ११ ॥ नन्वीशजीवयोर्ब्रह्माभिन्नयोः कथं जगदंतःपातित्वमित्याशंक्य तयोर्मायाकल्पितत्वेन जगदंतःपातित्वमित्या-

तम् ॥ १२ ॥ ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ॥ जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः ॥ १३ ॥ अद्वितीयं ब्रह्मतत्त्वमसंगं तन्न जानते ॥ जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः ॥ १४ ॥ ज्ञात्वा सदा तत्त्वनिष्ठा ननु मोदामहे वयम् ॥ अनुशोचाम एवान्यान्न भ्रांतैर्विवदामहे ॥ १५ ॥ तृणार्चकादियोगांता ईश्वरे भ्रांतिमाश्रिताः ॥ लोकायतादिसांख्यांता जीवे विभ्रान्तिमाश्रिताः ॥ १६ ॥ अद्वितीयब्रह्मतत्त्वं न जानंति यदा तदा ॥ भ्रांता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ १७ ॥ उत्तमाधमभावश्चेत्तेषां स्यादस्तु तेन किम् ॥ स्वप्नस्थराज्यभिक्षाभ्यां न बुद्धः स्पृश्यते खलु ॥ १८ ॥ तस्मान्मुमुक्षु-

ह आनंदमयेति ॥ १२ ॥ ताभ्यां सर्वं कल्पितमित्युक्तं तत्र केन कियत्कल्पितमित्याकांक्षायामाह ईक्षणादीति स इक्षत लोकान्नुसृजा इत्यादिकया एतया द्वारा प्रापद्यतेत्यंतया श्रुत्या प्रतिपादिता सृष्टिरीश्वरकर्तृका तस्य त्रय आवसथा इत्यादिकया स एतमेव पुरुषं ब्रह्मततममपश्यदित्यंतया श्रुत्या प्रतिपादितः संसारो जीवकर्तृक इत्यर्थः ॥ १३ ॥ ननु ब्रह्मण एव पारमार्थिकत्वे वादिनां जीवेश्वरतत्त्वविषया विप्रतिपत्तिः कुत इत्याशंक्य श्रुतिसिद्धतत्त्वज्ञानशून्यत्वादित्याह अद्वितीयमिति ॥ १४ ॥ जीवेश्वरविषयाया वादिविप्रातिपत्तेः अज्ञानमूलत्वे तथाविधतत्त्वेन बोधनीया इत्याशंक्य वृथाश्रमत्वान्नेत्याह ज्ञात्वेति ॥ १५ ॥ ईश्वरे जीवे च भ्रांत्या विप्रतिपन्नात् वादिनो विभज्य दर्शयति तृणेति ॥ १६ कुतो भ्रांतत्वं तेषामित्यत आह अद्वितीयेति ततः किं तत्राह तेषामिति परिगृहीतपक्षप्रतिपादनाभिनिवेशेन चित्तविश्रांत्यभावात् नैहिकमपि सुखं तेषामित्याह क्वेहवेति ॥ १७ ॥ ननु तेषां ब्रह्मविद्याभावेऽपि इतरविद्याप्रयुक्त उत्तमाधमभावो दृश्यते उत्तमत्वप्रयुक्तं सुखं केषांचित्स्यादित्याशंक्य तस्य मुमुक्षुभिरनादरणीयत्वं दृष्टांतेनाह उत्तमाधमेति ॥ १८ ॥ जीवेश्वरवाद-

भिन्नैव मतिर्जीवेशवादयोः ॥ कार्या किंतु ब्रम्हतत्त्वं विचार्यं बुध्यतां च तत् ॥ १९ ॥ पूर्वपक्षतया तौ चेत्तत्त्वनिश्चयहेतुताम् ॥ प्राप्नुतोऽस्तु निमज्जस्व तयोर्नैतावताऽवशः ॥ २० ॥ असंगचिद्विभुर्जीवः सांख्योक्तस्तादृगीश्वरः ॥ योगोक्तस्तत्त्वमोरर्थौ शुद्धौ ताविति चेच्छृणु ॥ २१ ॥ न तत्त्वमोरुभावर्थावस्मत्सिद्धांततां गतौ ॥ अद्वैतबोधनायैव सा कक्षा काचिदिष्यते ॥ २२ ॥ अनादिमायया भ्रांता जीवेशौ सुविलक्षणौ ॥ मन्यंते तद्व्युदासाय केवलं शोध-

---

योर्मुक्तिहेतुत्वाभावान्न मुमुक्षुभिस्तत्र मतिः निवेशनीयेत्युपसंहरति तस्मादिति तर्हि किं कर्तव्यमित्याशंक्य श्रुतिविचारेण ब्रह्मबोध एव कर्तव्य इत्याह किंत्विति ॥ १९ ॥ ननु ब्रह्मतत्त्वनिश्चयाय तयोः स्वरूपं हेयत्वेन ज्ञातव्यमित्याशंक्य तथात्वे जीवेशवादयोरेव बुद्धिर्न परिसमापनीयेत्याह पूर्वपक्षतयेति एतावता पूर्वपक्षतया तत्त्वनिर्णयहेतुत्वसंभवेन तयोर्जीवेशवादयोरेवावशो विवेकज्ञानशून्यो न निमज्जस्वेति योजना ॥ २० ॥ ननु सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेन भवद्भिरप्युपादेयत्वान्न तयोः पूर्वपक्षत्वमिति शंकते असंगचिदिति सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेऽपि तयोर्वास्तवभेदस्य तैरंगीकारान्नायमस्मात्सिद्धांत इत्याह शृण्विति ॥ २१ ॥ नतत्त्वमोरिति तत्त्वंपदयोरुभावर्थावस्मत्सिद्धांतत्वं न गताविति योजना ननु कूटस्थब्रह्मशब्दाभ्यां शुद्धौ तत्त्वंपदार्थौ भवद्भिरपि भिन्नौ निरूपितावित्याशंक्याह अद्वैतबोधनायैवेति लोकप्रसिद्धभेदनिरासद्वारा तदैक्यप्रतिपादनायैव तौ भेदेनानूदितौ न तु तयोर्भेदः प्रतिपाद्यते इति भावः ॥ २२ ॥ तर्हि पदार्थशोधनं किमर्थमित्यत आह अनादीति अत्र मायाशब्देन स्वाश्रयव्यामोहिका अविद्या लक्ष्यते तया विपरीतज्ञानं प्राप्ताः कर्तृत्वादिमत्त्वं जीवस्य सर्वज्ञत्वादिगुणयोगित्वं चेश्वरस्य पारमार्थिकं मन्यंतेऽतस्तन्निवृत्त्यर्थमेव शोधनं क्रियते इत्य-

नं तयोः ॥ २३ ॥ अत एवात्र दृष्टांतो योग्यः प्राक् सम्यगीरितः ॥ घटाकाशमहाकाशजलाकाशाभ्रखात्मकः ॥२४॥जलाभ्रोपाध्यधीने ते जलाकाशाभ्रखे तयोः ॥ आधारौ तु घटाकाशमहाकाशौ सुनिर्मलौ ॥ २५ ॥ एवमानंदविज्ञानमयौ मायाधियोर्वशौ ॥ तदधिष्ठानकूटस्थब्रम्हणी तु सुनिर्मले ॥ २६ ॥ एतत्कक्षोपयोगेन सांख्ययोगौ मतौ यदि ॥ देहोऽन्नमयकक्षत्वादात्मत्वेनाभ्युपेयताम् ॥ २७ ॥ आत्मभेदो जगत्सत्यमीशोऽन्य इति चेत्त्रयम् ॥ त्यज्यते तैस्तदा सांख्ययोगवेदांतसंमतिः ॥ २८ ॥ जीवोऽसंगत्वमात्रेण कृतार्थ इति चेत्तदा ॥ स्रक्चंदनादिनित्यत्वमात्रेणापि कृतार्थता ॥ २९ ॥ यथा स्रगादिनित्यत्वं दुःसंपाद्यं तथाऽऽत्मनः ॥ असंगत्वं न संभाव्यं जीवतोर्जगदीशयोः ३० ॥ अवश्यं प्रकृतिः सं-

र्थः ॥ २३ ॥ पदार्थशोधनप्रकारमेव दिदर्शयिषुस्तदुपायत्वेन पूर्वोक्तदृष्टांतं स्मारयति अतएवेति यतः पदार्थशोधनं कर्तव्यमत एवेत्यर्थः ॥ २४ ॥ पदार्थशोधनप्रकारमाह जलाभ्रेति ये जलाकाशाभ्रखे ते जलाभ्रोपाध्यधीनत्वादपारमार्थिके तयोराधारभूतौ घटाकाशमहाकाशौ सुनिर्मलौ जलाद्युपाधिनिरपेक्षाकाशमात्ररूपावित्यर्थः ॥ २५ ॥ दार्ष्टांतिकमाह एवमिति ॥ २६ ॥ ननु पदार्थद्वयशोधनकक्षोपयोगित्वेनापि सांख्ययोगमतद्वयमंगीकार्यमिति चेदत्यल्पमिदमुच्यते इतरेषामपि शास्त्राणां तत्कक्षोपयोगित्वेनास्माभिरभ्युपेयत्वादित्याह एतदिति ॥ २७ ॥ कुतस्तर्हि सांख्ययोगयोर्वेदांतविरोधित्वमित्याशंक्य जीवभेदजगत्सत्यत्वेश्वरताटस्थ्यलक्षणेंऽशे इत्याह आत्मभेदइति ॥ २८ ॥ ननु जीवस्यासंगत्वज्ञानादेव मुक्तिसिद्धेः किमद्वैतबोधेनेत्याशंक्याद्वैतज्ञानमंतरेणासंगत्वादिकं न संभाव्यते इत्यभिसंधिं हृदि निधायोत्तरमाह जीवइति ॥ २९ ॥ अभिसंधिमाविःकरोति यथेति

गं पुरेवापादयेत्तथा ॥ नियच्छत्येतमीशोऽपि कोऽस्य मोक्षस्तथा सति ॥ ३१ ॥ अविवेककृतः संगो नियमश्चेति चेत्तदा ॥ बलादापतितो मायावादः सांख्यस्य दुर्मतेः ॥३२॥ बंधमोक्षव्यवस्थार्थमात्मनानात्वमिष्यताम् ॥ इति चेन्न यतो माया व्यवस्थापयितुं क्षमा ॥ ३३ ॥ दुर्घटं घटयामीति विरुद्धं किन्न पश्यसि ॥ वास्तवौ बंधमोक्षौ तु श्रुतिर्न सहतेतराम् ॥ ३४ ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥३५॥ मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ ॥ यथेच्छं पि-

---

जीवतोर्विशेष्यविशेषणाकारेण भासमानयोः ॥ ३० ॥ असंभवमेव स्पष्टयति अवश्यमिति फलितमाह कोऽस्येति ॥ ३१ ॥ संगनियमनयोरविवेककार्यत्वात् विवेकज्ञानेन च अविवेकानिवृत्तौ कुतः पुनः संगाद्युत्पत्तिरिति शंकते अविवेकेति एवं सत्यपसिद्धांतापात इति परिहरति बलादिति अयं अभावमात्रस्य भावकार्यजनकत्वायोगात् न द्वितीयः विवेकादन्यस्य घटादेः संगहेतुत्वादर्शनात् तृतीये तु तस्य भावरूपाज्ञानत्वमेवेति मायावादप्रसंग इति ॥ ३२ ॥ अद्वैताभ्युपगमे बंधमोक्षव्यवस्थानुपपत्तेरात्मभेदोऽगीकर्तव्य इति चोदयति बंधमोक्षेति एकस्याप्यात्मनो मायया बंधमोक्षव्यवस्थोपपत्तेर्मैवमिति परिहरति नयतइति ॥३३॥ मायाऽपि कथं व्यवस्थापयेदित्याशंक्य तस्या दुर्घटकारित्वस्वाभाव्यादित्याह दुर्घटमिति बंधस्याविद्यकत्वेऽपि मोक्षो वास्तवोऽभ्युपेतव्य इत्याशंक्य श्रुतिविरोधान्मैवमित्याह वास्तवाविति न सहतेतरामतितरान्नैव सहते इत्यर्थः बंधमिव मोक्षमपि वास्तवं न सहते इति भावः ॥ ३४ ॥ मोक्षादेर्वास्तवत्वप्रतिषेधिकां श्रुतिं पठति ननिरोध इति निरोधः नाश उत्पत्तिर्देहसंबंधः बद्धः सुखदुःखादिधर्मवान् साधकः श्रवणाद्यनुष्ठाता मुमुक्षुः साधनचतुष्टयसंपन्न मुक्तः निवृत्ताविद्यः इत्येतत्सर्वं वस्तुनो नास्तीत्यर्थः ॥ ३५ ॥ एवं जीवेश्वरादिभेदस्य मायामयत्वमुपपादितमुप-

बतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥ ३६ ॥ कूटस्थब्रह्मणोर्भेदो नाममात्राद्दते न हि ॥ घटाकाशमहाकाशौ वियुज्येते न हि क्वचित् ॥ ३७ ॥ यदद्वैतं श्रुतं सृष्टेः प्राक्तदेवाद्य चोपरि ॥ मुक्तावपि वृथा माया भ्रामयत्यखिलान् जनान् ॥ ३८ ॥ ये वदंतीत्थमेतेऽपि भ्राम्यंतेऽविद्ययाऽत्र किम् ॥ न यथा पूर्वमेतेषामत्र भ्रांतेरदर्शनात् ॥ ३९ ॥ ऐहिकामुष्मिकः सर्वः संसारो वास्तवस्ततः ॥ न भाति नास्ति चाद्वैतमित्यज्ञानिविनिश्चयः ॥ ४० ॥ ज्ञानिनो विपरीतोऽस्मान्निश्चयः सम्यगीक्ष्यते ॥ स्वस्वनिश्चयतो बद्धो मुक्तोऽहं चेति मन्यते

---

संहरति मायाख्यायाइति ॥ ३६ ॥ ननु जीवेश्वरयोर्मायिकत्वेन तद्भेदस्य मिथ्यात्वेऽपि कूटस्थब्रम्हणोः पारमार्थिकत्वेन तद्भेदोऽपि पारमार्थिकः स्यात् इत्याशंक्य भेदप्रयोजकस्य स्वरूपवैलक्षण्यस्याभावान्नैवमिति परिहरति कूटस्थेति नाममात्राद्भेदप्रतीतावपि वस्तुतो भेदाभावे दृष्टांतं पूर्वोक्तं स्मारयति घटाकाशेति ॥३७॥ एवं भेदस्य मिथ्यात्वसमर्थनेन किं फलमित्याह यदद्वैतमिति सदेव सोम्येदमग्रआसीत् एकमेवाद्वितीयमिति श्रुतौ यदद्वितीयं ब्रह्म प्रतिपादितं तदेव कालत्रयेऽप्यबाध्यत्वेन वास्तवं न भेद इति भावः कुतस्तर्हि सर्वैर्भेदाभिनिवेशः क्रियते इत्यत आह वृथामायेति तत्त्वज्ञानरहितत्वादभिनिवेशं कुर्वंतीति भावः ॥ ३८ ॥ ननु प्रपंचस्य मायामयत्वं तत्त्वस्याद्वितीयत्वं च ये वर्णयंति तेऽपि संसारवंतो दृश्यंते अतस्तत्त्वज्ञानेन किं प्रयोजनमिति शंकते येवदंतीति कर्मवशात्केषांचिद्व्यवहारे सत्यपि पूर्ववदभिनिवेशाभावान्नैवमिति परिहरति नयथेति ॥ ३९ ॥ ज्ञानिनां भ्रांत्यभावं दर्शयितुं अज्ञानिनां निश्चयं तावदाह ऐहिकेति इह लोके भवः ऐहिकः पुत्रकलत्रादिपोषणरूपः अमुष्मिन्परलोके भव आमुष्मिकः स्वर्गसुखाद्यनुभवरूपः ॥ ४० ॥ तत्त्वाविनिश्चयस्य ततो वैलक्षण्यं दर्शयति ज्ञानिनामिति अद्वैतं पारमार्थिकं भाति च संसारस्त्वपारमार्थिक इति निश्चय इत्यर्थः ततः किमित्याशंक्य स्वस्व-

॥ ४१ ॥ नाद्वैतमपरोक्षं चेन्न चिद्रूपेण भासनात् ॥ अशेषेण न भातं चेत् द्वैतं किं भासतेऽखिलम् ॥ ४२ ॥ दिङ्मात्रेण विभानं तु द्वयोरपि समं खलु ॥ द्वैतसिद्धिवदद्वैतसिद्धिस्ते तावता न किम् ॥ ४३ ॥ द्वैतेन हीनमद्वैतं द्वैतज्ञाने कथं त्विदम् ॥ चिद्भानं त्वविरोध्यस्य द्वैतस्यातोऽसमे उभे ॥ ४४ ॥ एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ॥ तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ ४५ ॥ अचिंत्यरचनारूपं मायैव सकलं जगत् ॥ इति निश्चित्य वस्तुत्वमद्वैते परि-

---

निश्चयानुसारेण फलं भवतीत्याह स्वस्वेति ॥ ४१ ॥ अद्वैतं भातीत्युक्तिः शास्त्रत एव नानुभवतोऽतो न तन्निश्चय इति शंकते नाद्वैतामिति अनुभवागोचरत्वमसिद्धमिति परिहरति नचिद्रूपेणेति घटः स्फुरति पटः स्फुरति इति घटादिष्वनुस्यूतस्फुरणरूपेण भानादित्यर्थः ननु चिद्रूपत्वस्य भानेऽपि तत्कात्स्र्न्येन न प्रतीयते इति शंकते अशेषेणेति साकल्येन भानाभावो द्वैतेऽपि समान इत्याह द्वैतंकिमिति ॥ ४२ ॥ एवं दोषसाम्यमभिधाय परिहारसाम्यमाह दिङ्मात्रेणेति दिङ्मात्रेणैकदेशेन द्वयोर्द्वैताद्वैतयोरित्यर्थः एतावता कथं परिहारसाम्यमित्याशंक्याह द्वैतसिद्धिवादिति ते तव पक्षे तावता एकदेशप्रतीतिसद्भावेन द्वैतसिद्धिवत् द्वैतनिश्चय इवाद्वैतासिद्धिरद्वैतनिश्चयोऽपि किं न भवति किंतु भवत्येवेत्यर्थः ॥ ४३ ॥ पूर्ववादी प्रकारांतरेणाद्वैतासिद्धिं शंकते द्वैतेनेति अद्वैतं द्वैतरहितं तयोः परस्परविरोधात्तथा सति द्वैतप्रतीतावद्वैतं न संभवतीत्यर्थः ननु तर्हि द्वैतस्याप्यद्वैतविरोधित्वादद्वैते प्रतिभासमाने द्वैतस्यासिद्धिरिति चोद्यं समानमित्याशंक्याह पूर्ववादी चिद्भानंत्विति भवन्मते चिद्रूपप्रतीतेरेवाद्वैतप्रतीतित्वात्तस्याश्च द्वैतविरोधित्वाभावान्नोभयोः साम्यमिति भावः ॥ ४४ ॥ प्रतीयमानस्यापि द्वैतस्य वास्तवत्वाभावान्न वास्तवाद्वैतविघातित्वमिति परिहरति सिद्धांती एवमिति प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगाच्छिष्यमाणे संप्रत्ययः परिशेषः ॥ ४५ ॥ परिशेषप्रकारमेव

शेष्यताम् ॥ ४६ ॥ पुनर्द्वैतस्य वस्तुत्वं भाति चेत्त्वं तथा पुनः ॥ परिशीलय को वाऽत्र प्रयासस्तेन ते वद ॥४७॥ कियंतं कालमिति चेत् खेदोऽयं द्वैत इष्यतां ॥ अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् ॥ ४८ ॥ क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत् ॥ मच्छब्दवाच्येऽहंकारे दृश्यतां नेति को वदेत् ॥ ४९ ॥ चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि ॥ माऽध्यासं कुरु किंतु त्वं विवेकं कुरु सर्वदा ॥ ५० ॥ झटित्यध्यास आयाति दृढवासनयेति चेत् ॥

---

दर्शयति अचिंत्येति न चिंत्या अचिंत्या अचिंत्या रचना रूपं यस्य तत्तथाविधं सकलं जगत् मायैव मिथ्यैवेत्यनेन प्रकारेणानिर्वचनीयत्वान्मिथ्यात्वं द्वैतस्य निश्चित्य वास्तवमद्वैतं परिशेष्यतामित्यर्थः ॥ ४६ ॥ नन्वेवमद्वैतनिश्चये कृतेऽपि पुनः पुनर्द्वैतसत्यत्वं पूर्ववासनया भातीत्याशंक्य तन्निवृत्तये पुनः पुनर्मिथ्यात्वं विचारयेदित्याह पुनर्द्वैतस्येति आवृत्तिरसकृदुपदेशादिति चतुर्थाध्याये आत्मनः श्रवणाद्यावर्तनस्य विहितत्वाभ्यासेनेति भावः ॥ ४७ ॥ कियंतं कालमित्थं विचारणीयमित्याशंक्य तत्त्वापरोक्षविद्याप्तौ विचारोऽयं समाप्यते इति विचारकालावधेरुक्तत्वान्नाद्वैतविचारेऽयं खेदो युक्तः किंतु द्वैतप्रतिभास एव युक्त इत्याह कियंतमिति ॥ ४८ ॥ नन्वेवमद्वैतात्मतत्त्वापरोक्षज्ञानवत्यापि मयि क्षुत्पिपासानर्थस्य परिदृश्यमानत्वादनर्थनिवारकत्वमात्मज्ञानस्यासिद्धमिति शंकते क्षुत्पिपासादयइति किं मच्छब्दवाच्येऽहंकारे दृश्यंते उत मच्छब्दोपलक्षिते चिदात्मनीति विकल्प्य आद्यमंगीकरोति मच्छब्दव्याच्यइति न द्वितीयः तस्यासंगत्वादविषयत्वाच्चेति बहिरेव द्रष्टव्यं ॥ ४९ ॥ वस्तुतस्तत्प्रतीत्यभावेऽपि भ्रांत्या तत्प्रसक्तिः स्यादिति शंकते चिद्रूपेऽपीति एवं तर्ह्यनर्थहेतोरध्यासस्य निवृत्तये सदा विवेकः क्रियतामित्याह माध्यासमिति ॥ ५० ॥ अनादिवासनावशात् पुनरध्यासागमने तन्निवृत्तये विवे-

आवर्तयेद्विवेकं च दृढं वासयितुं सदा ॥ ५१ ॥ विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम् ॥ अचिंत्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी ॥ ५२ ॥ चिदप्यचिंत्यरचना यदि तर्ह्यस्तु नो वयं ॥ चितिं सुचिंत्यरचनां ब्रूमो नित्यत्वकारणात् ॥ ५३ ॥ प्रागभावो नानुभूतश्चितेर्नित्या ततश्चितिः ॥ द्वैतस्य प्रागभावस्तु चैतन्येनानुभूयते ॥ ५४ ॥ प्रागभाव-

---

क एवावर्तनीयो नोपायांतरमित्याह झटितीति ॥ ५१ ॥ ननु विचारेण द्वैतस्य मायामयत्वं युक्त्यैव सिद्ध्यति नानुभवत इत्याशंक्याचिंत्यरचनात्वलक्षणमिथ्यात्वानुभवस्य स्वसाक्षिकत्वान्मैवामिति परिहरति विवेकइति ॥ ५२ ॥ नन्वचिंत्यरचनात्वं मिथ्यात्वपदार्थलक्षणमुक्तं चिदात्मन्यतिव्याप्तमिति शंकते चिदपीति प्रागभावयुक्तत्वे सति अचिंत्यरचनात्वमिथ्यालक्षणमिति विवक्षुरचिंत्यरचनात्वमात्मनोऽगीकरोति तर्ह्यस्त्विति एवमंगीकारेऽपसिद्धांत इत्याशंक्य परिहरति नोवयमिति तत्र हेतुमाह नित्यत्वेति वयं चितिं सुचिंत्यरचनां नो ब्रूम इति योजना ॥ ५३ ॥ चितेर्नित्यत्वं कुत इत्याशंक्य प्रागभावानुभवाभावादित्याह प्रागभावइति यतश्चितेः प्रागभावो नानुभूतस्ततो नित्येति योजना इदमत्राकूतं चितेः प्रागभावोऽस्तीति वदन् प्रष्टव्यः चित्प्रागभावः किं चिताऽनुभूयते उतान्येन नान्येन तदन्यस्य जडत्वेन अनुभवितृत्वानुपपत्तेः चिताऽनुभूयते इत्यपि पक्षे किं चिदंतरेण उत स्वेनैव नाद्यः अद्वैतवादे चिदंतरस्यैव अभावात् तत्स्वीकारेऽपि चित्प्रतियोगिकस्य अभावस्य चिद्ग्रहणमंतरेण गृहीतुमशक्यत्वात् तस्या अपि गृह्यमाणत्वे घटादिवदचित्त्वापत्तेः नापि द्वितीयः स्वाभावस्य स्वेन गृहीतुमशक्यत्वादिति ननु द्वैतस्य प्रमात्रादिभेदरूपत्वात् तदभावस्य च तेनैवानुभवितुमशक्यत्वात् तदनुभवित्रंतराभावाच्च चैतन्यवदेव द्वैतस्यापि नित्यत्वापत्तिरित्याशंक्य अनुभवित्रंतराभावोऽसिद्ध इति परिहरति द्वैतस्येति जाग्रदादिद्वैताभावस्य सुषुप्तौ साक्षिणाऽनुभूयमानत्वात् तमसः साक्षी सर्वस्य साक्षीति श्रुतेश्चेति भावः ॥ ५४ ॥ एवं च प्रागभावयुतत्वे सति

युतं द्वैतं रच्यते हि घटादिवत् ॥ तथापि रचनाऽचिंत्या मिथ्या तेनेंद्रजालवत् ॥ ५५ ॥ चित्प्रत्यक्षा ततोऽन्यस्य मिथ्यात्वं चानुभूयते ॥ नाद्वैतमपरोक्षं चेत्येतन्न व्याहतं कथम् ॥ ५६ ॥ इत्थं ज्ञात्वाऽप्यसंतुष्टाः केचित्कुत इतीर्यतां ॥ चार्वाकादेः प्रबुद्धस्याप्यात्मा देहः कुतो वद ॥५७॥ सम्यग्विचारो नास्त्यस्य धीदोषादिति चेत्तथा ॥ असंतुष्टास्तु शास्त्रार्थं न त्वैक्षंत विशेषतः ॥ ५८ ॥ यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥ इति श्रौतं फलं दृष्टं

---

अचिंत्यरचनात्वस्य मिथ्यात्वलक्षणस्य सद्भावात् द्वैतमिथ्यात्वं सिद्धमित्याह प्रागभावेति प्रागभावयुतमिति हेतुगर्भितं विशेषणं द्वैतं प्रागभावयुतत्वात् घटादिवद्रच्यते हि तथाऽपि रच्यमानत्वेऽपि तस्य द्वैतस्य रचनाऽचिंत्या तेन रच्यमानत्वे सति अचिंत्यरचनात्वेन ऐंद्रजालिकप्रासादवन्मिथ्येत्यर्थः ॥ ५५ ॥ चितिस्तावत्स्वप्रकाशत्वेन नित्याऽपरोक्षा च भासते चिव्द्यतिरिक्तस्य च मिथ्यात्वं तयैव चिताऽनुभूयते इतिदर्शितं एवं च सत्यद्वैतस्यापरोक्षत्वं नास्तीति वदतो व्याघातश्च स्यादित्याह चित्प्रत्यक्षेति चिद्रूपेण भासनादित्यभिहितयुक्तिसमुच्चयार्थश्चशब्दः अद्वैतमपरोक्षं नेत्येतत्कथं न व्याहतं चेति योजना ॥५६॥ एवं वेदांतार्थं जानतामपि पुरुषाणां केषांचिदत्र विश्वासः कुतो न जायते इति पृच्छति इत्थमिति सम्यग्विचारशून्यत्वादिति विवक्षुः प्रतिवंदीं गृह्णाति चार्वाकादेरिति आदिशब्देन पामरा गृह्यंते प्रबुद्धस्य उहापोहकुशलस्य ॥ ५७ ॥ प्रतिवंदी मोचनं शंकते सम्यगिति साम्येन समाधत्ते तथेति धीदोषादित्यनुषज्यते तुशब्दः एवशब्दार्थः ॥ ५८ ॥ इत्थं तत्त्वं विचार्य तज्जन्यतत्त्वज्ञानफलं विचारयितुं तत्प्रतिपादिकां श्रुतिं पठति यदेति अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इत्यस्य मंत्रस्योत्तरार्धं अस्य मुमुक्षोर्हृदि श्रिता ये कामास्तादात्म्याध्यासमूला इच्छादयः संति ते सर्वे यदा यस्मिन्काले प्रमुच्यंते तत्त्वज्ञानेनाध्यास-

नेति चेद्दृष्टमेव तत् ॥ ५९ ॥ यदा सर्वे प्रभिद्यंते हृदय-ग्रंथयस्त्विति ॥ कामा ग्रंथिस्वरूपेण व्याख्याता वाक्य-शेषतः ॥ ६० ॥ अहंकारचिदात्मानावेकीकृत्याविवेकतः ॥ इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः ॥ ६१ ॥ अप्रवेश्य चिदात्मानं पृथक् पश्यन्नहंकृतिं॥इच्छंस्तु कोटिवस्तूनि न बाधो ग्रंथिभेदतः ॥ ६२॥ ग्रंथिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः ॥ बुध्द्वाऽपि पापबाहुल्यादसंतोषो यथा तव ॥६३॥ अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा ॥

---

निवृत्तौ निवर्तते अथ तदानीमेव मर्त्यः पूर्वदेहतादात्म्याध्यासेन मरणशीलः पुरुषः अमृतः अध्यासाभावेन तद्रहितो भवति तत्र हेतुमाह अत्र ब्रह्म समश्नुते इति अत्रास्मिन्नेव देहे ब्रह्मसत्यादिलक्षणं समश्नुते सम्यगाप्नोतीत्यस्याः श्रुतेरर्थः श्रुत्या प्रतिपादितं फलं कामनिवृत्त्यादिलक्षणं नानुभवसिद्धं किंतु शाब्दमेवेति शंकते इतिश्रौतमिति समनंतरश्रुतिवाक्यतात्पर्यालोचनया तस्य दृष्टत्वं सिध्यतीत्यभिप्रायेण परिहरति दृष्टमेव तदिति ॥ ५९ ॥ तस्य दृष्टत्वस्पष्टीकरणाय तद्वाक्यमुदाहृत्य तस्यार्थमाह यदासर्वइति अनेन वाक्यशेषेण कामप्रमोकस्य ग्रंथिभेदत्वेन व्याख्यातत्वात् ग्रंथिभेदस्य अहंकारचिदात्मनोः तादात्म्याध्यासनिवृत्तिलक्षणस्य अनुभवसिद्धत्वान्नाप्रत्यक्षतेति भावः वाक्यशेषतः इत्यनेन वाक्येनेत्यर्थः ॥ ६० ॥ ननु लोके कामशब्देनेच्छाभेद एवोच्यते अतः कथं तस्य ग्रंथित्वेन व्याख्यानमित्याशंक्य अध्यासमूलस्यैव इच्छाविशेषस्य कामशब्दवाच्यत्वं नेच्छामात्रस्येत्याह अहंकारेति ॥ ६१ ॥ नन्वध्यासमूलस्यैव कामस्य त्याज्यत्वे सति इतरोऽभ्युपेतव्यः स्यादित्याशंक्य बाधकत्वाभावादभ्युपेयते एवेत्याह अप्रवेश्येति अहंकारे चिदात्मानमप्रवेश्य तादात्म्याध्यासे नानंतर्भाव्येत्यर्थः ॥ ६२ ॥ नन्वध्यासाभावे कामानामनुदय एव स्यादित्याशंक्य आरब्धकर्मवशात्तेषामुत्पत्तिः संभविष्यतीत्याह ग्रंथिभेदेऽपीति अत्रदृष्टांतमाह बुध्द्वाऽपीति ॥ ६३ ॥ अध्यासाभावेऽहं-

वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥ ६४ ॥ ग्रंथिभेदात्पुराऽप्येवमिति चेत्तन्न विस्मर ॥ अयमेव ग्रंथिभेदस्तव तेन कृती भवान् ॥ ६५ ॥ नैवं जानंति मूढाश्चेत्सोऽयं ग्रंथिर्न चापरः ॥ ग्रंथितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥ ६६ ॥ प्रवृत्तौ वा निवृत्तौ वा देहेंद्रियमनोधियाम् ॥ न किंचिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः ॥ ६७ ॥ व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा ॥ नाहारादावस्ति भेदः सोऽयं न्यायोऽत्र योज्यताम् ॥ ६८ ॥ न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ उदासीनवदासीन इति ग्रंथिभिदोच्यते ॥ ६९ ॥ औदासीन्यं विधेयं चेद्वच्छ-

---

कारगतेच्छादेरबाधकत्वं दृष्टांतद्वयप्रदर्शनेन विशदयति अहंकारेति यथा देहगतव्याध्यादिभिः अहंकारसाक्षिणो बाधो नास्ति देहसंबंधरहितत्वात् यथा वृक्षादिगतैर्जन्मादिभिः एवमध्यासनिवृत्तावहंकारगतेच्छादिभिरपीति भावः ॥ ६४ ॥ चिदात्मनोऽसंगत्वस्यैकरूपत्वात् पूर्वमपि कामादिबाधो नास्तीति शंकते ग्रंथिभेदादिति एवंविधबोधस्यैव ग्रंथिभेदत्वेन अस्माभिरभिधीयमानत्वादिदं चोद्यमस्मदनुकूलमित्याह तन्नविस्मरेति ॥ ६५ ॥ एवंविधज्ञानाभाव एव ग्रंथिरित्याह नैवमिति ननु ज्ञानिनोऽपीच्छाभ्युपगमे ज्ञान्यज्ञानिनोः कुतो वैलक्षण्यमित्याशंक्य ग्रंथिभेदाभेदातिरेकेण न कुतोऽपीत्याह ग्रंथितद्भेदेति ॥ ६६ ॥ कारणांतराभावमेव विशदयति प्रवृत्ताविति ॥ ६७ ॥ उक्तार्थे दृष्टांतमाह व्रात्येति ॥ ६८ ॥ ज्ञानिनो ग्रंथिशून्यत्वे गीतावाक्यं प्रमाणयति नद्वेष्टीति संप्रवृत्तानि प्राप्तानि दुःखानि न द्वेष्टि निवृत्तानि सुखानि न कांक्षति उदासीनवद्वर्तते इत्यर्थः ग्रंथिभिदा ग्रंथिभेदः ॥ ६९ ॥ इदं वाक्यमौदासीन्यविधिपरं न तु ग्रंथिभेदे प्रमाणमिति शंकते औदासीन्यमिति विधिपरत्वे वच्छब्दो व्यर्थः स्यादिति परिहरति वच्छब्देति ज्ञानिदेहादेरकार्यक्षमत्वादप्रवृत्तिः न तु ग्रंथिभेदादित्याशंक्योपहसति

द्व्यर्थता तदा ॥ न शक्ता अस्य देहाद्या इति चेद्रोग एव सः ॥ ७० ॥ तत्त्वबोधं क्षयं व्याधिं मन्यंते ये महाधियः ॥ तेषां प्रज्ञाऽतिविशदा किं तेषां दुःशकं वद ॥७१॥ भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा ॥ जक्षन् क्रीडन् रतिं विंदन्नित्यश्रौषीर्न किं श्रुतिम् ॥ ७२ ॥ न ह्याहारादि संत्यज्य भरताद्याः स्थिताः क्वचित् ॥ काष्ठपाषाणवत्किंतु संगभीता उदासते ॥ ७३ ॥ संगी हि बाध्यते लोके निःसंगः सुखमश्नुते ॥ तेन संगः परित्याज्यः सर्वदा सुखमिच्छता ॥ ७४ ॥ अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथाऽन्यथा ॥ मूर्खाणां निर्णयस्त्वास्तामस्मत्सिद्धांत उ-

---

न शक्ताइति ॥ ७० ॥ भवतु को दोषस्तत्राह तत्त्वबोधमिति दुःशकमसाध्यमित्यर्थः ॥ ७१ ॥ नन्वस्थाने परिहासोऽयं ज्ञानिनां प्रवृत्त्यभावस्य पुराणसिद्धत्वादिति शंकते भरतादेरिति श्रुतिमजानानश्चोदयसीति परिहरति जक्षन्निति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरमिति श्रौतं वाक्यं नाश्रौषीरित्यर्थः जक्षन् भक्षयन् जक्षभक्षहसनयोरिति धातुः क्रीडन् स्वेच्छया विहरन् रममाणः स्त्र्यादिभिर्नोपजनं स्मरन्निदं शरीरमित्युपजनं जनानां समीपे वर्तमानमिदं स्वशरीरं न स्मरन्नानुसंदधान इत्यर्थः श्लोके रतिं विंदन्निति श्रौतस्य रममाण इति पदस्य व्याख्यानं ॥ ७२ ॥ ननु तर्हि पुराणस्य का गतिरित्याशंक्य पुराणमप्यौदासीन्यबोधनपरं न प्रवृत्त्यभावपरमित्यभिप्रेत्याह नह्याहारादीति ॥ ७३ ॥ संगोऽपि कुतस्त्यज्यते इत्यत आह संगीहीति ॥ ७४ ॥ ननु तर्हि मानससंगस्यैव त्याज्यत्वेऽतःसंगशून्यानां बहिर्व्यवहरतामज्ञत्वादिकं जनैः कथमुच्यते इत्याशंक्य शास्त्रतात्पर्यज्ञानशून्यत्वादित्याह अज्ञात्वेति अतो मूढव्यवहारो नात्र विचारणीय इत्याह मूर्खाणामिति तर्हि किमनुसंधेयमि-

च्यते ॥ ७५ ॥ वैराग्यबोधोपरमाः सहायास्ते परस्परम् ॥ प्रायेण सह वर्तंते वियुज्यंते क्वचित् क्वचित् ॥७६॥ हेतुस्वरूपकार्याणि भिन्नान्येषामसंकरः ॥ यथावदवगंतव्यः शास्त्रार्थं प्रविविच्यता ॥ ७७ ॥ दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ॥ असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ ७८ ॥ श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ॥ पुनर्ग्रंथेरनुदयो बोधस्यैते त्रयो मताः ॥ ७९ ॥ यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ॥ स्युर्हेत्वाद्या उपरतेरित्यसंकर ईरितः ॥ ८० ॥ तत्त्वबोधः प्रधानं स्यात् साक्षान्मोक्षप्रदत्वतः ॥ बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥ ८१ ॥ त्रयोऽप्यत्यंतपक्वाश्चेन्महतस्तपसः फलम् ॥

---

त्याकांक्षायां शास्त्रद्वयमित्याह अस्मत्सिद्धांतइति ॥ ७५ ॥ कोऽसावित्यत आह वैराग्येति ॥ ७६ ॥ वैराग्यादीनामन्योन्यपरिहारेण अवस्थानदर्शनादभेदशंकाया तद्धेत्वादीनां भेदाद्भेदोऽवगंतव्य इत्याह हेतुस्वरूपेति ॥ ७७ ॥ तत्र वैराग्यस्य हेत्वादित्रयं दर्शयति दोषदृष्टिरिति ॥७८॥ इदानीं तत्त्वबोधस्य कारणादीनि दर्शयति श्रवणादीति आदिशब्देन मनननिदिध्यासने गृह्येते आत्मा वारे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इत्यात्मदर्शनसाधनत्वेन श्रवणादिविधानाच्छ्रवणादेर्ज्ञानहेतुत्वं तत्त्वमिथ्याविवेचनं कूटस्थाहंकारादेश्च भेदज्ञानं ग्रंथेरनुदयोऽन्योन्याध्यासानुत्पत्तिः ॥ ७९ ॥ उपरतेस्तानि दर्शयति यमादिरिति आदिपदेन नियमादयो गृह्यंते धीनिरोधश्चित्तवृत्तिनिरोधलक्षणो योगः ॥८०॥ किमेतेषां समं प्राधान्यमुत नेत्याशंक्याह तत्त्वबोध इति तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति श्रुतेरित्यर्थः इतरयोस्तूपकारित्वं ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति श्रुतिभ्यामवगम्यते ॥ ८१ ॥ प्रायेण सह वर्तंते

दुरितेन क्वचित्किंचित्कदाचित्प्रतिबध्यते ॥ ८२ ॥ वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते ॥ यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥ ८३ ॥ पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ॥ मोक्षो विनिश्चितः किंतु दृष्टदुःखं न नश्यति ॥ ८४ ॥ ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः ॥ देहात्मवत् परात्मत्वदार्ढ्ये बोधः समाप्यते ॥८५॥ सुप्तिवद्विस्मृतिः सीमा भवेदुपरमस्य हि ॥ दिशाऽनया विनिश्चेयं तारतम्यमवांतरम् ॥ ८६ ॥ आरब्धकर्मनानात्वाद्बुद्धानामन्यथाऽन्यथा ॥ वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पंडितैः ८७ ॥ स्वस्वकर्मानुसारेण वर्तंतां ते य-

---

वियुज्यंते क्वचित्काचिदित्युक्तं तत्र कारणमाह त्रयोऽपीति अनेकजन्मार्जितपुण्यपुंजपरिपाके त्रयाणां सहभावो भवति अन्यथा तु प्रतिबंधकपापानुसारेण पुरुषविशेषे कालविशेषेण कस्यचित्प्रतिबंधो भवतीति भावः ॥ ८२ ॥ तत्रापि तत्त्वज्ञानप्रतिबंधे मोक्षो नास्तीत्याह वैराग्येति तर्हि वैराग्यादिसंपादनं निष्फलमित्याशंक्य प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः॥ शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ इति भगवद्वचनात् पुण्यलोकप्राप्तिर्भवतीत्याह पुण्यलोकस्तपोबलादिति ॥ ८३ ॥ वैराग्योपरत्योस्तु प्रतिबंधे जीवन्मुक्तिसुखं न सिध्यतीत्याह पूर्णेबोधइति ॥ ८४ ॥ इदानीं वैराग्यादीनामवधिं दर्शयति ब्रह्मलोकेति ॥ ८५ ॥ सुप्तिवदिति अवांतरतारतम्यं स्वस्वबुद्ध्या निश्चेयमित्याह दिशेति ॥ ८६ ॥ ननु तत्त्वबोधवतामपि रागादिमत्त्वेन वैषम्योपलंभात् ज्ञानस्यापि मुक्तिहेतुत्वं निश्चेतुं न शक्यमित्याशंक्य रागादेः व्याध्यादिवदारब्धकर्मफलत्वात् मुक्तिप्रतिबंधकत्वं असिद्धं अतो न शास्त्रार्थे विप्रतिपत्तव्यमित्याह आरब्धकर्मनानात्वादिति ॥ ८७ ॥ किं तर्हि प्रतिपत्तव्यमित्यत आह स्वस्वेति सर्वेषां ब्रह्माहमस्मीति ज्ञानमेकाकारं निरवद्यब्रह्मरूपेणावस्थानं च समानमिति भावः ॥ ८८ ॥ प्रकरणस्यास्य तात्पर्यं

था तथा ॥ अविशिष्टः सर्वबोधः समा मुक्तिरिति स्थितिः ॥ ८८ ॥ जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम् ॥ मायया तदुपेक्ष्यैव चैतन्यं परिशेष्यताम् ॥ ८९ ॥ चित्रदीपमिमं नित्यं येऽनुसंदधते बुधाः ॥ पश्यंतोऽपि जगच्चित्रं ते मुह्यंति न पूर्ववत् ॥ २९० ॥ इति श्रीपंचदश्यां चित्रदीपः समाप्तः ॥

---

संक्षिप्य दर्शयति जगदिति ॥ ८९ ॥ ग्रंथाभ्यासफलमाह चित्रदीपमिति ॥ २९० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यश्रीचरणशिष्येण रामकृष्णाख्यविदुषा विरचितं तात्पर्यबोधनीनामकं चित्रदीपव्याख्यानं समाप्तम् ॥ इति चित्रदीपः समाप्तः ॥

॥ इति चित्रदीपः ॥

---

# तृप्तिदीपः

## प्रकरणं ७.

श्रीगणेशाय नमः ॥ अथ तृप्तिदीपः ॥ आत्मानं चेद्विजानीयादयमस्मीति पुरुषः ॥ किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १ ॥ अस्याः श्रुतेरभिप्रायः सम्यगत्र विचार्यते ॥ जीवन्मुक्तस्य या तृप्तिः सा तेन विशदायते ॥ २ ॥ मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ॥

---

श्रीगणेशाय नमः ॥ अथ तृप्तिदीपव्याख्या ॥ अखंडानंदरूपाय शिवाय गुरवे नमः ॥ शिष्याज्ञानतमोध्वंसपटुर्केंद्वग्निमूर्तये ॥ १ ॥ वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥ पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ क्रियते तृप्तिदीपस्य व्याख्यानं गुर्वनुग्रहात् ॥ ३ ॥ तृप्तिदीपाख्यं प्रकरणमारभमाणः श्रीभारतीतीर्थगुरुस्तस्य श्रुतिव्याख्यानरूपत्वात् तद्व्याख्येयां श्रुतिमादौ पठति आत्मानं चेदिति ॥ १ ॥ इदानीं चिकीर्षितविचारं तत्फलं च दर्शयति अस्याइति अत्र तृप्तिदीपाख्ये ग्रंथेऽस्या आत्मानं चेदित्यादिकायाः श्रुतेरभिप्रायः तात्पर्यं सम्यक् विचार्यते तेनाभिप्रायविचारेण जीवन्मुक्तस्य श्रुतिप्रसिद्धा या तृप्तिः सा विशदायते स्पष्टीभवति ॥ २ ॥ पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ॥ आक्षेपस्य समाधानं व्याख्यानं पंचलक्षणम् ॥ इति व्याख्यानलक्षणस्योक्तत्वात् पुरुष इतिपदस्यार्थमभिधातुं तदुपोद्घातत्वेन सृष्टिं संक्षिप्य दर्शयति मायाभासेनेति प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थांतरवर्णनमुपोद्घातः अत्र मायाशब्देन चिदानंदमयब्रह्मप्रतिबिंबसमन्विता सत्वरजस्तमोगुणात्मिका जगदुपादानभूता प्रकृतिरुच्यते सा च सत्त्वगुणस्य शुध्द्यविशुद्धिभ्यां द्विधा भिद्यमाना क्रमेण माया चाविद्या च भवति तयोः मायाविद्ययोः प्रतिबिंबितं ब्रह्मचैतन्यमेव ईश्वरो जीवश्चेत्युच्यते तदिदं तत्त्वविवेकाख्ये ग्रं-

कल्पितावेव जीवेशौ ताभ्यां सर्वं प्रकल्पितम् ॥ ३ ॥ ईक्षणादिप्रवेशांता सृष्टिरीशेन कल्पिता ॥ जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः ॥ ४ ॥ भ्रमाधिष्ठानभू-

थे श्रीमद्विद्यारण्यगुरुभिर्निरूपितं चिदानंदमयब्रह्मप्रतिबिंबसमन्विता ॥ तमोरजःसत्वगुणा प्रकृतिर्द्विविधा च सा ॥ सत्वशुद्धिविशुद्धिभ्यां मायाविद्ये च ते मते ॥ मायाबिंबो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥ अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ॥ सा कारणशरीरं स्यात्प्राज्ञस्तत्राभिमानवानिति ॥ इममेवार्थं मनसि निधाय जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिरपि प्रवृत्ता अतो जीवेश्वरयोर्मायाकल्पितत्वं अन्यत्कृत्स्नं जगत्ताभ्यामेव कल्पितं ॥ ३ ॥ तत्र केन कियत्कल्पितमित्यत आह ईक्षणादीति तदैक्षत बहु स्यां प्रजायेयेति श्रुतमीक्षणमादिः यस्याः सा ईक्षणादिः अनेन जीवेनात्मनानुप्रविश्येति श्रुतः प्रवेशोऽतो यस्याः सा प्रवेशांता ईक्षणादिश्चासौ प्रवेशांता चेति पश्चात्कर्मधारयः सेयं सृष्टिरीश्वरेण कल्पिता जाग्रदादिः यस्य संसारस्य असौ जाग्रदादिः विमोक्षो मुक्तिरंतो यस्य सः विमोक्षांतः संसारो जीवेन कल्पितः तदभिमानित्वात् जीवस्येत्यर्थः ते च जाग्रदादय इत्थं श्रूयंते ॥ स एष मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वं ॥ स्त्रियन्नपानादिविचित्रभोगैः ॥ स एव जाग्रत्परितृप्तिमेति ॥ स्वप्नेऽपि जीवः सुखदुःखभोक्ता ॥ स्वमायया कल्पितविश्वलोके ॥ सुषुप्तिकाले सकले विलीने ॥ तमोऽभिभूतः सुखरूपमेति ॥ पुनश्च जन्मांतरकर्मयोगात् ॥ स एव जीवः स्वपिति प्रबुद्धः ॥ पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रं ॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ॥ तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते इति ॥ ४ ॥ एवं पुरुषशब्दार्थावबोधोपयोगिनीं सृष्टिमभिधायेदानीं पुरुषशब्दार्थमाह भ्रमाधिष्ठानेति यः कूटस्थासंगचिद्द्पुरवि-कार्यसंगचित्स्वरूपः भ्रमाधिष्ठानभूतात्मा भ्रमस्य देहेंद्रियाद्यध्यासस्य अधिष्ठानभूतः अधिष्ठानत्वेन वर्तमानः परमात्माऽस्ति सोऽसंग एव अन्योन्याध्यासतः अन्योन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सर्व-

तात्मा कूटस्थासंगचिद्वपुः ॥ अन्योन्याध्यासतोऽसंगधीस्थजीवोऽत्र पूरुषः ॥ ५ ॥ साधिष्ठानो विमोक्षादौ जीवोऽधिक्रियते न तु ॥ केवलो निरधिष्ठानविभ्रांतेः क्वाप्यसिद्धितः ॥ ६ ॥ अधिष्ठानांशसंयुक्तं भ्रमांशमवलंबते ॥ यदा तदाऽहं संसारीत्येवं जीवोऽभिमन्यते ॥ ७ ॥ भ्रमांशस्य तिरस्कारादधिष्ठानप्रधानता ॥ यदा तदा चिदात्माऽहमसंगोऽस्मीति बुध्यते ॥ ८ ॥ नासंगेऽहंकृति-

---

व्यवहारभाग्भवति इत्याचार्यैः निरूपितेन तादात्म्याध्यासेन असंगधीस्थजीवः स्वेन पारमार्थिकसंबंधशून्यायां बुद्धौ वर्तमानो जीवः सन् अत्रास्यां श्रुतौ पुरुष इत्युच्यते स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय इतिश्रुत्या पुरुषशब्दस्य व्युत्पादितत्वात्पुरुषस्यैव च पूरुषत्वात् पुरुष एव पूरुषः बुध्यादिकल्पनाधिष्ठानं कूटस्थचैतन्यमेव बुद्धौ प्रतिबिंबितत्वेन प्राप्तजीवभावं सत्पुरुषशब्देनोच्यते इत्यभिप्रायः ॥ ५ ॥ नन्वत्र पुरुषशब्देन केवलचिदाभासरूपो जीव एव उच्यतां किमनेन कूटस्थचैतन्येन अधिष्ठानभूतेन इत्याशंक्य तस्य मोक्षाद्यन्वयितृत्वसिद्धये तदपि स्वीकर्तव्यमित्याह साधिष्ठानइति साधिष्ठानः अधिष्ठानेन कूटस्थचैतन्येन सहितो जीवः विमोक्षादौ मोक्षस्वर्गादिसाधनानुष्ठाने अधिक्रियते अधिकारी भवति न केवलचिदाभासः कुत इत्यत आह निरधिष्ठानेति अधिष्ठानरहितस्यारोप्यस्य लोकेऽदृष्टत्वादिति भावः ॥ ६ ॥ इदानीं साधिष्ठानस्यैव तस्य संसाराद्यन्वयितृत्वं श्लोकद्वयेन विभज्य दर्शयति अधिष्ठानांशेति जीवो यदा अधिष्ठानांशसंयुक्तं कूटस्थसहितं भ्रमांशं चिदाभासोपेतं शरीरद्वयमवलंबते स्वस्वरूपत्वेन स्वीकरोति तदाऽहं संसारीत्येवमभिमन्यते ॥ ७ ॥ यदा पुनर्भ्रमांशस्य देहद्वयसहितस्य चिदाभासस्य तिरस्कारात् मिथ्यात्वज्ञानेन अनादरणात् अधिष्ठानप्रधानता अधिष्ठानभूतस्यैव कूटस्थस्य स्वरूपत्वं जीवेन स्वीक्रियते तदा अहं चिदात्मा ऽसंगश्चास्मीति बुध्यते जानाति ॥ ८ ॥ नन्वधिष्ठानचैतन्यस्य जीवस्वरूपत्वस्वीकारे

युक्ता कथमस्मीति चेच्छृणु ॥ एको मुख्यो द्वावमुख्या- वित्यर्थस्त्रिविधोऽहमः ॥ ९ ॥ अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ॥ एकीभूय भवेन्मुख्यस्तत्र मूढैः प्र- युज्यते ॥ १० ॥ पृथगाभासकूटस्थावमुख्यौ तत्र तत्त्व- वित् ॥ पर्यायेण प्रयुंक्तेऽहंशब्दं लोके च वैदिके ॥ ११ ॥ लौकिकव्यवहारेऽहं गच्छामीत्यादिके बुधः ॥ विविच्यैव

---

चिदात्माऽहमसंगोऽस्मीति बुध्यते इति यदुक्तं तदनुपपन्नं स्यात् असंग- चिद्रूपस्य कूटस्थस्य अहंप्रत्ययविषयत्वाभावात् इति शंकते नासंगइति असंगे चिदात्मनि अविषये अहंप्रत्ययो न युज्यते यतः अतः कथमहम- स्मीति जानीयात् न कथमपीत्यर्थः मुख्यया वृत्त्या अहंप्रत्ययविषयत्वाभा- वेऽपि लक्षणया तदस्तीति विवक्षुरहंशब्दार्थं तावद्विभजते शृण्विति अह- मोऽहंशब्दस्येत्यर्थः ॥ ९ ॥ कीदृशो मुख्योऽर्थ इत्याकांक्षायां तं दर्शयति अन्योन्येति कूटस्थचिदाभासयोः स्वरूपमन्योन्याध्यासेनैक्यं प्राप्तं अहं- शब्दस्य वाच्यत्वेन मुख्योऽर्थो भवति अस्य कुतो मुख्यत्वमित्यत आह तत्रमूढैरिति यत इत्यध्याहारः तत्र तस्मिन्नविविक्तकूटस्थाचिदाभासयोः स्वरूपे यतो विवेकज्ञानशून्यैः सर्वैरप्यहंशब्दः प्रयुज्यते अतोऽस्य मुख्य- त्वमित्यर्थः ॥ १० ॥ इदानीममुख्यौ द्वौ दर्शयति पृथगिति आभासकूट- स्थौ प्रत्येकमहंशब्दार्थत्वेन यदा विवक्षितौ तदा अमुख्यार्थौ भवतः अ- नयोरमुख्यत्वे कारणमाह तत्रतत्त्वविदिति अत्रापि यत इत्यध्याहारः तत्त्व- विद्यतस्तत्र तयोः कूटस्थचिदाभासयोरहंशब्दं लोके लौकिके वैदिके वैदिकव्यवहारे च पर्यायेण प्रयुंक्ते इति योजना अयं भावः चिदाभास- कूटस्थयोरविविक्तरूपस्य सार्वजनीनव्यवहारविषयत्वात् मुख्यार्थत्वं विवि- क्तरूपस्य तु कतिपयजनैः कदाचिदेव व्यवह्रियमाणत्वादमुख्यार्थत्व- मिति ॥ ११ ॥ पर्यायेण प्रयुंक्ते इत्युक्तमेवार्थं प्रपंचयति प्रतिपत्तिसौ- कर्याय श्लोकद्वयेन लौकिकेति बुधो विद्वान् अहं गच्छामीत्यादिलौकि- कव्यवहारे कूटस्थाच्चिदाभासं विविच्य तमेवाहंशब्देन विवक्षति वक्तु-

चिदाभासं कूटस्थात्तं विवक्षति ॥ १२ ॥ असंगोऽहं चिदात्माऽहमिति शास्त्रीयदृष्टितः ॥ अहंशब्दं प्रयुंक्तेऽयं कूटस्थे केवले बुधः ॥ १३ ॥ ज्ञानिताज्ञानिते त्वात्माभासस्यैव न चात्मनः ॥ तथा च कथमाभासः कूटस्थोऽस्मीति बुध्यताम् ॥ १४ ॥ नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान् ॥ आभासत्वस्य मिथ्यात्वात्कूटस्थत्वावशेषणात् ॥ १५ ॥ कूटस्थोऽस्मीति बोधोऽपि मिथ्याचेन्नेति को वदेत् ॥ न हि सत्यतयाऽभीष्टं रज्जुसर्पविसर्पणम् ॥ १६ ॥ तादृशेनापि बोधेन संसारो हि निव-

---

मिच्छति ॥ १२ ॥ असंगइति अयमेव बुधः शास्त्रीयदृष्टितः वेदांतश्रवणजनितज्ञानेन केवले चिदाभासाद्विविक्ते कूटस्थेऽसंगोऽहं चिदात्माऽहमिति लक्षणयाऽहंशब्दं प्रयुंक्ते अतो लक्षणया अहंशब्दार्थत्वेन अहंप्रत्ययविषयत्वसंभवादसंगोऽहमस्मीति ज्ञानमुपपद्यते इत्यभिप्रायः ॥ १३ ॥ ननु पृथगाभासकूटस्थौ अहंशब्दस्य अमुख्यार्थावित्युक्तं तयोर्मध्ये कुटस्थः किमज्ञाननिवृत्तयेऽसंगोऽस्मीति जानाति किंवा चिदाभासः न तावत्कूटस्थः तस्यासंगचिद्रूपत्वेन ज्ञानित्वाज्ञानित्वयोरनुपपत्तेः अतश्चिदाभासस्य ज्ञानित्वादिकं वक्तव्यं तथा च सति कूटस्थादन्याश्चिदाभासोऽहं कूटस्थोऽस्मीति न ज्ञातुमर्हतीति शंकते ज्ञानिताज्ञानितेति ॥ १४ ॥ तस्य कूटस्थान्यत्वमेवासिद्धमिति परिहरति नायमिति तत्रोपपत्तिमाह आभासत्वस्येति यथा दर्पणे प्रतीयमानस्य मुखाभासस्य ग्रीवास्थं मुखमेव तत्त्वं तद्वदिति भावः ॥ १५ ॥ ननु चिदाभासस्य मिथ्यात्वे तदाश्रितं कूटस्थोऽस्मीति ज्ञानमपि मिथ्या स्यादिति शंकते कूटस्थइति कूटस्थस्वरूपातिरिक्तस्य कृत्स्नस्यापि मिथ्यात्वाभ्युपगमात् तन्मिथ्यात्वमस्माकमिष्टमेवेति परिहरति नेतिकोवदेदिति उक्तमर्थं दृष्टांतेन स्पष्टयति नहीति रज्ज्वां कल्पितस्य सर्पस्य गत्यादिकमपि प्रतीयमानं वास्तवं नांगीक्रियते यथा तद्वदिति भावः ॥ १६ ॥ ज्ञानस्य मिथ्यात्वे तेन संसार-

र्तते ॥ यक्षानुरूपो हि बलिरित्याहुर्लौकिका जनाः ॥ १७ ॥ तस्मादाभासपुरुषः सकूटस्थो विविच्य तम् ॥ कूटस्थोऽस्मीति विज्ञातुमर्हतीत्यभ्यधाच्छ्रुतिः ॥ १८ ॥ असंदिग्धाविपर्यस्तबोधो देहात्मनीक्ष्यते ॥ तद्वदत्रेति निर्णेतुमयमित्यभिधीयते ॥ १९ ॥ देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकम् ॥ आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ २० ॥ अयमित्यपरोक्षत्वमुच्यते चेत्तदुच्यताम् ॥

---

निवृत्तिर्न स्यादित्याशंक्य निवर्त्यस्य संसारस्यापि तथात्वात्तन्निवृत्तिरुपपद्यते स्वप्नव्याघ्रदर्शनेन निद्रानिवृत्तिवदित्यभिप्रायेणाह तादृशेनेति तत्र यादृशो यक्षस्तादृशो बलिरिति लौकिकगाथां संवादयति यक्षेति ॥ १७ ॥ उपपादितमर्थमुपसंहरति तस्मादिति यस्मात्कूटस्थ एव चिदाभासस्य निजं स्वरूपं तस्मात्पुरुषशब्दवाच्यः कूटस्थसहितश्चिदाभासः तं कूटस्थं मिथ्याभूतात्स्वस्मात् विविच्य लक्षणया कूटस्थोऽहमस्मीत्यवगंतुं शक्नोतीत्यभिप्रायेण श्रुतिरस्मीत्युक्तवतीत्यर्थः ॥ १८ ॥ एवं पुरुषोऽस्मीतिपदद्वयप्रयोगाभिप्रायमभिधाय अयमितिपदप्रयोगाभिप्रायमाह असंदिग्धेति लौकिकानां प्रसिद्धे देहरूपे आत्मनि संशयविपर्ययरहितोऽयमस्मीति बोधो यद्वदुपलभ्यते अत्र प्रत्यगात्मनि विषये तद्वत्तथाविधं ज्ञानं मुक्तिसिद्धये संपाद्यमिति निर्णेतुमयमित्यभिधीयते श्रुत्येति शेषः ॥ १९ ॥ ईदृशस्यैव बोधस्य मोक्षसाधनत्वे च आचार्यवाक्यं संवादयति देहात्मेति अहं मनुष्य इतिदेहात्मविषयो दृढप्रत्ययो यथा एवं प्रत्यगात्मन्येव देह एव आत्मेत्येवं देहात्मत्वज्ञानापबाधनेन ब्रह्माहमस्मीति ज्ञानं यस्य जायते स विद्वान्नेच्छन्नपि मोक्षेच्छारहितोऽपि मुच्यते संसारहेतोरज्ञानस्य ज्ञानेनापबाधितत्वादिति भावः ॥ २० ॥ अयमितिपदप्रयोगस्याभिप्रायांतरं शंकते अयमिति यथाऽयं घट इत्यादिप्रयोगेष्विदमा निर्दिष्टस्य वस्तुन आपरोक्ष्यं दृष्टं तथाऽयमस्मीत्यत्रापीति भावः तदप्यस्माकमिष्टमेवेत्याह तदुच्यतामिति कुत इत्यत आह स्वयमिति साधनांतरनिरपेक्षतयाऽवभा-

स्वयंप्रकाशचैतन्यमपरोक्षं सदा यतः ॥ २१ ॥ परोक्षमपरोक्षं च ज्ञानमज्ञानमित्यदः ॥ नित्यापरोक्षरूपेऽपि द्वयं स्याद्दशमे यथा ॥ २२ ॥ नवसंख्याहृतज्ञानो दशमो विभ्रमात्तदा ॥ न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥ २३ ॥ न भाति नास्ति दशम इति स्वं दशमं तदा ॥ मत्वा वक्ति तदज्ञानकृतमावरणं विदुः ॥ २४ ॥ नद्यां ममार दशम इति शोचन्प्ररोदिति ॥ अज्ञानकृतविक्षेपं रोदनादिं विदुर्बुधाः ॥ २५ ॥ न मृतो दशमोऽस्तीति श्रुत्वाऽऽप्तवचनं तदा ॥ परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत् ॥ २६ ॥ त्वमेव दशमोऽसीति गणयि-

---

समानं चैतन्यं व्यवधायकाभावात् नित्यमपरोक्षमित्यस्माभिः अभ्युपेतत्वादित्यर्थः ॥ २१ ॥ नन्वात्मनः स्वप्रकाशचिद्रूपत्वेन नित्यापरोक्षत्वाभ्युपगमे अयमितिपदप्रयोगस्य अभिप्रायवर्णनांगीकारबलादागतं आत्मनः परोक्षाविषयत्वं अपरोक्षाविषयत्वं पूर्वोक्तं ज्ञानाज्ञानाश्रयाविषयत्वं वा अनुपपन्नं स्यादित्याशंक्य दशमे इव सर्वमुपपत्स्यते इत्याह परोक्षमिति परोक्षमपरोक्षं चेत्येकं युगलं ज्ञानमज्ञानमित्यपरं इदं द्वयं नित्यापरोक्षरूपेऽप्यात्मनि दशमे इव स्यादित्यर्थः ॥ २२ ॥ दृष्टांतं व्युत्पादयति नवसंख्येति परिगणनीयपुरुषनिष्ठया नवसंख्यया अपहृतविवेकज्ञानो दशमस्तदा तान् परिगणनीयान् नवसंख्याकान् वीक्षमाणोऽपि सम्यक् पश्यन्नपि भ्रांत्या गणनाकर्तारं स्वात्मानं दशमोऽहमस्मीति न वेत्तीत्यर्थः ॥२३॥ एवं दशमे ज्ञानं प्रदर्श्य तत्कार्यमावरणं दर्शयति नभातीति तदा दशमः स्वं दशमं संतं दशमो न भाति नास्तीति मत्वा वक्ति अस्य व्यवहारस्य यत्कारणं तदज्ञानकृतं अज्ञानकार्यमावरणं विदुर्बुधा इति शेषः ॥ २४ ॥ अज्ञानस्यैव कार्यविशेषविक्षेपं दर्शयति नद्यामिति ॥ २५ ॥ दशमस्यासत्त्वांशनिवर्तकं परोक्षज्ञानमाह नमृतइति ॥ २६ ॥ तस्यैवाभानांशनिवर्तकमपरोक्षज्ञानं दर्शयति त्वमेवेति स्वेन परिगणितैर्नवभिः सह स्वात्मानं

त्वा प्रदर्शितः ॥ अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥ २७ ॥ अज्ञानावृतिविक्षेपद्विविधज्ञानतृप्तयः ॥ शोकापगम इत्येते योजनीयाश्चिदात्मनि ॥ २८ ॥ संसारासक्तचित्तः संश्चिदाभासः कदाचन ॥ स्वयंप्रकाशकूटस्थं स्वतत्त्वं नैव वेत्त्ययम् ॥ २९ ॥ न भाति नास्ति कूटस्थ इति वक्ति प्रसंगतः ॥ कर्त्ता भोक्ताऽहमस्मीति विक्षेपं प्रतिपद्यते ॥ ३० ॥ ॥ अस्ति कूटस्थ इत्यादौ परोक्षं वेत्ति वार्तया ॥ पश्चात्कूटस्थ एवास्मीत्येवं वेत्ति विचारतः ॥ ३१ ॥ कर्ता भोक्तेत्येवमादि शोकजातं प्रमुंचति ॥ कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तुष्यति ॥ ३२ ॥

---

गणयित्वा त्वमेव दशमोऽसीति प्रदर्शितः अहंदशमोऽस्मीति अपरोक्षतया ज्ञात्वा हर्षं प्राप्नोति रोदनं त्यजति ॥ २७ ॥ एवं दृष्टांतभूते दशमे प्रदर्शितमवस्थासप्तकमनूद्य दार्ष्टांतिके आत्मन्यपि तद्योजनीयमित्याह अज्ञानेति अज्ञानं चावृतिश्च विक्षेपश्च द्विविधं ज्ञानं च तृप्तिश्चेति द्वंद्वः समासः ॥ २८ ॥ तत्रात्मन्यज्ञानादिकं क्रमेण दर्शयति संसारासक्तेत्यादिना चतुर्भिः अयं चिदाभासो विषयसंपादनादिध्यानासक्ताचित्तः सन् कदाचन श्रुतिविचारात्पूर्वं कदाऽपि स्वतत्त्वं स्वस्य निजं रूपं स्वप्रकाशचिद्रूपं कूटस्थं प्रत्यगात्मानं नैव वेत्ति न जानाति यत्तदज्ञानं ॥ २९ ॥ नभातीति चिदात्मविषये प्रसंगे जाते कूटस्थो नास्ति न भातीति मत्वा ब्रूत इदमज्ञानकार्यमावरणं कूटस्थासत्त्वाभानाभिधानवत् कर्तृत्वादिकमात्मन्यारोपयति अस्यारोपस्य हेतुर्देहद्वययुतश्चिदाभासो विक्षेपः ॥ ३० ॥ अस्तिकूटस्थइति परेण बोधितः कूटस्थोऽस्तीति जानाति इदं परोक्षज्ञानं श्रवणादिपरिपाकवशात् कूटस्थोऽहमेवास्मीति जानाति इदमपरोक्षज्ञानं ॥ ३१ ॥ कर्तेति कूटस्थासंगात्मज्ञानानंतरं कर्तृत्वादिशोकजातं त्यजतीति यदयं शोकापगमः कृत्यं कर्तव्यजातं कृतं निष्पादितं प्रापणीयं फलजातं प्राप्तं लब्धमिति तुष्यति इयं तृप्तिरित्यर्थः ॥ ३२ ॥ दार्ष्टांतिकेऽप्युक्त-

अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः ॥ अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरंकुशा ॥ ३३ ॥ सप्तावस्था इमाः संति चिदाभासस्य तास्विमौ ॥ बंधमोक्षौ स्थितौ तत्र तिस्रो बंधकृतः स्मृताः ॥ ३४ ॥ न जानामीत्युदासीनव्यवहारस्य कारणम् ॥ विचारप्रागभावेन युक्तमज्ञानमीरितम् ॥ ३५ ॥ अमार्गेण विचार्याथ नास्ति नो भाति चेत्यसौ ॥ विपरीतव्यवहृतिरावृतेः कार्यमिष्यते ॥ ३६ ॥ देहद्वयचिदाभासरूपो विक्षेप ईरितः ॥ कर्तृत्वाद्यखिलः शोकः संसाराख्योऽस्य बंधकः ॥ ३७ ॥ अज्ञानमावृति-

---

मवस्थासप्तकं अनुवदति अज्ञानमिति ॥ ३३ ॥ ननूक्तावस्थासप्तकस्य आत्मधर्मत्वांगीकारे तस्य कूटस्थत्वं व्याहन्येत इत्याशंक्य एताः सप्तावस्थाः चिदाभासस्यैव न कूटस्थस्येत्याह सप्तावस्थाइति सर्वं वाक्यं सावधारणमितिन्यायेन चिदाभासस्यैवेत्यवगम्यते न कूटस्थस्य सप्तावस्थानां आसामत्रोपन्यासो वृथेत्याशंक्य न वृथात्वं बंधमोक्षकारित्वद्योतनफलत्वादुपन्यासस्य इत्यभिप्रायेणाह तास्विमाविति किमासां सप्तानामप्यविशेषेण बंधमोक्षकारित्वं नेत्याह तत्रेति अज्ञानावरणाविक्षेपरूपास्तिस्र इत्यर्थः ॥ ३४ ॥ आसां बंधकारित्वदर्शनाय तिसृणामपि स्वरूपं प्रत्येकं कार्यप्रदर्शनेन स्पष्टीचिकीर्षुः अज्ञानस्य स्वरूपं तावद्दर्शयति नजानामीति आत्मतत्त्वविचारप्रागभावसहितं उदासीनव्यवहारस्य कारणं न जानामीत्यनुभूयमानं अज्ञानमीरितमित्यर्थः ॥ ३५ ॥ आवृतिस्वरूपं तत्कार्यं च दर्शयति अमार्गेणेति शास्त्रोक्तं प्रकारमतिलंघ्य केवलं तर्केण विचार्य अनंतरं कूटस्थो नास्ति न भातीत्येवंरूपो विपरीतव्यवहार आवरणकार्यमित्यर्थः ॥ ३६ ॥ विक्षेपस्य स्वरूपं तत्कार्यं च दर्शयति देहद्वयेति स्थूलसूक्ष्माख्यशरीरद्वयसहितश्चिदाभास एव विक्षेपः बंधकः बंधहेतुः संसाराख्यः कर्तृत्वाद्यखिलः शोकः, अस्य चिदाभासस्य कार्यमिति शेषः कर्तृत्वादीत्यत्र आदिशब्देन प्रमातृत्वादयो गृह्यंते ॥ ३७ ॥ ननु

श्चैते विक्षेपात् प्राक् प्रसिध्यतः ॥ यद्यप्यथाप्यवस्थे ते विक्षेपस्यैव नात्मनः ॥ ३८ ॥ विक्षेपोत्पत्तितः पूर्वमपि विक्षेपसंस्कृतिः ॥ अस्त्येव तदवस्थात्वमविरुद्धं ततस्तयोः ॥ ३९ ॥ ब्रह्मण्यारोपितत्वेन ब्रह्मावस्थे इमे इति ॥ न शंकनीयं सर्वासां ब्रह्मण्येवाधिरोपणात् ॥ ४० ॥ संसार्यहं विबुद्धोऽहं निःशोकस्तुष्ट इत्यपि ॥ जीवगा उत्तरावस्था भांति न ब्रह्मगा यदि ॥ ४१ ॥ तर्ह्यज्ञोऽहं ब्रह्मसत्त्वभाने मद्दृष्टितो न हि ॥ इति पूर्वे अवस्थे च भासे-

---

सत्तावस्थाः चिदाभासस्येत्युक्तमनुपपन्नं अज्ञानावरणयोर्विक्षेपोत्पत्तेः पुरा स्थितत्वात् चिदाभासस्य च विक्षेपांतःपातित्वात् तदवस्थात्वानुपपत्तेरित्याशंक्याह अज्ञानमिति अनयोरज्ञानावरणयोर्विक्षेपात् पुरा स्थितत्वेऽपि नात्मावस्थात्वं तस्यासंगत्वेन अवस्थावत्त्वानुपपत्तेः अतः परिशेषाच्चिदाभासावस्थात्वमेव तयोः वक्तव्यमिति भावः ॥ ३८ ॥ अवस्थावतो विक्षेपस्य तदानीमभावात् तदवस्थात्वाभिधानमनुपपन्नमित्याशंक्य विक्षेपाभावेऽपि तत्संस्कारस्य तदानीं सत्त्वाद्विक्षेपावस्थात्वाभिधानं न विरुध्यते इत्याह विक्षेपेति ततः कारणात् तयोस्तदवस्थात्ववर्णनमविरुद्धमिति योजना ॥ ३९ ॥ नन्वप्रसिद्धसंस्काराभ्युपगमद्वारा विक्षेपावस्थात्ववर्णनात् वरमधिष्ठानतया प्रसिद्धब्रह्मावस्थात्ववर्णनमित्याशंक्य अतिप्रसंगान्मैवमिति परिहरति ब्रह्मणीति ॥ ४० ॥ ननु ब्रह्मण्यारोपितत्वाविशेषेऽपि विक्षेपोत्पत्त्युत्तरकालभाविनीनां संसारित्वाद्यवस्थानां जीवाश्रितत्वेन अनुभूयमानत्वान्न ब्रम्हावस्थात्वमिति शंकते संसारीति संसारी कर्तृत्वादिधर्मवान् विबुद्धः तत्त्वसाक्षात्कारवान्निःशोकः शोकरहितस्तुष्टः वक्ष्यमाणकृतकृत्यत्वादिजनितसंतोषवान् अहमस्मीत्युत्तरावस्था जीवगा जीवाश्रिता भांति न ब्रम्हाश्रिता इत्यर्थः ॥ ४१ ॥ एवं तर्ह्यज्ञानावरणयोरपि जीवाश्रितत्वेन अनुभूयमानत्वाज्जीवावस्थात्वमेवेति परिहरति तर्ह्यज्ञोऽहमिति मद्दृष्टितो ममानुभवेनेत्यर्थः ॥ ४२ ॥ ननु तर्ह्य-

ते जीवगे खलु ॥ ४२ ॥ अज्ञानस्याश्रयो ब्रह्मेत्यधिष्ठानतया जगुः ॥ जीवावस्थात्वमज्ञानाभिमानित्वादवादिषम् ॥ ४३ ॥ ज्ञानद्वयेन नष्टेऽस्मिन्नज्ञाने तत्कृतावृतिः ॥ न भाति नास्ति चेत्येषा द्विविधाऽपि विनश्यति ॥४४॥ परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता ॥ अपरोक्षज्ञाननाश्या ह्यभानावृतिहेतुता ॥ ४५ ॥ अभानावरणे नष्टे जीवत्वारोपसंक्षयात् ॥ कर्तृत्वाद्यखिलः शोकः संसाराख्यो निवर्तते ॥ ४६ ॥ निवृत्ते सर्वसंसारे नित्यमुक्तत्वभासनात् निरंकुशा भवेत्तृप्तिः पुनः शोकासमुद्भवात् ॥ ४७ ॥

---

ज्ञानाश्रयत्वं ब्रह्मणः पूर्वाचार्यैः कथमुक्तमित्याशंक्य तद्विवक्षां दर्शयति अज्ञानस्येति ब्रह्मणोऽज्ञानाधिष्ठानत्वविवक्षया तदाश्रयत्वमुक्तमित्यर्थः भवद्भिर्तर्हि किं विवक्षया जीवावस्थात्वमुक्तमित्याशंक्य स्वविवक्षां दर्शयति जीवावस्थात्वमिति ॥ ४३ ॥ एवं बंधहेतुमवस्थात्रयं प्रदर्श्य अवशिष्टास्ववस्थासु मध्ये पूर्वोक्ताज्ञानावरणनिवृत्तिद्वारा मुक्तिहेतुमवस्थाद्वयं दर्शयति ज्ञानद्वयेनेति परोक्षत्वापरोक्षत्वलक्षणेन ज्ञानद्वयेन आवरणकारणे अज्ञाने नष्टे सति तत्कृतावृतिः तेनाज्ञानेनोत्पादितं न भाति नास्तीतिव्यवहारकारणं द्विविधमप्यावरणं कारणाभावान्नश्यतीति ॥ ४४ कस्यांशस्य केन निवृत्तिरित्यपेक्षायां उभयं विभज्य दर्शयति परोक्षज्ञानइति कूटस्थोऽस्तीत्येवंरूपात् परोक्षज्ञानात् अज्ञानस्यासत्त्वावरणकारणत्वं निवर्तते कूटस्थोऽस्मीत्यपरोक्षज्ञानेन तु कूटस्थो न भातीत्येवंरूपावरणकारणत्वं निवर्तते ॥ ४५ ॥ इदानीं ज्ञानस्य फलरूपावस्थाद्वये प्रथमावस्थामाह अभानावरणइति अभानावरणे निवृत्ते भ्रांत्या प्रतीयमानस्य जीवत्वस्यापि निवृत्तत्वात्तन्निमित्तकः कर्तृत्वादिलक्षणः संसाराख्यः शोकः सर्वोऽपि निवर्तते इत्यर्थः ॥ ४६ ॥ एवं शोकापगमरूपामवस्थां प्रदर्श्य निरंकुशतृप्तिलक्षणां द्वितीयां दर्शयति निवृत्तेसर्वसंसारइति ॥४७॥

अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे ॥ अवस्थे जीव-
गे ब्रूत आत्मानं चेदिति श्रुतिः ॥ ४८ ॥ अयमित्यपरो-
क्षत्वमुक्तं तद्द्विविधं भवेत् ॥ विषयस्वप्रकाशत्वात् धियाऽ-
प्येवं तदीक्षणात् ॥ ४९ ॥ परोक्षज्ञानकालेऽपि विषयस्व-
प्रकाशता ॥ समा ब्रह्म स्वप्रकाशमस्तीत्येवं विबोधनात्
॥ ५० ॥ अहं ब्रह्मेत्यनुल्लिख्य ब्रम्हास्तीत्येवमुल्लिखेत् ॥
परोक्षज्ञानमेतन्न भ्रांतं बाधानिरूपणात् ॥ ५१ ॥ ब्रम्ह

---

नन्वात्मानं चेद्विजानीयादिति मंत्रव्याख्याने प्रवृत्तत्वात्तद्विहाय मध्येऽज्ञा-
नाद्यवस्थासप्तकनिरूपणं प्रकृतासंगतमित्याशंक्य आत्मानं चेद्विजानीया-
दित्यस्याः श्रुतेस्तात्पर्यनिरूपणशेषत्वेन अभिहितत्वान्न प्रकृतासंगतमि-
त्यभिप्रेत्य श्रुतितात्पर्यमाह अपरोक्षज्ञानेति चिदाभासनिष्ठं यदवस्थास-
प्तकमस्ति तत्रापरोक्षज्ञानशोकनिवृत्तिलक्षणमवस्थाद्वयं प्रतिपादयितुं अयं
मंत्रः प्रवृत्त इत्यभिप्रायः ॥ ४८ ॥ अयमित्यपरोक्षत्वमित्यत्र अयमिति
पदेनात्मनोऽपरोक्षत्वमुच्यते इत्युक्तं तथा सति अपरोक्षज्ञानविषयत्वमेव
स्यान्न परोक्षज्ञानविषयत्वमित्याशंक्य तदुपपादनाय अपरोक्षज्ञानं विभ-
जते अयमितीति द्वैविध्ये कारणमाह विषयेति विषयस्य चिद्रूपस्यात्मनः
स्वप्रकाशत्वात् स्वव्यवहारसाधनांतरनिरपेक्षत्वात् धिया बुद्ध्या एवं स्वप्र-
काशत्वेन तदीक्षणात्तस्य विषयस्य आत्मनोऽवलोकनाच्चेत्यर्थः ॥ ४९ ॥
भवतु द्वैविध्यं एतावता परोक्षज्ञानविषयत्वे किमायातमित्याशंक्य विषय-
स्वप्रकाशत्वं परोक्षज्ञानविषयत्वाविरोधि न भवतीत्याह परोक्षज्ञानेति अ-
परोक्षज्ञानकाल इव परोक्षज्ञानकालेऽपि विषयस्य ब्रह्मणः स्वप्रकाशताऽ-
स्त्येव तत्रोपपत्तिमाह ब्रह्मस्वप्रकाशमिति ॥ ५० ॥ प्रत्यगभिन्नब्रह्मगो-
चरस्य ज्ञानस्य कुतः परोक्षत्वमित्याशंक्य प्रत्यगंशाग्रहणादित्याह अहं
ब्रह्मेति नन्विदं भ्रांतमित्याशंक्य अस्य भ्रांतत्वं किं बाध्यत्वादुत व्यक्त्य-
नुल्लेखादथवा आपरोक्ष्येण ग्रहणयोग्यस्य पारोक्ष्येण ग्रहणात् यद्वांऽशा-
ग्रहणादिति चतुर्धा विकल्प्य प्रथमं प्रत्याह एतदिति ॥ ५१ ॥ हेतु

नास्तीति मानं चेत् स्याद्बाध्येत तदा ध्रुवम् ॥ न चैवं प्रबलं मानं पश्यामोऽतो न बाध्यते ॥ ५२ ॥ व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे स्वर्गधीरपि ॥ भ्रांतिः स्याद्व्यक्त्यनुल्लेखात् सामान्योल्लेखदर्शनात् ॥ ५३ ॥ अपरोक्षत्वयोग्यस्य न परोक्षमतिर्भ्रमः ॥ परोक्षमित्यनुल्लेखादर्थात्पारोक्ष्यसंभवात् ॥ ॥ ५४ ॥ अंशागृहीतेर्भ्रांतिश्चेद् घटज्ञानं भ्रमो भवेत् ॥ निरंशस्यापि सांशत्वं व्यावर्त्यांशविभेदतः ॥ ५५ ॥ असत्त्वांशो निवर्तेत परोक्षज्ञानतस्तथा ॥ अभानांशनिवृत्तिः स्यादपरोक्षधिया कृता ॥ ५६ ॥ दशमोऽस्तीति विभ्रांतं परो-

---

विवृणोति ब्रह्मनास्तीति ॥ ५२ ॥ द्वितीयमतिप्रसंगेन दूषयति व्यक्तीति अयं स्वर्ग इत्येवमाकारेण ग्रहणाभावात् किंतु स्वर्गोऽस्तीत्येवंसामान्याकारेण प्रतीतेः स्वर्गबुद्धेरपि भ्रमत्वप्रसंग इत्यर्थः ॥ ५३ ॥ तृतीयं निराकरोति अपरोक्षत्वेति अपरोक्षत्वेन ग्रहणयोग्यस्य प्रत्यगभिन्नब्रह्मविषयस्य परोक्षज्ञानस्य भ्रमत्वं न संभवति कुत इत्यत आह परोक्षमिति ब्रह्म परोक्षमित्येवमाकारेण ग्रहणाभावात् कुतस्तर्हि तस्य परोक्षत्वमित्याशंक्याह अर्थादिति इदं ब्रह्मेत्येवंव्यक्त्युल्लेखाभावसामर्थ्यात्परोक्षत्वसिद्धिरिति भावः ॥ ५४ ॥ चरममाशंकते अंशेति ब्रह्मांशग्रहणेऽपि प्रत्यगंशाग्रहणात् भ्रमत्वमित्यर्थः एवं तर्हि घटादिज्ञानस्यापि भ्रमत्वप्रसंगइति परिहरति घटज्ञानमिति आंतरावयवानामग्रहणादिति भावः ननु घटस्य सावयवत्वादंशग्रहणेऽपि अंशाग्रहणं संभवति ब्रह्मणस्तु निरंशत्वात्कथमंशग्रहणसंभव इत्याशंक्य व्यावर्त्यांशोपाधिनिमित्तकं सांशत्वं तस्य भविष्यतीत्याह निरंशस्येति ॥ ५५ ॥ कौ तौ व्यावर्त्यौ अंशौ इत्याकांक्षायामाह असत्त्वांशइति ॥ ५६ ॥ अपरोक्षत्वेन ग्रहणयोग्यविषयं परोक्षज्ञानं भ्रमो न भवतीत्येतन् दृष्टांतप्रदर्शनेनापि द्रढयति दशमइति दशमोऽस्तीत्याप्तवाक्यजन्यं परोक्षज्ञानमभ्रांतं यथा ब्रह्मास्तीतिवाक्यजन्यज्ञानमपि तद्वदभ्रांतं स्यात् अज्ञानकृतस्य असत्त्वावरणांशस्य समत्वा-

क्षज्ञानमीक्ष्यते ॥ ब्रम्हास्तीत्यपि तद्वत्स्यादज्ञानावरणं समम् ॥ ५७ ॥ आत्मा ब्रह्मेतिवाक्यार्थे निःशेषेण विचारिते ॥ व्यक्तिरुल्लिख्यते यद्वत् दशमस्त्वमसीत्यतः ॥ ५८ ॥ दशमः क इति प्रश्ने त्वमेवेति निराकृते ॥ गणयित्वा स्वेन सह स्वमेव दशमं स्मरेत् ॥ ५९ ॥ दशमोऽस्मीति वाक्योत्था न धीरस्य विहन्यते ॥ आदिमध्यावसानेषु न नवस्वस्य संशयः ॥ ६० ॥ सदेवेत्यादिवाक्येन ब्रम्हसत्त्वं परोक्षतः ॥ गृहीत्वा तत्त्वमस्यादिवा-

दिति भावः ॥ ५७ ॥ ननु वाक्यात्परोक्षज्ञानमुत्पद्यते चेत् अपरोक्षज्ञानं कुतो जायते इत्याशंक्य विचारसहिताद्वाक्यादेवेत्याह आत्मेति अयमात्मा ब्रह्मेतिमहावाक्यार्थे सम्यग्विचार्यमाणे पूर्वमस्तीति परोक्षतया अवगतस्य ब्रह्मणः प्रत्यगभिन्नत्वं साक्षात्क्रियते तत्र दृष्टांतः यद्वदिति दशमस्त्वमसीत्यतो वाक्यात्स्वात्मनि दशमत्वं यथा साक्षात्क्रियते तद्वदित्यर्थः ॥ ५८ ॥ विचारसहकृतेन वाक्येन अपरोक्षज्ञानोत्पत्तिप्रकारं सदृष्टांतमाह दशमइति त्वयाऽस्तीति निरूपितो दशमः क इति प्रश्ने कृते तस्य त्वमेवेति परिहारेऽभिहिते स्वात्मना सह इतरान्नव गणयित्वा अहं दशमोऽस्मीति स्वमेव दशमं स्मरेदित्यर्थः ॥ ५९ ॥ अस्य दशमोऽस्मीति ज्ञानस्य विचारसहितवाक्यजनितत्वात् विपर्ययादिरूपतेत्याह दशम इति अस्य दशमस्य त्वमेव दशमोऽसीतिवाक्यात् परिगणनादिलक्षणविचारसहितादुत्पन्न अहं दशमोऽस्मीतिबुद्धिर्न विहन्यते न केनापि ज्ञानेन बाध्यते परिगणनक्रियायां च नवानामादिमध्यावसानेषु परिगणनेऽपि अहं दशमो न वेति संशयश्च न भवेत् अतः सा दृढा ऽपरोक्षरूपेत्यर्थः ॥ ६० ॥ एतत्सर्वं दार्ष्टांतिके योजयति सदेवेत्यादीति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिवाक्येन ब्रह्मसद्भावं प्रथमं निश्चित्य तस्य जीवरूपेण प्रवेशादियुक्तिपर्यालोचनया प्रत्यग्रूपत्वं संभाव्य तत्त्वमसीत्यादिवाक्येन अद्वितीयब्रह्मरूपमात्मानं अहं ब्रह्मास्मीति

क्याद्ब्यक्तिं समुल्लिखेत् ॥ ६१ ॥ आदिमध्यावसानेषु स्वस्य ब्रम्हत्वधीरियम् ॥ नैव व्यभिचरेत्तस्मादापरोक्ष्यं प्रतिष्ठितम् ॥ ६२ ॥ जन्मादिकारणत्वाख्यलक्षणेन भृगुः पुरा ॥ पारोक्ष्येण गृहीत्वाऽथ विचाराद्ब्यक्तिमैक्षत ॥ ६३ ॥ यद्यपि त्वमसीत्यत्र वाक्यं नोचे भृगोःपिता ॥ तथाप्यन्नं प्राणमिति विचार्य स्थलमुक्तवान् ॥ ६४ ॥ अन्नप्राणादिकोशेषु सुविचार्य पुनः पुनः ॥ आनंदव्यक्तिमीक्षित्वा ब्रम्हलक्ष्माप्ययूयुजत् ॥ ६५ ॥ सत्यं ज्ञानमनंतं चेत्येवं ब्रह्मस्वलक्षणम् ॥ उक्त्वा गुहाहितत्वेन कोशेष्वेतत्प्रद-

साक्षात्कुर्यात् ॥ ६१ ॥ आदिमध्येति अत इयमात्मनो ब्रह्मत्वबुद्धिः पंचानां कोशानामादिमध्यावसानेष्वात्मनो व्यवहारेऽपि नैवान्यथा भवति अतोऽस्या बुद्धेरपरोक्षज्ञानत्वं सुस्थितामित्यर्थः ॥ ६२ ॥ नन्वेवं प्रथमतः केवलं वाक्यात्परोक्षज्ञानं उत्पद्यते पश्चात् विचारसहितादपरोक्षज्ञानमित्येतत्कुतोऽवगम्यते इत्याशंक्य तैत्तिरीयकादिश्रुत्यर्थपर्यालोचनयेत्याह जन्मादीति भृगुनामकः कश्चिदृषिः पुरा यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंतीति तद्विजिज्ञासस्व तद्ब्रह्मेति इति वाक्यश्रुतेन जगज्जन्मादिकारणत्वाख्यलक्षणेन जगत्कारणं ब्रह्म परोक्षतयाऽवगत्य अन्नमयादिपंचकोशविचाराद्ब्यक्तिं प्रत्यगात्मरूपं ब्रह्म दृष्टवानित्यर्थः ॥ ६३ ॥ नन्वस्मिन्प्रकरणे त्वं ब्रह्मासीत्येवमाद्युपदेशवाक्याभावात् कथं भृगोरात्मसाक्षात्कार इत्याशंक्य आत्मसाक्षात्कारहेतुविचारयोग्यस्थलप्रदर्शनादित्याह यद्यपीति ॥ ६४ ॥ नन्वन्नमयादिकोशेषु विचारितेषु प्रतीचः साक्षात्कारो भवतु ब्रह्मणस्तु कथमित्याशंक्य प्रतीच एव ब्रह्मत्वात्पंचकोशविचारेण आनंदात्मव्यक्तिं साक्षात्कृत्य आनंदाद्ध्येव खल्विमानि भूतानि जायंते आनंदेन जातानि जीवंति आनंदं प्रयंत्यभिसंविशंतीत्येवं ब्रम्हलक्षणमपि प्रतीच्येव योजितवानित्याह अन्नप्राणादीति ॥ ६५ ॥ ननु ब्रह्मलक्षणस्य आनंदात्मरूपेण प्रतीचि

र्शितम् ॥ ६६ ॥ पारोक्ष्येण विबुध्येंद्रो य आत्मेत्यादिलक्षणात् ॥ अपरोक्षीकर्तुमिच्छंश्चतुर्वारं गुरुं ययौ ॥६७॥ आत्मा वा इदमित्यादौ परोक्षं ब्रह्म लक्षितं ॥ अध्यारोपापवादाभ्यां प्रज्ञानं ब्रह्म दर्शितं ॥ ६८ ॥ अवांतरेण वाक्येन परोक्षा ब्रम्हधीर्भवेत् ॥ सर्वत्रैव महावाक्यवि-

---

योजनं न घटेत ब्रम्हणस्तटस्थत्वेन प्रतीचो भिन्नत्वादित्याशंक्य न भेदः सत्यादिलक्षणस्य ब्रह्मणः प्रत्यग्रूपेण अवस्थानश्रवणादित्याह सत्यमिति सत्यं ज्ञानमनंनं ब्रह्मेत्येवं ब्रम्हस्वलक्षणं ब्रम्हणः स्वरूपलक्षणमभिधाय यो वेद निहितं गुहायां परमेव्योमन्नित्यनेन वाक्येन पंचकोशगुहांतःस्थितत्वेन तस्यैव प्रत्यग्रूपत्वमभिहितमित्यर्थः ॥ ६६ ॥ एवं तैत्तिरीयश्रुतिपर्यालोचनया भृगोः परोक्षज्ञानपूर्वकविचारजन्यत्वं साक्षात्कारस्य दर्शयित्वा छांदोग्यश्रुतिपर्यालोचनेनापि तद्दर्शयति पारोक्ष्येणेति इंद्रः य आत्माऽपहतपाप्मा विजरो विम्रत्युर्विशोक इत्यादिवाक्यप्रातिपादितेन लक्षणेनात्मानं परोक्षतयाऽवगत्य विचाराच्छरीरत्रयनिराकरणेन तत्साक्षात्करणाय गुरुं ब्रम्हाणं चतुर्वारमुपसन्न इति छांदोग्योपनिषादि अष्टमाध्याये श्रूयते ॥ ६७ ॥ इदानीमैतरेयश्रुतावपि तद्दर्शयति आत्मा वाइति आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषादित्यनेन वाक्येन ब्रह्मणो लक्षणमभिधाय स ईक्षत लोकान्नुसृजा इतीत्युपक्रम्य तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इत्यनेन परमात्मनि जगदध्यारोपणप्रकारमभिधाय सजातो भूतान्यभिव्यैक्षत किमिहान्यं वावदिषदिति तस्यारोपितस्य अपवादमभिधाय स एतमेव पुरुषं ब्रह्मततममपश्यदिदमदर्शमिति इति प्रत्यगात्मना ब्रम्हस्वरूपत्वमभिहितं पुनश्च पुरुषेहवेत्यादिना ज्ञानसाधनवैराग्यजननाय गर्भवासादिदिदुःखं प्रदर्श्य कोऽयमात्मेति वयमुपास्महे इत्यादिना विचारेण तत्त्वंपदार्थपरिशोधनपुरःसरं प्रज्ञानं ब्रह्मेति प्रज्ञानरूपस्यात्मनो ब्रह्मत्वं दर्शितामित्यर्थः ॥ ६८ ॥ उक्तन्यायमितरासु श्रुतिष्वप्यातिदिशति अवांतरेणे-

चारादपरोक्षधीः ॥ ६९ ॥ ब्रम्हापरोक्ष्यसिध्यर्थं महावाक्यमितीरितम् ॥ वाक्यवृत्तावतो ब्रम्हापरोक्ष्ये विमतिर्नहि ॥ ७० ॥ आलंबनतया भाति योऽस्मत्प्रत्ययशब्दयोः ॥ अंतःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ७१ ॥ मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ॥ पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ७२ ॥ प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ॥ विरुध्येते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ७३ ॥ तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा॥

---

ति सर्वत्र सर्वासु श्रुतिष्वित्यर्थः ॥ ६९ ॥ ननु महावाक्यविचारस्य अपरोक्षज्ञानजनकत्वं स्वकपोलकल्पितमित्याशंक्य वाक्यवृत्तौ आचार्यैस्तथा प्रतिपादितत्वात् मैवमित्याह ब्रम्हापरोक्ष्येति अतो वाक्यात् ब्रम्हापरोक्षज्ञाने विप्रतिपत्तिर्नास्तीत्यर्थः ॥ ७० ॥ वाक्यवृत्तौ उपपादनप्रकारं दर्शयति आलंबनतयेति योऽतःकरणसंभिन्नबोधः अंतःकरणोपाधिकश्चिदात्मा अस्मत्प्रत्ययशब्दयोःअहमितिज्ञानस्य अहमितिशब्दस्य चालंबनतया विषयत्वेन भाति सः तथाविधो बोधः त्वंपदाभिधः त्वमितिपदमभिधा वाचकं यस्य सः त्वंपदाभिधः त्वंपदवाच्य इत्यर्थः ॥७१॥ एवं त्वंपदवाच्यार्थमभिधाय तत्पदवाच्यार्थमाह मायोपाधिरिति पारोक्ष्यशबलः परोक्षत्वधर्मविशिष्ट इत्यर्थः एवं तटस्थलक्षणमभिधाय स्वरूपलक्षणमाह सत्याद्यात्मकइति सत्यमादिर्येषां ज्ञानादीनां ते सत्यादयः आत्मा स्वरूपं यस्य स तथाविधः तत्पदाभिधः तत्पदमभिधा वाचकं यस्य सः तत्पदाभिधः तत्पदवाच्यइत्यर्थः ॥ ७२ ॥ एवं पदार्थावभिधाय वाक्यार्थबोधनाय लक्षणावृत्तिराश्रयणीयेत्याह प्रत्यक्परोक्षतेति प्रत्यक्परोक्षत्वे सद्वितीयत्वेन सहिता पूर्णतेति मध्यमपदलोपी समासः सद्वितीयत्वपूर्णत्वे चैकस्य वस्तुनो यतो विरुध्येते अतो लक्षणावृत्तिराश्रयणीयेत्यर्थः ॥ ७३ ॥ सा च कीदृशी इत्यत आह तत्त्वमसीति भागलक्षणा भागत्यागलक्षणेत्यर्थः तत्र दृष्टांतः सोऽयमिति सोऽयं देवदत्त इतिवा-

सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ७४ ॥ संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥ अखंडैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ७५ ॥ प्रत्यग्बोधो य आभाति सोऽद्वयानंदलक्षणः ॥ अद्वयानंदरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ७६ ॥ इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ॥ अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ७७ ॥ तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ॥ पूर्णानंदैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ७८ ॥ एवं सति महावाक्यात्परोक्षज्ञानमीर्यते ॥ यैस्तेषां शास्त्रसि-

---

क्यस्थयोः सोऽयमितिपदयोर्यथा जहदजहल्लक्षणावृत्तिराश्रिता नापरा न जहल्लक्षणा नाप्यजहल्लक्षणा तद्वदत्रापीत्यर्थः ॥ ७४ ॥ ननु गामानयेत्यादिवाक्येषु लक्षणावृत्त्या विनाऽपि वाक्यार्थबोधो दृश्यते तद्वदत्रापि किं न स्यादित्याशंक्याह संसर्गइति लोके गामानयेत्यादौ पदैः स्मारितानां आकांक्षादिमतां गवादिपदार्थानामन्वयो वाक्यार्थत्वेनांगीकृतः यथा नीलं महत्सुगंध्युत्पलमित्यादौ नीलत्वादिविशिष्टस्योत्पलस्य वाक्यार्थत्वं स्वीकृतं नैवमत्र महावाक्येषु संसर्गविशिष्टयोरन्यतरस्य वाक्यार्थत्वमभ्युपगम्यते किंतु अखंडैकरसत्वेन स्वगतादिभेदशून्यवस्तुमात्ररूपेण वाक्यार्थो विद्वद्भिरभ्युपेयते अतो लक्षणा आश्रयणीयेत्यर्थः ॥ ७५ ॥ अखंडैकरसं वाक्यार्थं दर्शयति प्रत्यग्बोध इति यः प्रत्यग्बोधः सर्वांतरश्चिदात्मा आभाति बुद्ध्यादिसाक्षित्वेन स्फुरति सोऽद्वयानंदलक्षणः अद्वितीय आनंदरूपः परमात्मेत्यर्थः अद्वयानंदरूपश्च तथाविधः परमात्मा प्रत्यग्बोधैकलक्षणश्चिदेकरसः प्रत्यगात्मैवेत्यर्थः ॥ ७६ ॥ एवमखंडार्थबोधेन किं स्यादित्यत आह इत्थमिति ॥ ७७ ॥ तदर्थस्येति त्वमर्थस्य प्रत्यगात्मनोऽब्रम्हत्वं भ्रांतिसिद्धा ब्रम्हरूपता तदर्थस्य ब्रह्मणश्च पारोक्ष्यं परोक्षज्ञानैकविषयत्वं च निवर्तते ततोऽपि किमिति पृच्छति यद्येवमिति उत्तरमाह शृण्विति ॥ ७८ ॥ ननु समयबलेन सम्यक्परोक्षानुभवसाधनमागम

द्धांतविज्ञानं शोभतेतरां ॥ ७९ ॥ आस्तां शास्त्रस्य सिद्धांतो युक्त्या वाक्यात्परोक्षधीः ॥ स्वर्गादिवाक्यवन्नैवं दशमे व्यभिचारतः ॥ ८० ॥ स्वतोऽपरोक्षजीवस्य ब्रह्मत्वमभिवांछतः ॥ नश्येत्सिद्धापरोक्षत्वमिति युक्तिर्महत्यहो ॥८१॥ वृद्धिमिष्टवतो मूलमपि नष्टमितीदृशं ॥ लौकिकं वचनं सार्थं संपन्नं त्वत्प्रसादतः ॥ ८२ ॥ अंतःकरणसंभिन्नबोधो जीवोऽपरोक्षताम् ॥ अर्हत्युपाधिसद्भावान्न तु ब्रम्हानुपाधितः ॥ ८३ ॥ नैवं ब्रम्हत्वबोधस्य सोपाधिविषयत्वतः ॥ यावद्विदेहकैवल्यमुपाधेरनिवारणात् ॥८४॥ अंतःकरणसाहित्यराहित्याभ्यां विशिष्यते ॥ उपाधिर्जीव-

---

इत्यागमलक्षणं अतो वाक्यस्यापरोक्षज्ञानजनकत्वं कथमुच्यते इत्याशंक्य सिद्धांतपरिज्ञानशून्योऽयमिति मनसि निधायोपहसति एवं सतीति एवं वदंतः सिद्धांतरहस्यं ते न जानंतीत्यर्थः ॥ ७९ ॥ ननु सिद्धांतस्तावत्तिष्ठतु वाक्यस्य परोक्षज्ञानजनकत्वं त्वनुमानसिद्धमिति शंकते आस्तामिति विमतं वाक्यं परोक्षज्ञानजनकं भवितुमर्हति वाक्यत्वात्स्वर्गादिप्रतिपादकवाक्यवत् इत्यनुमानेन परोक्षज्ञानजनकत्वं सिद्धमित्यर्थः अनैकांतिकोऽयं हेतुरिति परिहरति नैवमिति दशमस्त्वमसीतिवाक्ये वाक्यत्वे सति अपरोक्षज्ञानजनकत्वस्य उपलंभादिति भावः ॥ ८० ॥ किंच त्वंपदार्थस्य जीवस्य अपरोक्षत्वाभावप्रसंगादपि न महावाक्यं परोक्षज्ञानजनकमित्यंगीकार्यमित्याह स्वतइति ॥ ८१ ॥ इष्टापत्तिरित्याशंक्याह वृद्धिमिति ॥ ८२ ॥ ननु सोपाधिकत्वाज्जीवस्यापरोक्षत्वं युक्तं ब्रह्मणस्तु निरुपाधिकत्वात्तन्न युज्यते इति शंकते अंतःकरणेति ॥ ८३ ॥ ब्रम्हणो निरुपाधिकत्वमसिद्धमिति परिहरति नैवंब्रह्मेति जीवस्य ब्रम्हरूपताज्ञानं यदस्ति तस्य सोपाधिकवस्तुविषयत्वात्तद्विषयस्य ब्रम्हणोऽपि सोपाधिकत्वं ज्ञानस्य सोपाधिकविषयत्वं च ज्ञेयस्य सोपाधिकत्वमंतरेण न घटते इति भावः तदेव कुत इत्यत आह यावदिति ॥ ८४ ॥ ननु तर्हि जीव-

भावस्य ब्रम्हतायाश्च नान्यथा ॥ ८५ ॥ यथा विधिरुपाधिः स्यात्प्रतिषेधस्तथा न किम् ॥ सुवर्णलोहभेदेन शृंखलात्वं न भिद्यते ॥ ८६ ॥ अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ वेदांतानां प्रवृत्तिः स्याद्द्विधेत्याचार्यभाषितम् ॥ ८७ ॥ अहमर्थपरित्यागादहं ब्रम्हेति धीः कुतः ॥

---

ब्रह्मणोर्विलक्षणमुपाधिद्वयं वक्तव्यमित्याशंक्याह अंतःकरणेति जीवभावब्रह्मभावयोरंतःकरणसाहित्यराहित्ये एवोपाधी इत्यर्थः ॥ ८५ ॥ नन्वंतःकरणसंबंधस्य भावरूपत्वादुपाधित्वमस्तु नाभावरूपस्य तद्राहित्यस्य तदुचितमित्याशंक्य यावत्कार्यमवस्थायिभेदहेतोरुपाधित इत्युक्तोपाधिलक्षणस्य साहित्यराहित्ययोरुभयोरपि सत्त्वादुचितमेवोपाधित्वमित्यभिप्रायेण परिहरति यथेति विधिर्भावरूपोंऽतःकरणसंबंधो यथा उपाधिः स्यात्तथा प्रतिषेधोऽभावरूपोंऽतःकरणवियोगो न किं उपाधिर्न स्यात्किं स्यादेवेत्यर्थः तथाऽपि भावाभावरूपत्वलक्षणमवांतरवैलक्षण्यं दृश्यते एवेत्याशंक्य तस्य अकिंचित्करत्वेन अनादरणीयत्वमित्याभिप्रेत्य दृष्टांतमाह सुवर्णेति पुरुषप्रचारानिरोधकत्वांशेऽनुपयुक्तं सुवर्णत्वलोहत्वादिवैलक्षण्यं यद्वदनादरणीयं तद्वदित्यर्थः ॥ ८६ ॥ विधेरिव निषेधस्यापि ब्रह्मबोधोपायत्वेन ब्रह्मोपाधित्वं द्रढयितुं विधिनिषेधयोरुभयोरपि ब्रह्मबोधोपायत्वमाचार्यैर्निरूपितमिति दर्शयाति अतदिति तच्छब्देन ब्रह्माभिधीयते अतच्छब्देन तदतिरिक्तमज्ञानादिनेति नेतीत्यादिव्यावृत्तिर्निरसनं न तत् अतत् तस्य प्रपंचस्य व्यावृत्तिर्निरसनं तदेव रूपं उपायस्तेन साक्षाद्विधिमुखेन च विधिर्विधानं साक्षाद्वाचकशब्दप्रयोगः सत्यं ज्ञानमनंतमित्येवमादिरूपः तेन च विधिमुखेन तद्द्वारेणापीत्यर्थः वेदांतानामुपनिषदां प्रवृत्तिः प्रवर्त्तनं प्रतिपादनं ब्रह्मणीति शेषः ॥ ८७ ॥ ननु वेदांतानामतद्व्यावृत्त्या ब्रह्मबोधकत्वांगीकारेऽहंशब्दार्थस्य कूटस्थस्यापि त्यागप्रसंगादहं ब्रह्मास्मीति सामानाधिकरण्येन ज्ञानं नोदेतुमर्हतीति शंकते अहमर्थेति अहंशब्दार्थस्य सर्वस्यात्यक्तत्वान्नैवमिति परिहरति नैवमिति हि यस्मात् कारणात् भाव-

नैवमंशस्य हि त्यागो भागलक्षणयोदितः ॥ ८८ ॥ अंतः-करणसंत्यागादवशिष्टे चिदात्मनि ॥ अहं ब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते ॥ ८९ ॥ स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत् ॥ फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥ ९० ॥ बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ॥ तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ ९१ ॥ ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥ स्वयंस्फुरणरूपत्वान्नाभास उपयु-

---

गलक्षणया जहदजहल्लक्षणया अंशस्य अहंशब्दार्थैकदेशस्य जडांशस्य ईरितः न कूटस्थस्य अतोऽहं ब्रह्मास्मीति ज्ञानमुपपद्यते इत्यर्थः ॥ ८८ ॥ अंशत्यागेन बोधनप्रकारमभिनीय दर्शयति अंतःकरणेति ॥ ८९ ॥ ननु केवलस्य प्रत्यगात्मनः स्वप्रकाशत्वाद्बुद्धिवृत्तिविषयत्वं न घटते इत्याशंक्याह स्वप्रकाशइति अन्यवद्घटादिवदित्यर्थः स्वप्रकाशोऽहमित्येवं बुद्धिवृत्तिसंभवादिति भावः तर्हि अपसिद्धांतापात इत्याशंक्य पूर्वाचार्यैरपि वृत्तिव्याप्यत्वस्यांगीकृतत्वात् नायमपसिद्धांत इति परिहरति फलव्याप्यत्वमिति फलं वृत्तिप्रतिबिंबिताचिदाभासः तद्व्याप्यत्वमेव अस्य प्रत्यगात्मनो निराकृतं स्वस्यैव स्फुरणरूपत्वादिति भावः ॥ ९० ॥ आत्मनि फलव्याप्त्यभावं दर्शयितुं अनात्मनो वृत्त्या फलेन च व्याप्यत्वं दर्शयति बुद्धितदिति उभयव्याप्तेः प्रयोजनमाह तत्रेति तत्र तयोर्बुद्धिचिदाभासयोर्मध्ये धिया बुद्धिवृत्त्या प्रमाणभूतया अज्ञानं नश्यति ज्ञानाज्ञानयोर्विरोधात् आभासेन चिदाभासेन घटः स्फुरेत् जडत्वेन स्वतः स्फुरणायोगादिति भावः ॥ ९१ ॥ इदानीमात्मनि ततो वैलक्षण्यं दर्शयति ब्रह्मणीति प्रत्यक्ब्रह्मणोरेकत्वस्य अज्ञानेनावृतत्वात्तस्य अज्ञानस्य निवृत्तये वाक्यजन्यया अहं ब्रह्मास्मीत्येवमाकारया धीवृत्त्या व्याप्तिरपेक्ष्यते स्वस्यैव स्फुरणरूपत्वात्तत्स्फुरणाय चिदाभासो नापेक्ष्यते अतो युज्यमानोऽपि चि-

ज्यते ॥ १२ ॥ चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने यथा ॥ न दीपदर्शने किंतु चक्षुरेकमपेक्ष्यते ॥ १३ ॥ स्थितोऽप्यसौचिदाभासो ब्रह्मण्येकीभवेत्परं ॥ न तु ब्रह्मण्यतिशयं फलं कुर्याद्घटादिवत् ॥ १४ ॥ अप्रमेयमनादिं चेत्यत्र श्रुत्येदमीरितं ॥ मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुता ॥ १५ ॥ आत्मानं चेद्विजानीयादयमस्मीति वाक्यतः ॥ ब्रह्मात्मव्यक्तिमुल्लिख्य यो बोधः सोऽभिधी-

---

दाभासो नोपयुज्यते इत्यर्थः ॥ १२ ॥ उक्तमर्थं दृष्टांतप्रदर्शनेन विशदयति चक्षुरिति अंधकारावृतघटादिदर्शने चक्षुर्दीपौ उभौ अपि अपेक्ष्यते दीपप्रदर्शने तु तथा न किंतु एकं चक्षुरेवापेक्ष्यते यथा तथा ब्रह्मण्यज्ञाननाशायेति पूर्वेण संबंधः ॥ १३ ॥ ननु बुद्धितद्वृत्तीनां चिदाभासवैशिष्ट्यस्वाभाव्यात् घटादिष्विव ब्रह्मण्यपि फलव्याप्तिर्बलाद्भवेदित्याशंक्याह स्थितोऽपीति यद्यपि घटाद्याकारवृत्तिवत् ब्रह्मगोचरवृत्तावपि चिदाभासोऽस्ति तथाऽपि नासौ ब्रह्मणो भेदेन भासते किंतु प्रचंडातपमध्यवर्तिप्रदीपप्रभावत्तेनैकीभूत इव भवति अतः स्फुरणलक्षणातिशयजनको न ब्रह्मणीत्यर्थः ॥ १४ ॥ ननु ब्रह्मणि फलव्याप्तिर्नास्ति वृत्तिव्याप्तिस्तु विद्यते इत्युक्तं तत्र किं प्रमाणमित्याशंक्य आगमः प्रमाणमित्याह अप्रमेयमिति निर्विकल्पमनंतं च हेतुदृष्टांतवर्जितम् ॥ अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः॥ इत्यत्रास्मिन्मंत्रे श्रुत्याऽमृतबिंदूपनिषदा अप्रमेयशब्देन इदं फलव्याप्तिराहित्यमुक्तं मनसैवेदमाप्तव्यं नेह नानास्ति किंचनेति कठवल्ल्यां धीव्याप्यता श्रुता वृत्तिव्याप्यत्वं श्रुतमित्यर्थः ॥ १५ ॥ आत्मानं चेद्विजानीयादिति मंत्रेणापरोक्षज्ञानं शोकनिवृत्त्याख्यं जीवगतमवस्थाद्वयं अभिधीयते इत्युक्तं अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे अवस्थे जीवगे ब्रूत आत्मानंचेदिति श्रुतिरित्यनेन श्लोकेन तत्र कियतांशेन अपरोक्षज्ञानमुच्यते इत्याकांक्षायामाह आत्मानमिति ब्रह्मात्मव्यक्तिं सत्यादिलक्षणब्रह्माभिन्नप्रत्य-

यते ॥९६॥ अस्तु बोधोऽपरोक्षोऽत्र महावाक्यात्तथाऽप्यसौ ॥ न दृढः श्रवणादीनामाचार्यैः पुनरीरणात् ॥ ९७ ॥ अहं ब्रह्मेतिवाक्यार्थबोधो यावद्दृढीभवेत् ॥ शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥९८॥ बाढं संति ह्यदार्ढ्यस्य हेतवः श्रुत्यनेकता ॥ असंभाव्यत्वमर्थस्य विपरीता च भावना ॥ ९९ ॥ शाखाभेदात्कामभेदाच्छ्रुतं कर्मान्यथान्यथा ॥ एवमत्रापि मा शंकीत्यतः श्रवणमाच-

---

गात्मस्वरूपमुल्लिख्य विषयीकृत्य यो बोधो जायते ब्रह्माहमस्मीति सोऽभिधीयते अनेन वाक्येनेत्यर्थः ॥ ९६ ॥ ननु तर्हि पूर्वोक्तरीत्या सकृद्वाक्यविचारादेव अपरोक्षज्ञानसिद्धेरावृत्तिरसकृदुपदेशादित्यादौ विहितं श्रवणाद्यावर्तनमननुष्ठेयं स्यादित्याशंक्य ज्ञानदार्ढ्याय तदावर्तनानुष्ठानस्य आचार्यैरभिहितत्वादनुष्ठेयमेवेत्याह अस्तुबोधइति अत्र ब्रह्मात्मविषये महावाक्यात् सकृच्छ्रुताद्विचारसहितात् अपरोक्षबोधोऽस्तु भवत्वेवं तथाऽपि नासौ दृढः अतः श्रवणाद्यावर्तनीयं श्रीमच्छंकराचार्यैः पुनर्वाक्यार्थज्ञानोत्पत्त्यनंतरमपि श्रवणाद्यावर्तनाभिधानादित्यर्थः ज्ञानदार्ढ्याय इत्येतदर्थाल्लभ्यते ॥ ९७ ॥ आचार्यैः केन वाक्येन अभिहितमित्याशंक्य तद्वाक्यं पठति अहंब्रह्मेति ॥ ९८ ॥ ननु वाक्यप्रमाणजनितज्ञानस्य अदार्ढ्यं कुत इत्याशंक्याह बाढमिति हि यस्मात् कारणाच्छ्रुत्यनेकता श्रुतीनां नानात्वमेको हेतुः अर्थस्याप्यखंडैकरस्य अद्वितीयब्रह्मरूपस्य अलौकिकत्वेन असंभावितत्वमपरः विपरीतभावना च पुनः कर्तृत्वाभिमानरूपस्तृतीय इत्येवंविधा अदार्ढ्यस्य हेतवो बाढं संति सर्वथा विद्यंते अतोऽपरोक्षानुभवदार्ढ्याय श्रवणादिकमावर्तनीयमिति भावः ॥ ९९ ॥ एवं त्रिविधान् अदार्ढ्यहेतूनुपन्यस्य श्रुतिनानात्वप्रयुक्तादार्ढ्यनिवृत्तये श्रवणावृत्तिः कार्येत्याह शाखेति यथा शाखाभेदात्कर्मभेदः श्रूयते यद्वैव हौत्रं क्रियते यजुषाऽध्वर्यवं साम्नोद्गीथमिति यथा वा कामभेदात्का-

रेत् ॥ १०० ॥ वेदांतानामशेषाणामादिमध्यावसानतः ॥ ब्रह्मात्मन्येव तात्पर्यमिती धीः श्रवणं भवेत् ॥ १ ॥ समन्वयाध्याय एतत्सूक्तं धीस्वास्थ्यकारिभिः ॥ तर्कैः संभावनाऽर्थस्य द्वितीयाध्याय ईरिता ॥ २ ॥ बहुजन्मदृढाभ्यासाद्देहादिष्वात्मधीः क्षणात्॥ पुनः पुनरुदेत्येवं जगत्सत्यत्वधीरपि ॥ ३ ॥ विपरीता भावनेयमैकाग्र्यात्सा निवर्तते ॥ तत्त्वोपदेशात्प्रागेव भवत्येतदुपासनात् ॥४॥ उपास्तयोऽत एवात्र ब्रह्मशास्त्रेऽपि चिंतिताः ॥ प्रागनभ्यासिनः पश्चाद्ब्रह्माभ्यासेन तद्भवेत् ॥ ५ ॥ तच्चिंतनं त-

---

रीर्या वृष्टिकामो यजेत शतकृष्णलमायुष्काम इत्यादिकर्मभेदः श्रुतः एवमुपनिषत्स्वपि प्रतिपाद्यतत्त्वस्य भेदशंकायां तन्निवारणाय श्रवणं पुनः पुनः कर्तव्यमित्यर्थः ॥ १०० ॥ किं तच्छ्रवणमित्याकांक्षायां तल्लक्षणमाह वेदांतानामिति सर्वासामप्युपनिषदामुपक्रमोपसंहारादिपर्यालोचनायां ब्रह्मरूपे प्रत्यगात्मन्येव तात्पर्यमिदं पारंपर्येण पर्यवसानमित्येवंरूपो निश्चयः श्रवणमित्यर्थः ॥ १ ॥ एवंविधं श्रवणं कुत्र निरूपितमित्यत आह समन्वयाध्यायइति एतच्छ्रवणं समन्वयाध्याये सुष्ठूक्तं व्यासादिभिरिति शेषः अर्थासंभावनानिवृत्तिहेतुर्मननं नु द्वितीयाध्याये निरूपितमित्याह धीस्वास्थ्येति प्रमेयगतानुपपत्तिपरिहारद्वारा बुद्धिस्वास्थ्यकारिभिस्तर्कैः युक्तिशब्दाभिधेयैरर्थस्य संभावना संभावितत्वानुसंधानं मननं द्वितीयाध्याये निरूपितमित्यर्थः ॥ २ ॥ इदानीं विपरीतभावनां तन्निवृत्त्युपायं च दर्शयति बहुजन्मेति ॥ ३ ॥ विपरीतेति विपरीतभावनानिवर्तकं यदैकाग्र्यं तत्कुतो जायते इत्याशंक्याह तत्त्वेति एतदैकाग्र्यं ब्रह्मोपदेशात् प्रागेव सगुणब्रह्मोपासनाद्भवति भवेदित्यर्थः ॥ ४ ॥ नन्वेतत्कुतोऽवगतमित्याशंक्य उपासनाविचारस्य वेदांतशास्त्रे कृतत्वादित्याह उपास्तयइति अकृतोपास्तिकस्य कुतस्तज्जन्मेत्यतआह प्रागिति ॥ ५ ॥ ब्रह्माभ्यासश्च कीदृश इत्याकांक्षाया-

त्कथनमन्योन्यं तत्प्रबोधनम् ॥ एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ६ ॥ तमेवधीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ नानुध्यायाद्बहूंश्च्छब्दान्वाचो विग्लापनं हि तत् ॥ ७ ॥अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ८ ॥ इतिश्रुतिस्मृती नित्यमात्मन्येकाग्रतां धियः ॥ विधत्तो विपरीताया भावनायाः क्षयाय हि ॥ ९ ॥ यद्यथा वर्तते तस्य तत्त्वं हित्वाऽन्यथात्वधीः ॥ विपरीता भावना स्या-

---

माह तच्चिंतनमिति ॥ ६ ॥ एतदेकपरत्वं विशदयितुं श्रुतिमाह तमेवेति धीरो ब्रह्मचर्यादिसाधनसंपन्नः ब्राम्हणो ब्रह्म भवितुमिच्छुर्मुमुक्षुः तमेव प्रत्यग्रूपं परमात्मानमेव विज्ञाय संशयाद्यभावो यथा भवति तथा ज्ञात्वा प्रज्ञां ब्रह्मात्मैकत्वज्ञानसंततिरूपमैकाग्र्यं कुर्वीत संपादयेत अनात्मगोचरान् बहून् शब्दान्नानुध्यायान्नानुस्मरेत् ध्यानेनाभिधानमप्युपलक्ष्यते नाभिदध्याच्च अन्यथा शब्दध्यानेन वाग्विग्लापनानुपपत्तेः कुत इत्यत आह वाचइति हि यस्मात्तदभिधानं अनेन स्मरणमप्युपलक्ष्यते वाच इति मनसोऽप्युपलक्षणं विग्लापनं विग्लापयतीति विग्लापनं श्रमहेतुः अयमभिप्रायः इतरशब्दानुसंधाने मनसः श्रमो भवति तदभिधाने तु वाचइति ॥ ७ ॥ एवमैकाग्र्यप्रतिपादिकां श्रुतिमभिधाय स्मृतिमप्याह अनन्याइति ये जना अनन्या अहंब्रह्मास्मीति ज्ञानेन मदभिन्नाः संतस्तथैव मां चिंतयंतः पर्युपासते परितः सर्वेष्वपि कालेषु उपासते मद्रूपा एव वर्तंते तेषां नित्याभियुक्तानां सदा मच्चित्तानां तेषां अहं तदात्मत्वेन अनुसंधीयमानोऽहं योगक्षेममलब्धप्रापणलब्धपरिरक्षणरूपौ योगक्षेमौ वहामि संपादयामीत्यर्थः ॥८॥ उदाहृतयोः श्रुतिस्मृत्योस्तात्पर्यमाह इतीति एते श्रुतिस्मृती विपरीतभावनानिवृत्तये आत्मनि सदा चित्तैकाग्र्यं प्रतिपादयतः इत्यर्थः ॥ ९ ॥ ननु देहाद्यात्मत्वबुद्धेः जगत्सत्यत्वबुद्धेश्च कुतो विपरीतभावनात्वमित्याशंक्य तल्लक्षणयोगादिति दर्शयितुं तस्याः

त्पित्रादावरिधीर्यथा ॥ १० ॥ आत्मा देहादिभिन्नोऽयं मिथ्या चेदं जगत् तयोः ॥ देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥ ११ ॥ तत्त्वभावनया नश्येत्साऽतो देहातिरिक्तताम् ॥ आत्मनो भावयेत्तद्वन्मिथ्यात्वं जगतोऽनिशम् ॥ १२ ॥ किं मंत्रजपवन्मूर्त्तिध्यानवद्वाऽऽत्मभेदधीः ॥ जगन्मिथ्यात्वधीश्चात्र व्यावर्त्या स्यादुतान्यथा ॥ १३ ॥ अन्यथेति विजानीहि दृष्टार्थत्वेन भुक्तिवत् ॥ बुभुक्षुर्जप-

---

लक्षणमाह यद्यथेति यद्वस्तु शुक्त्यादि यथा येन शुक्त्यादिरूपेण वर्तते तस्य तत्त्वं शुक्त्यादिरूपत्वं परित्यज्यान्यथात्वधीः अन्यथात्वस्य रजतादिरूपत्वस्य धीर्ज्ञानं विपरीतभावना स्यात् अतस्मिंस्तत्बुद्धिरिति यावत् तामुदाहरति पित्रादाविति ॥ १० ॥ उक्तलक्षणं प्रकृते योजयति आत्मेति अयमात्मा वस्तुतो देहादिभ्यो भिन्नः इदं जगच्च मिथ्या एवं सत्यपि तयोः आत्मजगतोः यथाक्रमं देहादिरूपत्वबुद्धिः सत्यत्वबुद्धिश्च या विपरीतभावनेत्यर्थः ॥ ११ ॥ पूर्वमैकाग्र्यात्सा निवर्तते इति सामान्येनोक्तमर्थं विशेषाकारेणाह तत्त्वभावनयेति सा देहाद्यात्मत्वजगत्सत्यत्वधीरूपा विपरीता भावना तत्त्वभावनया आत्मनो देहातिरिक्तत्वस्य जगतो मिथ्यात्वस्य च भावनया निरंतरध्यानेन नश्येत् अत आत्मनो देहाद्यतिरिक्तत्वं देहादेः जगतो मिथ्यात्वं च सदा भावयेदित्युक्तम् ॥ १२ ॥ तत्र जपादाविव नियमापेक्षाऽस्ति वा नवेति पृच्छति किं मंत्रजपवदिति आत्मभेदधीरात्मनो देहादिभ्यो विभिन्नज्ञानं जगतो मिथ्यात्वानुसंधानं च मंत्रजपवत् देवताध्यानादिवत् किं नियमेनानुष्ठातव्यं उत लौकिकव्यवहारवन्नियममंतरेणापि कर्तुं शक्यते इति ॥ १३ ॥ दृष्टफलकत्वान्नात्र नियमः कश्चिदस्तीत्याह अन्यथेति अन्यथा नियमं विनेत्यर्थः तत्र हेतुमाह दृष्टार्थत्वेनेति तत्र दृष्टांतमाह भुक्तिवदिति दृष्टार्थेऽपि भोजने नियमाः श्रुतिस्मृत्योरुपलभ्यंते इत्याशंक्याह बुभुक्षुरिति क्षुदपनयनाय भोक्तुमिच्छन्पुरुषो जपं कुर्वाण इव न नियमेन भुंक्ते

वद्भुंक्ते न कश्चिन्नियतः क्वचित् ॥ १४ ॥ अश्नाति वा न वाऽश्नाति भुंक्ते वा स्वेच्छयाऽन्यथा ॥ येन केन प्रकारेण क्षुधामपनिनीषति ॥ १५ ॥ नियमेन जपं कुर्यादकृतौ प्रत्यवायतः ॥ अन्यथाकरणेऽनर्थः स्वरवर्णविपर्ययात् ॥ १६ ॥ क्षुधेव दृष्टबाधाकृद्विपरीता च भावना ॥ जेया केनाप्युपायेन नास्त्यत्रानुष्ठितेः क्रमः ॥ १७ ॥ उपायः पूर्वमेवोक्तस्तच्चिंताकथनादिकः ॥ एतदेकपरत्वेऽपि निर्बंधो ध्यानवन्न हि ॥ १८ ॥ मूर्तिप्रत्ययसांतत्यमन्या-

---

अपि तु यथा क्षुद्बाधोपशांतिः स्यात्तथा भोजनं करोतीत्यर्थः ॥ १४ ॥ एतदेव प्रपंचयति अश्नातीति अश्नाति वाऽन्ने सति कदाचिद्भुंक्ते न वाऽश्नाति तस्मिन्नसति क्षुद्बाधाविस्मारकद्यूतादिचेष्टयाऽनश्नन्नेव कालं नयति अन्यथा वा तिष्ठन् गच्छन् शयानो वा स्वेच्छया भुंक्ते एवं येन केन प्रकारेण तात्कालिकीं क्षुद्बाधामपनेतुमिच्छति अयमभिसंधिः क्षुद्बाधानिवृत्तिलक्षणदृष्टफलाय भोजनमेव कार्यं नियमास्तु परलोकहेतव इति ॥ १५ ॥ जपादौ भोजनाद्वैलक्षण्यं दर्शयति नियमेनेति तत्र हेतुमाह अकृताविति भवत्वेवमकरणे प्रत्यवायश्च अन्यथाकरणे तु स नास्तीत्याशंक्याह अन्यथेति मंत्रो हीनः स्वरतो वर्णतो वा ॥ मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति ॥ यथेंद्रशत्रुः स्वरतोऽपराधात् ॥ इत्युक्तत्वादिति भावः ॥ १६ ॥ ननु क्षुधाया दृष्टबाधाहेतुत्वात्तन्निवृत्तयेऽनियमेनापि भोक्तव्यमेव विपरीतभावनायास्तु तथात्वाभावात्तन्निवर्तकं ध्यानं अदृष्टफलाय नियमेनानुष्ठेयमित्याशंक्याह क्षुधेवेति विपरीतभावनाया दुःखहेतुत्वस्य अनुभवसिद्धत्वादिति भावः ॥ १७ ॥ तर्हि स उपायः प्रदर्शनीय इत्याशंक्य पूर्वमेव प्रदर्शित इत्याह उपायइति ननु जपवत् प्राङ्मुखत्वादिनियमो मा भूत् ध्यानवदेतदेकपरत्वलक्षणैकाग्रतानिर्बंधोऽस्तीत्याशंक्याह एतदिति ॥ १८ ॥ ननु ध्यानस्य ध्येयचिंतामात्रात्मकत्वात्तत्र को निर्बंध इत्याशंक्य ध्याने निर्बंधं दर्शयितुं ध्यानस्वरूपं ताव-

नंतरितं धियः ॥ ध्यानं तत्रातिनिर्बंधो मनसश्चंचलात्मनः ॥ १९ ॥ चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥ तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ २०॥ अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ॥ अपि वन्ह्यशनात्साधो विषमश्चित्तनिग्रहः ॥ २१ ॥ कथनादौ न निर्बंधः शृंखलाबद्धदेहवत् ॥ किंत्वनंतेतिहासाद्यैर्विनोदो नाट्यवद्धियः ॥ २२ ॥ चिदेवात्मा जगन्मिथ्येत्यत्र पर्यवसा-

---

दाह मूर्तीति धियो बुद्धेः संबंधिनां मूर्तिप्रत्ययानां देवतादिमूर्तिगोचराणां प्रत्ययानां यत्सांतत्यमविच्छिन्नतया वर्तमानत्वं तदन्यानंतरितमन्येन विजातीयप्रत्ययेनाव्यवहितं सत् ध्यानमित्युच्यते एवं ध्यानस्वरूपं निरूप्य तत्र निर्बंधं दर्शयति तत्रेति सदा पर्यटनशीलस्य करितुरगादेरेकत्र स्तंभादौ बंधने यथोपरोधः भवति तद्वदिति भावः ॥ १९ ॥ मनसश्चांचल्यादौ गीतावाक्यं प्रमाणयति चंचलंहीति प्रमाथि प्रमथनशीलं पुरुषस्य व्याकुलत्वकारणं बलवत्समर्थमनिग्राह्यमित्यर्थः दृढं सत्यसति वा विषये लग्नं तत उद्धर्तुमशक्यमित्यर्थः अतस्तस्य मनसो निग्रहो वायोर्निग्रह इव सुदुष्करः ॥ २० ॥ मनसो दुर्निग्रहत्वे वासिष्ठवाक्यमपि प्रमाणयति अपीति ॥ २१ ॥ प्रकृते ततो वैषम्यं दर्शयति कथनादाविति शृंखलाबद्धदेहस्य यथा निर्बंधः न तथा कथनादावित्यर्थः आदिशब्देन तच्चिंतनादिकं गृह्यते न केवलं निर्बंधाभावश्च प्रत्युत धियो विनोद इत्याह किंत्विति इतिहासः पूर्वेषां कथा आद्या येषां लौकिककथानुकूलयुक्तिदृष्टांतप्रदर्शनादीनां ते असंख्याता अनंताश्च ते इतिहासाद्याश्च इत्यनंतेतिहासाद्यास्तैर्धियः बुद्धेः विनोदः क्रीडाविषयो भवति तत्र दृष्टांतः नाट्यवदिति नृत्यक्रियानिरीक्षणमिवेत्यर्थः ॥ २२ ॥ ननु कथादिभिरपि तदेकपरत्वविघातः स्यादित्याशंक्याह चिदेवेति इतिहासादीनामात्मा चिन्मात्ररूपो न देहादिरूपः जगच्च मिथ्येत्येतस्मिन्नर्थे पर्यवसानात् न तैरेतदेकपरत्वशब्दाभिधेयस्य निदिध्यासनस्य विक्षेप इत्य-

कृतः ॥ निदिध्यासनविक्षेपो नेतिहासादिभिर्भवेत् ॥ २३ ॥ कृषिवाणिज्यसेवादौ काव्यतर्कादिकेषु च ॥ विक्षिप्यते प्रवृत्त्या धीस्तैस्तत्त्वस्मृत्यसंभवात् ॥ २४ ॥ अनुसंदधतैवात्र भोजनादौ प्रवर्तितुम् ॥ शक्यतेऽत्यंतविक्षेपाभावादाशु पुनःस्मृतेः ॥ २५ ॥ तत्त्वविस्मृतिमात्रान्नानर्थः किंतु विपर्ययात् ॥ विपर्येतुं न कालोऽस्ति झटिति स्मरतः क्वचित् ॥ २६ ॥ तत्त्वस्मृतेरवसरो नास्त्यन्याभ्यासशालिनः ॥ प्रत्युताभ्यासघातित्वाद्बलात्तत्त्वमुपेक्ष्यते ॥ २७॥ तमेवैकं विजानीथ ह्यन्या वाचो विमुञ्चथ ॥ इति श्रुतं तथाऽन्यत्र वाचो विग्लापनं त्विति ॥ २८ ॥ आहारा-

---

र्थः ॥ २३ ॥ नन्वितिहासानामंगीकारे कृष्यादेरपि प्रसक्तिः स्यादित्याशंक्याह कृषीति ॥ २४ ॥ ननु कृष्यादीनां तत्त्वानुसंधानविघातित्वेन त्याज्यत्वे भोजनादेरपि तथात्वात्तदपि त्याज्यमेवेत्याशंक्याह अनुसंदधतैवेति कुत इत्यत आह अत्यंतेति विक्षेपाभावोऽपि कुत इत्यत आह आशु पुनः स्मृतेरिति ॥ २५ ॥ ननु तदानीं विक्षेपाभावेऽपि तत्त्वविस्मृतिसद्भावात् पुरुषार्थहानिः स्यादित्याशंक्याह तत्त्वविस्मृतीति कुतस्तर्ह्यनर्थ इत्यत आह किंतु विपर्ययादिति विस्मरणे साति विपर्ययोऽपि स्यादित्याशंक्याह विपर्येतुमिति ॥ २६ ॥ ननु भोजनादिषु प्रवृत्तस्येव तर्काद्यभ्यासप्रवृत्तस्यापि तत्त्वस्मरणं किं न स्यादित्याशंक्याह तत्त्वस्मृतेरिति न केवलं तत्त्वानुसंधानावसराभाव एव किंतु काव्यतर्काद्यभासस्य तत्त्वाभ्यासविरोधित्वात्तदानीं स्मृतमपि तत्त्वं बलादुपेक्ष्यते इत्याह प्रत्युतेति ॥ २७ ॥ तत्त्वानुसंधानविरोधिवाग्व्यवहारस्य त्याज्यत्वे प्रमाणत्वेन तमेवैकं जानीथ आत्मानमन्यावाचो विमुंचथ अमृतस्यैष सेतुरिति श्रुतिवाक्यमर्थतः पठति तमेवेति नानुध्यायाद्बहून् शब्दान् वाचोविग्लापनं हि तदित्येतदपि वाक्यं श्रूयते इत्याह तथेति ॥ २८ ॥ ननु तत्त्वानुसंधानातिरिक्तमाहारादि यथा न त्यज्यते एवमितरशास्त्राद्यभ्यासोऽपि

दि त्यजन्नैव जीवेच्छास्त्रांतरं त्यजन् ॥ किं न जीवसि येनैवं करोष्यत्र दुराग्रहम् ॥२९॥ जनकादेः कथं राज्यमिति चेद्दृढबोधतः ॥ तथा तवापि चेत्तर्कं पठ यद्वा कृषिं कुरु ॥ ३० ॥ मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकांक्षया॥ अक्लिश्यंतः प्रवर्तंते स्वस्वकर्मानुसारतः ॥ ३१ ॥ अतिप्रसंगो मा शंक्यः स्वकर्मवशवर्तिनाम् ॥ अस्तु वा केन शक्येत कर्म वारयितुं वद ॥ ३२ ॥ ज्ञानिनोऽज्ञानिनश्चात्र समे प्रारब्धकर्मणी ॥ न क्लेशो ज्ञानिनो धैर्यान्मूढः क्लिश्यत्यधैर्यतः ॥३३॥ मार्गे गंत्रोर्द्वयोः श्रांतौ समायामप्यदूरताम् ॥ जानन् धैर्याद् द्रुतं गच्छेदन्यास्तिष्ठति दीनधीः ॥ ३४ ॥ साक्षात्कृतात्मधीः सम्यगविपर्ययबा-

---

क्रियतामित्याग्रहं कुर्वाणं प्रत्याह आहारादीति ॥ २९ ॥ ननु तर्हि जनकादीनां तत्त्वविदामपि कथं राज्यपरिपालनादौ प्रवृत्तिरिति शंकते जनकादेरिति दृढापरोक्षज्ञानित्वात्तेषां सा न बाधिकेत्याभिप्रायेण परिहरति तर्हि ममापि दृढबोधोऽस्तीति वदंतं प्रत्याह तथेति ॥ ३० ॥ ननु तत्त्वविदः संसारासारतां जानंतः कुतस्तत्र प्रवर्त्तिष्यंते इत्याशंक्य प्रारब्धस्यावश्यंभाविफलत्वाद्भोगेन तत्तत्क्षयाय प्रवृत्तिरित्याह मिथ्यात्वेति ॥ ३१ ॥ तर्ह्यनाचारेऽपि प्रवृत्तिः स्यादित्याशंक्याह अतिप्रसंगइति प्रारब्धवशादेवातिप्रसंगोऽपि स्यादित्याशंक्यांगीकरोति अस्त्विति ॥ ३२ ॥ ननु ज्ञान्यज्ञानिनोः प्रारब्धकर्मण्यवश्यभोक्तव्यतया समाने तयोः कुतो वैलक्षण्यसिद्धिरित्याशंक्याह ज्ञानिनइति ॥ ३३ ॥ तत्र दृष्टांतमाह मार्गेइति ॥ ३४ ॥ इत्थमुपपादितमात्मानं चेदितिमंत्रस्य पूर्वार्धार्थमनुवदन् फलप्रदर्शनपरमुत्तरार्धमवतारयति साक्षादिति सम्यक् साक्षात्कृतात्मधीः साक्षात्कृतः आत्मा यया सा साक्षात्कृतात्मा तादृशी धीर्यस्य सः साक्षात्कृतात्मधीः अविपर्ययबाधितः विपर्ययेण देहाद्यात्मत्वबुद्ध्या बाधितो न

धितः ॥ किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ ३५ ॥ जगन्मिथ्यात्वधीभावादाक्षिप्तौ काम्यकामुकौ ॥ तयोरभावे संतापः शाम्येन्निःस्नेहदीपवत् ॥ ३६ ॥ गंधर्वपत्तने किंचिन्नैंद्रजालिकनिर्मितम् ॥ जानन् कामयते किंतु जिहासति हसन्निदम् ॥ ३७ ॥ आपातरमणीयेषु भोगेष्वेवं विचारवान् ॥ नानुरज्यति किंत्वेतान् दोषदृष्ट्या जिहासति ॥ ३८ ॥ अर्थानामर्जने क्लेशस्तथैव परिपालने ॥ नाशे दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिणः ॥ ३९ ॥ मांसपांचालिकायास्तु यंत्रलोलेऽगपंजरे ॥

---

भवतीत्याविपर्ययबाधितः उभयं हेतुगर्भितं विशेषणं ॥ ३५ ॥ अस्य मंत्रार्धस्य तात्पर्यमाह जगन्मिथ्येति काम्यं च कामुकश्च काम्यकामुकौ तावाक्षिप्तौ निरस्तौ तन्निराकरणे कारणमाह जगन्मिथ्यात्वेति ततः किमित्यत आह तयोरिति तयोः काम्यकामुकयोरभावे संतापः कामनानिमित्तकः कारणाभावान्निःस्नेहदीपवत् शाम्येत् इत्यर्थः ॥ ३६ ॥ काम्याभावात्कामनाभावः क्व दृष्ट इत्याशंक्याह गंधर्वेति मायाविनिर्मिते पत्तने स्थितं वस्तु किंचिदपि इदमैंद्रजालिकनिर्मितामिति जानन् न कामयते न केवलं कामनाभावः प्रत्युत इदमनृतमिति हसन् जिहासति परित्यक्तुमिच्छति ॥ ३७ ॥ दार्ष्टांतिके योजयति आपातेति एवमापातरमणीयेषु प्रतीतिमात्ररम्येषु भोगेषु भुज्यंते इति भोगाः विषयाः स्रक्चंदनवनितादयः तेषु एवं विचारवान् आपातरमणीयत्वानुसंधानवान् नानुरज्यति नासक्तिं करोति किंतु दोषदर्शनेन एतान्परित्यक्तुमिच्छति ॥ ३८ ॥ के ते विषयदोषा इत्यत आह अर्थानामिति ॥ ३९ ॥ एवं विषयाणां दुःखहेतुत्वं प्रदर्श्याशोभनत्वं कचिद्दर्शयति मांसेत्यादिश्लोकद्वयेन स्नायवः शिराश्च अस्थीनि प्रसिद्धानि ग्रंथयो मांसनिचयरूपानितंबस्तनादयः एतैश्च सहिते मांसपांचालिकायाः पुत्तलिकाया योषितो यंत्रलोले यंत्रवच्चंचलशीले अंगपंजरे अंगान्येव पंजरं नीडं तस्मिन् शरीरे किं शोभनमिव

स्नाय्वस्थिग्रंथिशालिन्याः स्त्रियाः किमिव शोभनम् ॥ ४० ॥ एवमादिषु शास्त्रेषु दोषाः सम्यक् प्रपंचिताः॥ विमृशन्ननिशं तानि कथं दुःखेषु मज्जति ॥ ४१ ॥ क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ॥ मिष्टान्नध्वस्ततृट् जानन्नामूढस्तज्जिघत्सति ॥ ४२ ॥ प्रारब्धकर्मप्राबल्याद्भोगेष्विच्छा भवेद्यदि ॥ क्लिश्यन्नेव तदाऽप्येष भुंक्ते विष्टिगृहीतवत् ॥ ४३ ॥ भुंजाना वा अपि बुधाः श्रद्धावंतः कुटुंबिनः ॥ नाद्यापि कर्म नश्छिन्नमिति क्लिश्यंति संततम् ॥४४॥ नायं क्लेशोऽत्र संसारतापः किंतु विरक्तता ॥ भ्रांतिज्ञाननिदानो हि तापः सांसारिकः स्मृतः ॥ ४५ ॥ विवेकेन परिक्लिश्यन्नल्पभोगेन तृप्यति ॥ अ-

---

न किमपीत्यर्थः ॥ ४० ॥ एवमादिष्वित्यादिशब्देन त्वङ्मांसरक्तबाष्पांबु पृथक् कृत्वा विलोचने॥ समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥ इत्येवमादयो गृह्यंते ॥ ४१ ॥ विषयदोषदर्शने सति भोगेच्छाऽभावे युक्तिसहितं दृष्टांतमाह क्षुधयेति स्वयममूढः विवेकी मिष्टान्नभोजनेन ध्वस्ता विनष्टा तृट् तृष्णा आकांक्षा यस्य स तथोक्त इदं विषमित्येवं जानन् तद्विषं न जिघत्सति नात्तुमिच्छतीत्यर्थः ॥ ४२ ॥ ननु प्रारब्धकर्मणः प्रबलत्वात् ज्ञानिनोऽपीच्छा भवेदित्याशंक्य सत्यामपीच्छायां प्रीतिपुरःसरं न भुंक्ते इत्याह प्रारब्धेति ॥ ४३ ॥ कथमेतदवगम्येत इत्याशंक्य लोकदर्शनादित्याह भुंजाना इति ॥ ४४ ॥ ननु तत्त्वविदां संसारनिमित्तकस्तापोऽनुपपन्नः ज्ञानवैयर्थ्यापातादित्याशंक्याह नायमिति अयं क्लेशः नाद्यापि कर्म नः छिन्नमित्येवमनुतापात्मकः संसारतापो न भवति किंत्वत्र संसारे विरक्तता आसक्तिरहितता तापकत्वाभावे युक्तिमाह भ्रांतीति हि यस्मात्कारणात्सांसारिकस्तापो भ्रांतिज्ञाननिदानः भ्रांतिज्ञानकरणकः स्मृतः पूर्वाचार्यैः अयं तु विवेकज्ञानमूलत्वान्न तथाविध इत्यर्थः ॥ ४५ ॥ अयं क्लेशो विवेकमूलः अविवेकमूलो वेति कुतोऽवगम्यते इत्याशंक्य

न्यथाऽनंतभोगेऽपि नैव तृप्यति कर्हिचित् ॥ ४६ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४७ ॥ परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ॥ विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ ४८ ॥ मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः ॥ तमेवालब्धविस्तारं क्लिष्टत्वाद्बहु मन्यते ॥४९ ॥ बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति ॥ परैर्न बद्धो नाक्रांतो न राष्ट्रं बहु मन्यते ॥ ५० ॥ विवेके जाग्रति सति दोषदर्शनलक्षणे ॥ कथमारब्धकर्मापि भो-

---

कामनिवर्तकत्वाद्विवेकमूल इत्याह विवेकेनेति ॥ ४६ ॥ विवेकिन इवाविवेकिनोऽपि भोगेनैव तृप्तिः स्यादतो विवेकोऽप्रयोजक इत्याशंक्य भोगस्य तृप्तिहेतुत्वाभावप्रतिपादिकां श्रुतिं पठति नजातुकामइति ॥४७॥ विवेकमूलस्य भोगस्य तृप्तिहेतुत्वमनुभवसिद्धमित्याह परिज्ञायेति अयं भोग एतावान् एवं प्रयाससाध्य इत्येवमनुभवपूर्वश्चेदलंबुद्धिहेतुर्हि दृश्यते इत्यर्थः ननु तृष्णाहेतोः भोगस्य विवेकसाहचर्यमात्रेण कथं तुष्टिकरत्वमित्याशंक्य सहचारिविशेषवशाद्विपरीतकार्यकारित्वं लौकिके दृष्टमित्याह विज्ञायेति अयं चोर इति ज्ञात्वा तेन सह वर्तमानस्य पुरुषस्य न चोरो भवति किंतु मित्रतामेतीत्यर्थः ॥ ४८ ॥ ननु कामनास्वरसत्वान्मनसः कथं स्वल्पभोगेन तृप्तिः स्यादित्याशंक्य निदिध्यासनेन गृहीतस्य अतथात्वाद्भवत्येव तृप्तिरित्याह मनसइति निगृहीतस्य योगाभ्यासेन वशीकृतस्य मनसोऽल्पकोऽपि लीलाभोगः लीलानुभवो योऽस्ति अलब्धविस्तारमप्राप्तबाहुल्यं तमेव भोगं क्लिष्टत्वाद्दोषयुक्तत्वाद्बहु मन्यते अधिकत्वेन जानातीत्यर्थः ॥ ४९ ॥ निगृहीतस्यापि मनसः स्वल्पेनापि भोगेन तृप्तिर्भवतीत्यत्र दृष्टांतमाह बद्धमुक्तइति ॥ ५० ॥ ननु प्रारब्धकर्मप्राबल्यात् भोगेष्विच्छा भवेद्यदीत्यत्र कर्मवशादिच्छा भवेदित्युक्तं तदनुपपन्नं इच्छाविघातिनि विवेकज्ञाने सति तदुत्पत्त्यसंभवा-

गेच्छां जनयिष्यति ॥ ५१ ॥ नैष दोषो यतोऽनेकविधं प्रारब्धमीक्ष्यते ॥ इच्छाऽनिच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतम् ॥ ५२ ॥ अपथ्यसेविनश्चोरा राजदाररता अपि ॥ जानंत एव स्वानर्थमिच्छंत्यारब्धकर्मतः ॥ ५३ ॥ न चात्रैतद्वारयितुमीश्वरेणापि शक्यते ॥ यत ईश्वर एवाह गीतायामर्जुनं प्रति ॥ ५४ ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥ प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति ॥ ५५ ॥ अवश्यंभाविभानानां प्रतीकारो भवेद्यदि ॥ तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ ५६ ॥ न चेश्वरत्वमीशस्य हीयते तावता यतः ॥ अवश्यंभावि-

---

दिति शंकते विवेकइति ॥ ५१ ॥ दोषदर्शने सत्यपि इच्छाजन्म संभविष्यति प्रारब्धस्य नानाप्रकारकत्वादिति परिहरति नैषेति नानाप्रकारत्वमेव दर्शयति इच्छेति इच्छाजनकं अनिच्छया भोगप्रदं परेच्छया भोगप्रदं चेति त्रिविधमित्यर्थः ॥ ५२ ॥ इच्छाप्रारब्धं दर्शयति अपथ्येति ॥ ५३ ॥ अपथ्यसेवादीच्छायाः प्रारब्धफलत्वं कुतोऽवगम्यते इत्याशंक्य अपरिहार्यत्वादित्यभिप्रेत्याह नचेति अत्रास्मिन् लोके अपथ्यादीच्छंति इत्येतत् कुत इत्यत आह यतइति ॥ ५४ ॥ गीतावाक्यं पठति सदृशमिति विवेकज्ञानवानपि पुरुषः स्वस्याः स्वकीयायाः प्रकृतेः सदृशमनुरूपं चेष्टते प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः ज्ञानवानपि किं पुनर्मूर्खस्तस्मात्प्रकृतिं यांति भूतानि निग्रहः प्रवृत्तिनिवृत्त्योर्निरोधो मयाऽन्येन वा कृतः किं करिष्यति न किमपीत्यर्थः ॥ ५५ ॥ तीव्रप्रारब्धस्यापरिहार्यत्वे वचनांतरसंमतिमाह अवश्यमिति अवश्यंभाविनां भावानां दुःखादीनामित्यर्थः ॥ ५६ ॥ प्रारब्धस्यापरिहार्यत्वे तत्परिहारासमर्थस्येश्वरस्य अनीश्वरत्वप्रसंग इत्याशंक्याह नचेश्वरत्वमिति कुत इत्यत आह यतः अवश्यमिति यतः कारणादेषां दुःखादीनामवश्यंभाविताऽपि ईश्वरेणैव निर्मिताऽतो ना-

ताऽप्येषामीश्वरेणैव निर्मिता ॥ ५७ ॥ प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोः ॥ अनिच्छापूर्वकं चास्ति प्रारब्धमिति तच्छृणु ॥ ५८ ॥ अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥ अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ५९ ॥ काम एष क्रोध एष रजोगुणसमुद्भवः ॥ महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ६० ॥ स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥ कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६१ ॥ नानिच्छंतो

---

नीश्वरत्वप्रसंग इत्यर्थः ॥ ५७ ॥ एवं सप्रपंचमिच्छाप्रारब्धं अभिधाय अनिच्छाप्रारब्धं वक्तुमारभते प्रश्नोत्तराभ्यामिति अनिच्छापूर्वकं च प्रारब्धमस्तीत्येतदर्जुनकृष्णयोः प्रश्नोत्तराभ्यामेव गम्यते ज्ञायते इति योजना तदभिधानाय शिष्यमभिमुखीकरोति तच्छृण्विति ॥ ५८ ॥ तत्रार्जुनस्य प्रश्नं तावद्दर्शयति अथकेनेति हे वार्ष्णेय वृष्णिसंबंधिन् अयं पुरुषः केन प्रयुक्तः प्रेरितः अनिच्छन्नपि इच्छामकुर्वन्नपि राज्ञा बलान्नियोजित इव पापं चरति आचरतीति ॥ ५९ ॥ श्रीकृष्णस्योत्तरमाह कामइति एष पुरुषप्रवर्तकः रजोगुणात्समुद्भवः उत्पत्तिर्यस्य सः रजोगुणसमुद्भवः कामः एष प्रसिद्धोऽयं कामः कदाचित्क्रोधरूपेणापि परिणमते ततः क्रोधः स पुनः कीदृशः महाशनः महदशनं विषयजातं यस्य स महाशनः महापाप्मा महतः पापस्य हेतुत्वादुपचारान्महापाप्मत्वमस्य अत इह संसारे एनं कामक्रोधरूपिणं वैरिणं विद्धि अयमभिप्रायः प्रारब्धवशादुद्रिक्तरजोगुणकार्ययोः कामक्रोधयोरन्यतरस्यैव पुरुषप्रवर्तकत्वं न प्रवृत्तिरिच्छाया इति ॥ ६० ॥ नन्वत्र कामक्रोधयोरेव पुरुषप्रवर्तकत्वमुपलभ्यते नानिच्छाप्रारब्धस्येत्याशंक्य तस्यैव प्रवर्तकत्वप्रतिपादकं तद्वाक्यं पठति स्वभावजेनेति कौंतेय स्वेनैवानुष्ठितेन अत एव स्वकीयेन प्रारब्धेन कर्मणा निबद्धः सन् यत्कर्तुं नेच्छसि तदपि मोहादविवेकतः अवशः परवशः करिष्यसीत्यतोऽनिच्छाप्रारब्धमस्तीत्यभ्युपगंतव्यमिति भावः ॥ ६१ ॥ इदा-

न चेच्छंतः परदाक्षिण्यसंयुताः ॥ सुखदुःखे भजंत्येतत्परेच्छापूर्वकर्म हि ॥ ६२ ॥ कथं तर्हि किमिच्छन्नित्येवमिच्छा निषिध्यते ॥ नेच्छानिषेधः किंत्विच्छाबाधो भर्जितबीजवत् ॥ ६३ ॥ भर्जितानि तु बीजानि संत्यकार्यकराणिच ॥ विद्वदिच्छा तथेष्टव्याऽसत्त्वबोधान्न कार्यकृत् ॥ ६४ ॥ दग्धबीजमरोहेऽपि भक्षणायोपयुज्यते ॥ विद्वदिच्छाऽप्यल्पभोगं कुर्यान्न व्यसनं बहु ॥ ६५ ॥ भोगेन चरितार्थत्वात्प्रारब्धं कर्म हीयते ॥ भोक्तव्यसत्य-

---

र्नी परेच्छाप्रारब्धमस्तीत्याह नानिच्छंतइति अनिच्छंतोऽपि न भजंति इच्छंतोऽपि न भजंति किंतु परदाक्षिण्यसंयुक्ताः संतः तत्प्रीत्यर्थमेव सुखदुःखे अनुभवंति अत एतत्सुखादिभोगहेतुभूतं परेच्छापूर्वकं प्रारब्धं प्रसिद्धमित्यर्थः अत एव दोषदर्शने सत्यपि प्रारब्धस्य अपरिहार्यत्वात्तस्येच्छाजनकत्वं न निवारयितुं शक्नोतीति भावः ॥ ६२ ॥ ननु तत्त्वविदोऽपीच्छांगीकारे किमिच्छन्नितिश्रुतिविरोध इति शंकते कथं तर्हीति किमिच्छन्नित्यनेन वाक्येन कथमिच्छाभावो वर्णित इत्यर्थः नानेन इच्छाभावोऽभिधीयते किंतु सत्या अपि तस्याः समर्थप्रवृत्तिजनकत्वं नास्तीति बोध्यते इति परिहरति नेच्छानिषेधइति स्वरूपेण सत्या अपि तस्याः सामर्थ्यराहित्ये दृष्टांतमाह भर्जितेति ॥ ६३ ॥ संक्षेपेणोक्तमर्थं प्रपंचयति भर्जितानीति यथा भर्जितानि बीजानि स्वयं स्वरूपेण विद्यमानान्यपि नांकुरादिकार्यकराणि भवंति तथा विद्वदिच्छा स्वयं विद्यमानापीष्यमाणपदार्थस्यासत्त्वज्ञानेन बाधितत्वान्न व्यसनादिकार्यक्षमेत्यर्थः ॥ ६४ ॥ ननु तर्हि विदुष इच्छैव नांगीकर्तव्या फलाभावादित्याशंक्य फलाभावोऽसिद्धो भोगलक्षणफलसद्भावादिति सदृष्टांतमाह दग्धबीजमिति दग्धं भर्जितमिति यावत् व्यसनं विपदादिरूपं बहुविधं ॥ व्यसनं विपदि भ्रंशे दोषे कामजकोपजे इत्यभिधानात् ॥ ६५ ॥ ननु कर्मैव भोगद्वारा व्यसनमपि जनयेदित्याशंक्याह भोगेनेति प्रारब्धकर्म-

ता भ्रांत्या व्यसनं तत्र जायते ॥ ६६ ॥ मा विनश्यत्वयं भोगो वर्धतामुत्तरोत्तरम् ॥ मा विघ्नाः प्रतिबध्नंतु धन्योऽस्म्यस्मादिति भ्रमः ॥ ६७ ॥ यदभावि न तद्भावि भावि चेन्न तदन्यथा ॥ इति चिंताविषघ्नोऽयं बोधो भ्रमनिवर्तकः ॥ ६८ ॥ समेऽपि भोगे व्यसनं भ्रांतो गच्छेन्न बुद्धवान् ॥ अशक्यार्थस्य संकल्पाद्भ्रांतस्य व्यसनं बहु ॥ ६९ ॥ मायामयत्वं भोगस्य बुद्ध्वाऽऽस्थामुपसंहरन् ॥ भुंजानोऽपि न संकल्पं कुरुते व्यसनं कुतः ॥७०॥ स्वप्नेन्द्रजालसदृशमचिंत्यरचनात्मकम् ॥ दृष्टनष्टं जगत्प-

---

णो भोगमात्रहेतुत्वान्न व्यसनजनकत्वमित्यर्थः कुतस्तर्हि व्यसनजन्मेत्यत आह भोक्तव्येति तत्र तस्मिन्विषये ॥ ६६ ॥ व्यसनहेतुं भ्रमं दर्शयति माविनश्यात्विति अयं भोगो मा विनश्यतु एष उत्तरोत्तरं वर्धतां विघ्नाश्चैनं मा प्रतिबध्नंतु अस्य प्रतिबंधं मा कुर्वंतु अस्मादेव भोगात् अहं धन्यः कृतार्थोऽस्मीत्येवंरूपो भ्रमो भवति ततश्च व्यसनमित्यर्थः ॥ ६७ ॥ प्रसंगादस्य परिहारोपायमाह यदभावीति यद्भवितुमयोग्यं तन्न भवेदेव भवितुं योग्यं चेत्तदन्यथा न भवेदेव इत्येवंरूपः चिंताविषघ्नः इदं मे श्रेयः कदा भविष्यति इदमनिष्टं कदा निवर्तिष्यते इत्येवमादिचिंतैव विषमिव स्वसंसृष्टपुरुषस्य नाशहेतुत्वाद्विषं इदं चिंताविषं हंतीति चिंताविषघ्नः एवंभूतो यो बोधः सोऽयं भ्रमनिवर्तकः पूर्वोक्तभ्रमस्य निवर्तक इत्यर्थः ॥ ६८ ॥ ननु विद्वदविदुषोरुभयोरपि भोगित्वाविशेषे एकस्य व्यसनमपरस्य तु तन्नेत्येतत्कुत इत्याशंक्य विपरीतज्ञानसत्त्वासत्त्वाभ्यां तत्सिद्धिरित्याह समेऽपीति बुद्धवान् ज्ञानवान् ज्ञानीत्यर्थः भ्रांतेः कथं व्यसनहेतुत्वमित्यत आह अशक्यार्थस्येति ॥६९॥ विवेकिनस्तदभावं दर्शयति मायामयत्वमिति ॥ ७० ॥ ननु मायामयत्वबोधे सत्यपि भोगस्य तदानींतनसुखहेतुत्वात्कुत आस्थोपसंहार इत्या-

इयन् कथं तत्रानुरज्यति ॥ ७१ ॥ स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम् ॥ चिंतयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥ ७२ ॥ चिरं तयोः सर्वसाम्यमनुसंधाय जागरे ॥ सत्यत्वबुद्धिं संत्यज्य नानुरज्यति पूर्ववत् ॥७३॥ इंद्रजालमिदं द्वैतमचिंत्यरचनात्वतः ॥ इत्यविस्मरतो हानिः का वा प्रारब्धभोगतः ॥ ७४ ॥ निर्बंधस्तत्त्वविद्याया इंद्रजालत्वसंस्मृतौ ॥ प्रारब्धस्याग्रहो भोगे जी-

---

शंक्य बहुविधदोषदर्शनादित्याह स्वप्नेंद्रेति ॥ ७१ ॥ ननूक्तस्वप्नेंद्रजालसादृश्यादिज्ञाने सत्यासक्तिभावो न भवेत्तदेव कुतो जायते इत्याशंक्य तज्जन्मोपायमाह स्वस्वप्नमिति श्लोकद्वयेन स्वकीयस्वप्नमपरोक्षतया दृष्ट्वा स्वकीयं च जागरमनुभवन् स्वप्नजागरावुभावपि अप्रमत्तः सन्मुहुश्चिंतयेत्स्वप्नतुल्योऽयं जागर इति ॥ ७२ ॥ एवं तयोः स्वप्नजागरयोः सर्वसाम्यं तात्कालिकभोगहेतुत्वपरिणतिविरसत्वविनाशित्वादिलक्षणं चिरमनुसंधाय जागरेऽपि सत्यत्वबुद्धिं परित्यज्य जाग्रद्वस्तुष्वपि पूर्ववत् जगत्सत्यत्वज्ञानदशायामिव नानुरज्यति अनुरक्तो न भवतीत्यर्थः ॥ ७३॥ ननु प्रपंचगोचरस्य मिथ्यात्वज्ञानस्य विषयसत्यत्वोपजीविनो भोगस्य च परस्परविरोधान्मिथ्यात्वज्ञाने सति कथं भोगसिद्धिरित्याशंक्य भोगस्य विषयसत्यत्वापेक्षाभावान्न विरोध इति परिहरति इंद्रजालमिति इदं द्वैतं भोग्यजातं अचिंत्यरचनात्वादिंद्रजालवन्मिथ्येति युक्त्याऽनुसंधाय अविस्मरतो विदुषः प्रारब्धभोगतः प्रारब्धकर्मफलयोः सुखदुःखयोरनुभवेन मिथ्यात्वानुसंधानस्य का वा हानिः वाशब्दान्मिथ्यात्वानुसंधानेन वा भोगस्य का हानिः विभिन्नविषयत्वादिति भावः ॥ ७४ ॥ विभिन्नविषयत्वमेव दर्शयति निर्बंध इति तत्त्वविद्याया जगत्तत्त्वगोचरस्य ज्ञानस्य इंद्रजालवज्जगतो मिथ्यात्वानुसंधाने निर्बंधः न तु भोगापलापे प्रारब्धकर्मणश्च जीवस्य सुखदुःखयोः प्रदाने आग्रहः न तु भोग्यसत्यत्वापा-

वस्य सुखदुःखयोः ॥ ७५ ॥ विद्यारब्धे विरुध्येते न भिन्नविषयत्वतः ॥ जानद्भिरप्यैन्द्रजालविनोदो दृश्यते खलु ॥ ७६ ॥ जगत्सत्यत्वमापाद्य प्रारब्धं भोजयेद्यदि ॥ सदा विरोधि विद्याया भोगमात्रान्न सत्यता ॥ ७७ ॥ अनूनो जायते भोगः कल्पितैः स्वप्नवस्तुभिः ॥ जाग्रद्वस्तुभिरप्येवमसत्यैर्भोग इष्यताम् ॥ ७८ ॥ यदि विद्याऽपन्हुवीत जगत्प्रारब्धघातिनी ॥ तदा स्यान्न तु मा-

---

दान इति भावः ॥ ७५ ॥ एवं विभिन्नविषयत्वं प्रदर्श्य प्रयोगमाह विद्येति विद्याप्रारब्धकर्मणी परस्परं न विरुध्येते विभिन्नविषयत्वात् संप्रतिपन्नरूपरसज्ञानवदित्यर्थः भोग्यमिथ्यात्वज्ञानं भोगबाधकं न भवतीत्येतत् क्व दृष्टमित्याशंक्याह जानद्भिरिति ऐंद्रजालविनोदः इंद्रजालसंबंधिचमत्कारविशेषः जानद्भिरपींद्रजालं जानद्भिरप्यवलोक्यते इति प्रसिद्धमित्यर्थः ॥ ७६ ॥ किंच विद्याप्रारब्धकर्मणोर्विरोधोऽस्तीति वदन् प्रष्टव्यः किं प्रारब्धकर्म विद्याविरोधीत्युच्यते उत विद्या प्रारब्धकर्मविरोधिनीति नाद्य इत्याह जगदिति प्रारब्धं कर्म जगतो भोग्यजातस्य सत्यत्वमबाध्यत्वमापाद्य संपाद्य यदि भोजयेज्जीवस्य सुखदुःखे दद्यात्तदा विद्याविषयस्य मिथ्यात्वस्य अपहाराद्विद्याया विरोधि स्यान्न च तथा करोति किंतु भोगमेव प्रयच्छति अतो न विद्याविरोधि प्रारब्धमिति भावः भोगबलादेव भोग्यस्य सत्यत्वमपि स्यादित्याशंक्याह भोगमात्रादिति विमतं जगत् सत्यं भोग्यत्वादित्यत्र दृष्टांताभाव इति भावः ॥ ७७ ॥ ननु मिथ्यापदार्थैर्भोगो भवतीत्यत्रापि दृष्टांतो नास्तीत्याशंक्याह अनून इति ॥ ७८ ॥ नापि द्वितीय इत्याह यदि विद्येति विद्या यदि जगद्भोग्यजातमपन्हुवीत नेदं रजतमिति निषेधकज्ञानवत्प्रतीयमानस्य भोग्यस्य स्वरूपं विलापयेत् तदा प्रारब्धकर्मभोगस्य सुखदुःखानुभवस्य साधनापहारेण प्रारब्धकर्मविघातिनी स्यान्न च तत्करोति किंतु मिथ्यात्वमेव बोधयति अतो न प्रारब्धकर्मविरोधिनीति भावः ननु मिथ्यात्वबोधनादेव

यात्वबोधेन तदपन्हवः ॥ ७९ ॥ अनपन्हुत्य लोकास्तदिंद्रजालमिदं त्विति ॥ जानंत्येवानपन्हुत्य भोगं मायात्वधीस्तथा ॥ ८० ॥ यत्र त्वस्य जगत्स्वात्मा पश्येत्कस्तत्र केन किंम् ॥ किंज्जिघ्रेत् किं वदेद्वेति श्रुतौ तु बहु घोषितम् ॥ ८१ ॥ तेन द्वैतमपन्हुत्य विद्योदेति न चान्यथा ॥ तथा च विदुषो भोगः कथं स्यादिति चेच्छृणु ॥ ८२ ॥ सुषुप्तिविषया मुक्तिविषया वा श्रुतिस्त्विति ॥ उक्तं स्वाप्ययसंपत्योरितिसूत्रे ह्यतिस्फुटम् ॥ ८३ ॥ अन्यथा या-

---

स्वरूपमपि विलापयेदित्याशंक्याह नतुमायेति इंद्रजालादौ स्वरूपविलापनमंतरेणापि मिथ्यात्वज्ञानदर्शनादिति भावः ॥ ७९ ॥ एतदेव प्रपंचयति अनपन्हुत्येति लोका जनास्तदिंद्रजालस्वरूपमनपन्हुत्य अनिरस्य इदमिंद्रजालमिति जानंत्येव यथा तथा भोगं भोग्यमनपन्हुत्य अविलाप्य मायात्वधीः जगन्मिथ्यात्वज्ञानं भवतीत्यर्थः ॥ ८० ॥ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुतिः द्रष्टृदर्शनदृश्याभावं बोधयत्यतो विद्योत्पद्यमाना जगद्विलापयेदेव एवं सति विदुषो भोगश्च कथं स्यादिति श्रुत्यवष्टंभेन शंकते श्लोकद्वयेन यत्रत्वित्यादिना यत्र यस्यां विद्यावस्थायां कृत्स्नं जगदस्य विदुषः स्वात्मैवाभूदिदं सर्वं यदयमात्मेति ज्ञानेन स्वरूपमेव भवति तत्र तस्यां दशायां को द्रष्टा केन साधनेन चक्षुषा किं दृश्यं रूपजातं पश्येदेवं घ्राणलक्षणेन किं कुसुमादिकं जिघ्रेत् किं वाक्यं केन वागिंद्रियेण वा वदेदेवमितरेंद्रियव्यापाराभावद्योतनाय वा शब्दः इत्येवंप्रकारेण श्रुतौ बहुवारमभिहितमित्यर्थः ॥ ८१ ॥ ततः किमित्यत आह तेनद्वैतमिति स्वाप्ययसंपत्योरन्यतरापेक्षमाविष्कृतं हीत्यस्मिन् सूत्रे यत्र त्वस्येत्युदाहृतायाः श्रुतेः सुप्तिमोक्षयोरन्यतरविषयत्वेन व्याख्याततत्वान्न विद्यया जगदपन्हव इति परिहरति शृण्विति ॥ ८२ ॥ स्वाप्ययः सुषुप्तिः संपत्तिर्मुक्तिरित्यर्थः ॥ ८३ ॥ अस्याः श्रुतेः सुषुप्त्यादिविषयत्वानंगीकारे बाधकमाह अन्यथेति तत्रोपप-

ज्ञवल्क्यादेराचार्यत्वं न संभवेत् ॥ द्वैतदृष्टावविद्वत्ता द्वैतादृष्टौ न वाग्वदेत् ॥ ८४ ॥ निर्विकल्पसमाधौ तु द्वैतादर्शनहेतुतः ॥ सैवापरोक्षविद्येति चेत्सुषुप्तिस्तथा न किम् ॥ ८५ ॥ आत्मतत्त्वं न जानाति सुप्तौ यदि तदा त्वया ॥ आत्मधीरेव विद्येति वाच्यं न द्वैतविस्मृतिः ॥ ८६ ॥ उभयं मिलितं विद्या यदि तर्हि घटादयः ॥ अर्धविद्याभाजिनः स्युः सकलद्वैतविस्मृतेः ॥ ८७ ॥ मशकध्वनिमुख्यानां विक्षेपाणां बहुत्वतः ॥ तव विद्या तथा न स्याद्घटादीनां यथा दृढा ॥ ८८ ॥ आत्मधीरेव विद्येति यदि तर्हि

---

त्तिमाह द्वैतेति याज्ञवल्क्यादिर्यदि द्वैतं पश्येत्तर्हि तदा द्वैतज्ञानाभावान्नाचार्यो भवेत् अथ द्वैतं न पश्यति तर्हि बोध्यशिष्याद्यनुपलंभादाचार्यवाक् शिष्यं प्रति बोधनाय न प्रवर्तेत अतो विद्यासंप्रदायोच्छेदप्रसंग इति भावः ॥ ८४ ॥ ननु याज्ञवल्क्यादीनामाचार्यत्वदशायां विद्यमानस्य ज्ञानस्य विद्यात्वमस्त्येव तथाऽपि तस्य नापरोक्षविद्यात्वं द्वैतप्रतीतिसद्भावान्निर्विकल्पकसमाधौ तु द्वैतदर्शनाभावात्सैवापरोक्षविद्येति शंकते निर्विकल्पेति द्वैताप्रतीतेरप्यतिप्रसंगापादकत्वान्मैवमिति परिहरति सुषुप्तिस्तथानकिमिति ॥ ८५ ॥ अतिप्रसंगपरिहारं शंकते आत्मतत्त्वमिति सुप्तौ द्वैतदर्शनाभावेऽपि आत्मगोचरज्ञानाभावान्न विद्यात्वं तस्या इत्यर्थः तर्हि प्राप्तं विवेकज्ञानस्यैव विद्यात्वं न द्वैतदर्शनाभावस्येत्याह तदेति ॥ ८६ ॥ ननु द्वैतादर्शनात्मज्ञानयोर्मिलितयोरेव विद्यात्वं नैकैकस्येति शंकते उभयमिति द्वैतविस्मृतेरपि विद्यांशत्वांगीकारे जडस्याप्यर्धविद्यात्वप्रसंग इति परिहरति तर्हिघटादयइति अत्रोपपत्तिमाह सकलेति ॥ ८७ ॥ अस्मिन्नेव पक्षे समाधिमतां पुरुषाणां अर्धविद्यावत्त्वमपि न स्यादिति सोपहासमाह मशकध्वनीति घटादीनां यथा द्वैतविस्मरणं दृढं तथा तव समाधौ द्वैतविस्मरणं न संभवति मशकध्वन्यादीनामनेकेषां विक्षेपाणां सद्भावादित्यर्थः ॥ ८८ ॥ ननु आत्मज्ञानस्यैव विद्यात्वं न द्वैतविस्मृतेरिति शं-

सुखी भव ॥ दुष्टचित्तं निरुंध्याच्चेन्निरुंद्धि त्वं यथासुखम् ॥ ८९ ॥ तदिष्टमेष्टव्यमायामयत्वस्य समीक्षणात् ॥ इच्छन्नप्यज्ञवन्नेच्छेत्किमिच्छन्निति हि श्रुतम् ॥ ९० ॥ रागो लिंगमबोधस्य सन्तु रागादयो बुधे ॥ इति शास्त्रद्वयं सार्थमेवं सत्यविरोधतः ॥ ९१ ॥ जगन्मिथ्यात्ववत्स्वात्मासंगत्वस्य समीक्षणात् ॥ कस्य कामायेति वचो भोक्त्रभावविवक्षया ॥ ९२ ॥ पतिजायादिकं सर्वं तत्तद्भोगाय ने-

---

कते आत्मधीरेवेति तदस्माकमिष्टमित्यभिप्रायेण आशीर्वादयति तर्हि सुखीभवेति नन्वात्मधीरेव विद्या सा न दुष्टचित्ते संभवत्यतश्चित्तदोषपरिहाराय चित्तवृत्तिनिरोधः कार्य इति शंकामनुभाषते दुष्टचित्तमिति तदंगीकरोति निरुंद्धित्वामिति ॥ ८९ ॥ तदिष्टमिति अस्माकमपीति शेषः कुत इत्यत आह एष्टव्येति चित्तदोषापगमे सति अद्वितीयात्मज्ञानाय इष्यमाणं जगन्मायामयत्वं सम्यगीक्ष्यते यतः अत इष्टमित्यर्थः एवं किमिच्छन्निति मंत्रांशेनाभिप्रेतमर्थमुपपादितं उपसंहरति इच्छन्निति इच्छन्नपि अयं अज्ञवत् नेच्छेत् अतः किमिच्छन्निति श्रुतमिति योजना ॥ ९० ॥ एवमभिप्रायवर्णने कारणमाह रागोलिंगमिति ॥ रागो लिंगमबोधस्य चित्तव्यायामभूमिषु ॥ कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ॥ इति तत्त्वविदो रागनिषेधपरं शास्त्रं ॥ शास्त्रार्थस्य समाप्तत्वान्मुक्तिः स्यात्तावता मितेः ॥ रागादयः सन्तु कामं न तद्भावोऽपराध्यते ॥ इति तस्यैव रागांगीकारपरं च शास्त्रं एवं च सति तत्त्वविदो दृढरागाभावे सति शास्त्रद्वयं सार्थमर्थवद्भवति अविरोधतः रागनिषेधपरस्य शास्त्रस्य दृढरागविषयत्वात्तदभ्युपगमपरस्य शास्त्रस्य रागाभासविषयत्वादिति भावः ॥ ९१ ॥ एवं किमिच्छन्नित्यंशस्याभिप्रायमुपवर्ण्य कस्य कामायेत्यंशस्याभिप्रायमाह जगदिति यथा जगन्मिथ्यात्वबोधेन वास्तवकाम्याभावविवक्षया किमिच्छन्नित्युक्तं एवमात्मनोऽसंगत्वबोधेन वास्तवभोक्तृत्वाभावविवक्षया कस्य कामायेति श्रुत्याऽभिहितामित्यर्थः ॥ ९२ ॥ नन्वात्मनो भोक्तृ-

च्छति ॥ किंत्वात्मभोगार्थमिति श्रुतावुद्घोषितं बहु ॥९३॥ किं कूटस्थश्चिदाभासोऽथ वा किं वोभयात्मकः ॥ भोक्ता तत्र न कूटस्थोऽसंगत्वाद्भोक्तृतां व्रजेत् ॥ ९४ ॥ सुखदुःखाभिमानाख्यो विकारो भोग उच्यते ॥ कूटस्थश्च विकारी चेत्येतन्न व्याहतं कथम् ॥ ९५ ॥ विकारिबुद्ध्यधीनत्वादाभासे विकृतावपि ॥ निरधिष्ठानविभ्रांतिः केवला न हि तिष्ठति ॥ ९६ ॥ उभयात्मक एवातो लोके भोक्ता

---

त्वप्रतिषेधस्तत्प्रसक्तिपूर्वको वक्तव्यः सा तु न विद्यते असंगत्वादात्मन इत्याशंक्य तस्याः स्वानुभवसिद्धत्वान्नैवमित्याभिप्रेत्य तदनुवादिकां श्रुतिमर्थतोऽनुक्रामति पतिजायेति न वा अरे पत्युः कामाय पतिः प्रियो भवतीत्यारभ्य आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यंतेन वाक्यसंदर्भेण पतिजायादिकस्य प्रपंचस्यात्मनो भोगसाधनत्वं प्रतिपाद्यते तत आत्मनो भोक्तृत्वप्रसक्तिरित्यर्थः ॥ ९३ ॥ एवमात्मनो भोक्तृत्वं प्रदर्श्य तदपवादाय भोक्तारं विकल्पयति किंकूटस्थइति किं कूटस्थस्य भोक्तृत्वं उत चिदाभासस्य किंवोभयात्मकस्येति विकल्पार्थः तत्र प्रथमं प्रत्याह भोक्तातत्रेति ॥ ९४ ॥ असंगत्वमस्तु भोक्तृत्वमप्यस्तु को दोष इत्याशंक्याह सुखेति सुखित्वदुःखित्वाभिमानलक्षणो विकारो भोगः सोऽसंगस्य कूटस्थस्य न युज्यते कूटस्थत्वविकारित्वयोरेकत्र समावेशायोगादित्यर्थः ॥ ९५ ॥ ननु तर्हि विकारिणश्चिदाभासस्य भोक्तृत्वं स्यादित्याशंक्य विकारित्वेऽपि निरधिष्ठानस्य तस्यैवासिद्धेर्नैवमिति परिहरति विकारीति चिदाभासस्य विकारिबुद्ध्युपाध्यधीनत्वात्स्वस्मिन् विकारे संभवत्यापि तस्य आरोपितस्य आरोपितस्वरूपत्वेन अधिष्ठानभूतं कूटस्थं विहाय स्वातंत्र्येण अवस्थानासंभवात्केवलचिदाभासस्यापि भोक्तृत्वं न संभवतीति भावः ॥ ९६ ॥ तस्मात् तृतीयः पक्षः परिशिष्यते इत्याह उभयात्मकइति यत एकैकस्य भोक्तृत्वं न संभवति अत उभयात्मकः साधिष्ठानचिदाभास एव लोके व्यवहारदशायां भोक्तेत्यभिधीयते

निगद्यते ॥ तादृगात्मानमारभ्य कूटस्थः शेषितः श्रुतौ ॥ १७ ॥ आत्मा कतम इत्युक्ते याज्ञवल्क्यो विबोधयन् ॥ विज्ञानमयमारभ्यासंगं तं पर्यशेषयत् ॥ १८ ॥ कोऽयमात्मेत्येवमादौ सर्वत्रात्मविचारतः ॥ उभयात्मकमारभ्य कूटस्थः शेष्यते श्रुतौ ॥ १९ ॥ कूटस्थसत्यतां स्वस्मिन्नध्यस्यात्माऽविवेकतः ॥ तात्विकीं भोक्तृतां मत्वा न कदा-

---

परमार्थतस्तूभयात्मकत्वमेव न घटते इति भावः नन्वसंगो ह्ययं पुरुष इत्यादौ असंगत्वस्यैव योऽयं विज्ञानमयः प्राणेष्वित्यादौ बुद्धिसाक्षित्वस्यापि श्रवणादुभयात्मकं भोक्तृस्वरूपमपि पारमार्थिकमेव स्यान्न लोकव्यवहारमात्रसिद्धमित्याशंक्य श्रुतेस्तत्र तात्पर्याभावान्नैवमित्याह तादृगिति तादृगात्मानं बुध्युपाधिकं भोक्तारमात्मानमारभ्य अनूद्य कूटस्थः बुद्ध्यादिकल्पनाधिष्ठानभूतश्चिदात्मा शेषितः बुद्ध्याद्यनात्मनिरसनेन परिशेषितः श्रुतौ बृहदारण्यकादावित्यर्थः ॥ १७ ॥ तत्र बृहदारण्यकवाक्यार्थं तावत्संक्षिप्य दर्शयति आत्मेति जनकेन कतम आत्मेत्येवमात्मनि पृष्टे सति याज्ञवल्क्यस्तं विबोधयन् योऽयं विज्ञानमयः प्राणेष्वित्यादिना विज्ञानमयमुपक्रम्य असंगो ह्ययं पुरुष इत्यसंगं कूटस्थं परिशेषितवानित्यर्थः॥१८॥ एवं बृहदारण्यके असंगात्मपरिशेषप्रकारं प्रदर्श्य ऐतरेयादिश्रुत्यंतरेष्वपि तद्दर्शयति कोऽयमात्मेति कोऽयमात्मेति वयमुपास्महे कतरः स आत्मेत्येवमादौ आत्मविचारेणांतःकरणोपाधिकमात्मानमारभ्य प्रज्ञानमात्रात्मकः कूटस्थः परिशेषितः एवमन्यत्रापि द्रष्टव्यम् एवमुक्तश्रुतिपर्यालोचनायां उभयात्मकस्य भोक्तुर्मिथ्यात्वं पारमार्थिकस्य असंगस्य कूटस्थस्य अभोक्तृत्वं सिद्धम् ॥ १९ ॥ ननूक्तरीत्या भोक्तुर्मिथ्यात्वे प्राणिनां तस्मिन् सत्यत्वबुद्धिः कुतो जायते इत्याशंक्याह कूटस्थेति आत्मा लोकप्रसिद्धो भोक्ताऽविवेकतः स्वस्य कूटस्थात् विवेकज्ञानाभावेन कूटस्थनिष्ठं सत्यत्वं आत्मन्यध्यस्य तद्द्वारा स्वनिष्ठस्य भोक्तृत्वस्यापि सत्यतां

चिज्जिहासति ॥ २०० ॥ भोक्ता स्वस्यैव भोगाय पति-
जायादिमिच्छति ॥ एष लौकिकवृत्तांतः श्रुत्या सम्यगनू-
दितः ॥ १ ॥ भोग्यानां भोक्तृशेषत्वान्मा भोग्येष्वनुरज्य-
ताम् ॥ भोक्तर्येव प्रधानेऽतोऽनुरागं तं विधित्सति ॥ २ ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥ त्वामनुस्मरतः
सा मे हृदयान्माऽपसर्पतु ॥ ३ ॥ इतिन्यायेन सर्वस्मा-
द्भोग्यजाताद्विरक्तधीः ॥ उपसंहृत्य तां प्रीतिं भोक्तर्येनं

---

मत्वा भोगं कदाचिदपि न हातुमिच्छति ॥ २०० ॥ ननु तर्हि आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यात्मशेषत्वं भोग्यस्य कथं प्रतिपाद्यते इत्याशंक्य न कूटस्थात्मशेषत्वं प्रतिपाद्यते किंतु लोकप्रसिद्धोभयात्मकभोक्तृशेषत्वमेव श्रुत्याऽनूद्यते इत्याह भोक्तेति लोके यो भोक्ता सः स्वस्यैव भोगाय पतिजायादि भोगोपकरणमिच्छतीत्ययं लौकिकवृत्तांतः श्रुत्या सम्यगनूदितः नार्थांतरं प्रतिपाद्यते इत्यर्थः ॥ १ ॥ अनुवादः किमर्थमित्याशंक्य भोक्तर्येव प्रेम्णो विधानायेत्याह भोग्यानामिति भोग्यानां पतिजायादीनां भोक्तुः स्वस्य भोगोपकरणत्वाद्भोग्येष्वनुरागो न कर्त्तव्यः किंतु प्रधानभूते भोक्तर्येवानुरागः कर्तव्य इति विधानायेत्यर्थः ॥ २ ॥ भोग्येषु प्रेमत्यागपुरःसरं आत्मप्रेमकर्तव्यतायां दृष्टांतत्वेनेश्वरे प्रेमप्रार्थनापुरःसरं पुराणवचनमुदाहरति याप्रीतिरिति अविवेकिनामात्मज्ञानशून्यानां विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे माप लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिंतयतो मे हृदयान्मनसः सर्पतु अपगच्छतु मम मनो विषयेष्वासक्तिं परित्यज्य त्वय्येव सदा तिष्ठत्वित्यर्थः यद्वा अविवेकिनां विषयेषु दृढा या यादृशी प्रीतिरास्ति सा तादृशी विषयेषु विद्यमाना प्रीतिः त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु मा अपगच्छतु सदा तिष्ठत्वित्यर्थः ॥ ३ ॥ भवत्वेवं पुराणे श्रुतौ किमायातमित्यत आह इतिन्यायेनेति इत्यनेन पुराणोक्तन्यायेन सर्वस्माद्भोग्यजातात् पतिजायादिलक्षणात् विरक्तधीः विरक्ता धीर्यस्य असौ विरक्तधीः पुरुषः तां भो-

बुभुत्सते ॥ ४ ॥ स्रक्चंदनवधूवस्त्रसुवर्णादिषु पामरः ॥ अप्रमत्तो यथा तद्वन्न प्रमाद्यति भोक्तरि ॥ ५ ॥ काव्यनाटकतर्कादिमभ्यस्यति निरंतरम् ॥ विजिगीषुर्यथा तद्वन्मुमुक्षुः स्वं विचारयेत् ॥ ६ ॥ जपयागोपासनादि कुरुते श्रद्धया यथा ॥ स्वर्गादिवांछया तद्वच्छ्रद्दध्यात्स्वे मुमुक्षया ७ ॥ चित्तैकाग्र्यं यथा योगी महायासेन साधयेत् ॥ अणिमादिप्रेप्सयैवं विविच्यात् स्वं मुमुक्षया ॥८॥ कौशलानि विवर्धन्ते तेषामभ्यासपाटवात् ॥ यथा तद्वद्विवेकोऽस्याप्यभ्यासाद्विशदायते ॥ ९ ॥ विविंचता भोक्तृ-

---

ग्यगोचरां प्रीतिं भोक्तर्यात्मन्युपसंहृत्य एनमात्मानं बुभुत्सते बोद्धुमिच्छति ॥ ४ ॥ एवमात्मन्येव प्रेमोपसंहारे फलितं सदृष्टांतमाह स्रक्चंदनेति पामरः पृथक् जनः स्रगादिविषये यथाऽप्रमत्तः सावधानो भवति एवं मुमुक्षुरप्यात्मविषये न प्रमाद्यत्यनवधानं न करोति किंतु तच्चिंतयैव तिष्ठतीत्यर्थः ॥ ५ ॥ अनवधानाभावमेव बहुभिर्दृष्टांतैः स्पष्टयति काव्येति यथा विजिगीषुः प्रतिवादिजयकाम इह लोके प्रधानः पुरुषो निरंतरं काव्यादीनभ्यस्याति एवं मुमुक्षुरपि सदा स्वात्मानं विचारयेत् ॥ ६ ॥ जपेति यथा वैदिकश्च स्वर्गाद्यर्थी तत्तत्साधनानि जपादीनि श्रद्धापुरःसरमनुतिष्ठति तथा मुमुक्षुरपि मोक्षेच्छया स्वे श्रौते आत्मनि विश्वासं कुर्यात् ॥ ७ ॥ चित्तैकाग्र्यमिति योगी योगाभ्यासवानणिमाद्यैश्वर्यलाभेच्छया महायासेन चित्तैकाग्र्यं यथा संपादयेत्तद्वदयमप्यात्मानं सदा विविच्यात् देहादिभ्यो विविच्य जानीयादित्यर्थः ॥ ८ ॥ नन्वेवमेतेषां सदाऽभ्यासेन किं फलमित्यत आह कौशलानीति यथा तेषां काव्याद्यभ्यासवतां अभ्यासपाटवेन तस्मिन् तस्मिन्विषये कौशलानि विवर्धन्ते एवमस्यापि मुमुक्षोरभ्यासाद्विवेको देहादिभ्य आत्मनो भेदज्ञानं विशदायते स्पष्टं भवति ॥ ९ ॥ विवेकवैशद्यस्य फलमाह विविंचतेति अन्वयव्यतिरेकाभ्यां भोक्तृतत्त्वं भोक्तुः पारमार्थिकस्वरूपं विविंचता भो-

तत्त्वं जाग्रदादिष्वसंगता ॥ अन्वयव्यतिरेकाभ्यां साक्षिण्यध्यवसीयते ॥ १० ॥ यत्र यद्दृश्यते द्रष्ट्रा जाग्रत्स्वप्नसुषुप्तिषु ॥ तत्रैव तन्नेतरत्रेत्यनुभूतिर्हि संमता ॥ ११ ॥स यत्तत्रेक्षते किंचित्तेनानन्वागतो भवेत् ॥ दृष्ट्वैव पुण्यं पापं चेत्येवं श्रुतिषु डिंडिमः ॥ १२ ॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ॥ तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते ॥ १३ ॥ एक एवात्मा मंतव्यो जाग्रत्स्वप्नसुषुप्ति-

---

ग्येभ्यो जडजातेभ्यो भेदेन जानता पुरुषेण जाग्रदादिषु जाग्रत्स्वप्नसुषुप्तिष्ववस्थासु साक्षिण्यसंगताऽध्यवसीयते निश्चीयते इत्यर्थः ॥ १० ॥ अन्वयव्यतिरेकौ दर्शयति यत्रेति जाग्रदादिषु मध्ये यत्र यस्मिन् स्थाने जाग्रति स्वप्ने सुषुप्तौ वा यत् स्थूलं सूक्ष्ममानंदश्चेति त्रिविधं भोग्यं द्रष्ट्रा साक्षिणा दृश्यते अनुभूयते तत् दृश्यं तत्रैव तस्यामेवावस्थायां तिष्ठति इतरत्र न इतरस्यामवस्थायां नास्ति द्रष्टा तु सर्वत्रानुगततया वर्तते इत्यनुभवः सर्वसंमतः हि प्रसिद्धमेतदित्यर्थः ॥ ११ ॥ न केवलमनुभवः आगमोऽपीत्यभिप्रायेण स यत्तत्र किंचित् पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुषः स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवतीत्यादिवाक्यद्वयमर्थतः पठति सयदिति स आत्मा तत्र तस्यामवस्थायां यत्किंचिद्भोग्यमीक्षते पश्यति तेन दृश्येनानन्वागतो भवेदनुसृत्य गतो न भवेत्किंतु स्वयमेवावस्थांतरं गच्छतीत्यर्थः पुण्यं पुण्यफलं सुखं पापं तत्फलं दुःखं च दृष्ट्वैवानादायैवेत्यर्थः॥ १२ ॥ भोक्तृतत्त्वविवेचनपराणि श्रुत्यंतराणि दर्शयति जाग्रदिति यत्सत्यज्ञानानंदलक्षणं ब्रह्म साक्षिरूपेणावस्थितं तज्जाग्रदादिप्रपंचं प्रकाशते प्रकाशयति तद्ब्रह्माहमस्मि न बुद्धिचिदाभासाद्यहमस्मीति ज्ञात्वा श्रुत्यनुभवाभ्यां निश्चित्य सर्वबंधैः प्रमातृत्वकर्तृत्वादिभिः प्रमुच्यते प्रकर्षेण सर्वात्मना मुच्यते ॥ १३ ॥ एकइति जाग्रदादिष्ववस्थासु एक एवात्मा मंतव्यः एवं विवेकज्ञानेन

षु ॥ स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ १४ ॥ त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ॥ तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १५ ॥ एवं विवेचिते तत्त्वे विज्ञानमयशब्दितः ॥ चिदाभासो विकारी यो भोक्तृत्वं तस्य शिष्यते ॥ १६ ॥ मायिकोऽयं चिदाभासः श्रुतेरनुभवादपि ॥ इंद्रजालं जगत्प्रोक्तं तदंतःपात्ययं यतः ॥ १७ ॥ विलयोऽप्यस्य सुप्त्यादौ साक्षिणा

---

स्थानत्रयव्यतीतस्य अवस्थात्रयाद्विविक्तस्यात्मनः पुनर्जन्म न विद्यते एतच्छरीरपातानंतरं शरीरांतरप्राप्तिर्नास्तीत्यर्थः ॥ १४ ॥ त्रिष्विति त्रिषु धामसु त्रिष्ववस्थानेषु यद्भोग्यं स्थूलप्रविविक्तानंदरूपं यश्च भोक्ता विश्वतैजसप्राज्ञरूपो यश्च भोगस्तदनुभवरूपश्चेति ये विद्यंते तेभ्यः स्थानादिभ्यो विलक्षणो यश्चिन्मात्ररूपः साक्षी सदाशिवः निरतिशयानंदरूपत्वेन सर्वदा शोभमानः परमात्माऽस्ति सोऽहमस्मीत्यर्थः ॥ १५ ॥ एवं विवेकेनात्मतत्त्वेऽसंगे निश्चिते सति भोक्तृत्वं कस्येत्यत आह एवमिति यो विज्ञानशब्देन अभिधीयमानश्चिदाभासस्तस्य विकारित्वात् भोक्तृत्वमित्यर्थः ॥ १६ ॥ ननु चिदाभासस्य भोक्तृत्वांगीकारे कस्य कामायेति वचो भोक्तृभावविवक्षयेति पूर्वोक्तं व्याहन्येतेत्याशंक्य तस्य वचनस्य पारमार्थिकभोक्तृभावपरत्वमभिप्रेत्य भोक्तुश्चिदाभासस्य मिथ्यात्वं साधयति मायिकइति अयं चिदाभासो मायिको मृषात्मकः श्रुतेः जीवेशावाभासेन करोतीति श्रुतेः अनुभवादपि द्रष्टृादित्रितयमध्यवर्त्तित्वेन अनुभूयमानत्वादपीत्यर्थः तदेवोपपादयति इंद्रजालमिति इंद्रजालवन्मिथ्याभूते जगत्यंतर्भूतत्वादस्यापि मिथ्यात्वं तद्वदनुभूयते विद्वद्भिरिति शेषः यस्माज्जगदंतःपातीत्यतो मृषेति योजना ॥ १७ ॥ अस्य जगत इव विनाशित्वानुभवादपि मृषात्वमित्याह विलयोऽपीति मूर्च्छादिरादिशब्दार्थः भवतु मृषात्वं ततः किमित्यत आह एतादृशमिति यदा कूटस्थाद्विवेचितश्चिदाभासो मायिको ज्ञातस्तदा स्वस्वभावं

ह्यनुभूयते ॥ एतादृशं स्वस्वभावं विविनक्ति पुनः पुनः ॥ १८ ॥ विविच्य नाशं निश्चित्य पुनर्भोगं न वांछति ॥ मुमूर्षुः शायितो भूमौ विवाहं कोऽभिवांछति ॥ १९ ॥ जिन्हेति व्यवहर्तुं च भोक्ताऽहमिति पूर्ववत् ॥ छिन्ननास इव न्हीतः क्लिश्यन्नारब्धमश्नुते ॥ २० ॥ यदा स्वस्यापि भोक्तृत्वं मंतुं जिन्हेत्ययं तदा ॥ साक्षिण्यारोपयेदेतदिति कैव कथा वृथा ॥ २१ ॥ इत्यभिप्रेत्य भोक्तारमाक्षिपत्यविशंकया ॥ कस्य कामायेति ततः शरीरानुज्वरो न हि ॥ २२ ॥ स्थूलं सूक्ष्मं कारणं च शरीरं त्रिविधं स्मृतम् ॥ अवश्यं त्रिविधोऽस्त्येव तत्र तत्रोचितो

---

स्वतत्त्वमेतादृशं मृषात्मकं पुनः पुनः विविनक्ति कूटस्थाद्विविच्य जानाति ॥ १८ ॥ ततोऽपि किमित्यत आह विविच्येति स्वविनाशनिश्चये भोगेच्छाऽभावे दृष्टांतमाह मुमूर्षुरिति ॥ १९ ॥ किंच पूर्ववदहं भोक्तेति व्यवहर्तुमपि लज्जते इत्याह जिन्हेतीति तर्हि ज्ञानोत्पत्त्यनंतरं प्रारब्धावसानपर्यंतं कथं व्यवहरतीत्यत आह छिन्नेति न्हीतो लज्जितः क्लिश्यन्नेदानीमपि कर्म क्षीयते इति क्लेशमनुभवन् प्रारब्धमश्नुते प्रारब्धकर्मफलं भुंक्ते इत्यर्थः ॥ २० ॥ इदानीं ज्ञानानंतरं साक्षिणो भोक्तृत्वाभावः कैमुतिकन्यायसिद्ध इत्याह यदेति अयं चिदाभासः स्वस्यापि भोक्तृत्वं मंतुं अहं भोक्तेति ज्ञातुं जिन्हेति विलज्जते यदा तदा एतत्स्वगतं भोक्तृत्वं साक्षिण्यसंगे आरोपयेदिति वृथाऽर्थशून्या कथा कैव न काऽपीत्यर्थः ॥ २१ ॥ उक्तमर्थं श्रुत्यारूढं करोतीति कस्य कामायेति श्रुतिरित्यर्थः कूटस्थस्य चिदाभासस्य वा पारमार्थिकभोक्तृत्वाभावमभिप्रेत्य अविशंकया शंकाराहित्येन भोक्तारमाक्षिपति निराकरोति भवत्वेवं भोक्त्राक्षेपः ततः किमित्यत आह ततइति न हि ज्वरो ज्वरणं संतापः ॥ २२ ॥ तत्त्वविदः शरीरानुज्वराभावं दर्शयितुं शरीरभेदं तत्र तत्र ज्वरसद्भावं च दर्शि-

ज्वरः ॥ २३ ॥ वातपित्तश्लेष्मजन्यव्याधयः कोटिशस्त-
नौ ॥ दुर्गंधित्वकुरूपत्वदाहभंगादयस्तथा ॥ २४ ॥ काम
क्रोधादयः शांतिदांत्याद्या लिंगदेहगाः ॥ ज्वरा द्वयेऽ-
पि बाधंते प्राप्त्याऽप्राप्त्या नरं क्रमात् ॥ २५ ॥ स्वं परं
च न वेत्त्यात्मा विनष्ट इव कारणे ॥ आगामिदुःखबीजं
चेत्येतदिंद्रेण दर्शितम् ॥ २६ ॥ एते ज्वराः शरीरेषु त्रिषु
स्वाभाविका मताः ॥ वियोगे तु ज्वरैस्तानि शरीराण्येव
नासते ॥२७॥ तंतोर्वियुज्येत पटो वालेभ्यः कम्बलो यथा ॥
मृदो घटस्तथा देहो ज्वरेभ्योऽपीति दृश्यताम् ॥ २८ ॥
चिदाभासे स्वतः कोऽपि ज्वरो नास्ति यतश्चितः ॥ प्र-

---

यति स्थूलमिति ॥ २३ ॥ तत्र स्थूलशरीरे ज्वरांस्तावदाह वातेति ॥ २४ ॥ सूक्ष्मशरीरे ज्वरान् दर्शयति कामेति कामशांत्यादीनां च ज्वरत्वमुपपादयति द्वयेऽपीति द्वयेऽपि द्विविधा अपि क्रमेण प्राप्त्यप्राप्तिभ्यां नरं बाधंतेऽतो ज्वरसाम्यात् ज्वरा इत्युच्यंते इत्यर्थः ॥ २५ ॥ कारणशरीरगतो ज्वरः छांदोग्यश्रुतावुक्त इत्याह स्वंपरमिति न हि खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति वाक्येन स्वपरज्ञानशून्यत्वमज्ञानेन नष्टप्रायत्वं परेद्युरागामिदुःखबीजं च इंद्रेण शिष्येण गुरोः प्रजापतेः पुरतो निवेदितमित्यर्थः ॥ २६ ॥ एवं त्रिष्वपि देहेषु ज्वरानभिधाय तेषामपरिहार्यत्वमाह एतइति त्रिष्वपि शरीरेषु प्रतीयमाना एते ज्वराः शरीरैः सहोत्पन्नत्वेन स्वाभाविकाः संमताः स्वाभाविकत्वं व्यतिरेकमुखेन द्रढयति वियोगेत्विति यतः कारणादेभिर्ज्वरैस्तेषां शरीराणां वियोगे सति तानि शरीराणि नासते एव नैव भवंति अतः स्वाभाविका इत्यर्थः ॥ २७ ॥ तत्र दृष्टांतमाह तंतोरिति ॥ २८ ॥ इदानीं कूटस्थे ज्वराभावं कैमुतिकन्यायेन दिदर्शयिषुश्चिदाभासे तावत् ज्वराभावं दर्शयति चिदाभासइति चिदाभासे स्वतः शरीरत्रयगतज्वरसंबंधमंतरेण न

काशैकस्वभावत्वमेव दृष्टं न चेतरत् ॥ २९ ॥ चिदाभासेऽप्यसंभाव्या ज्वराः साक्षिणि का कथा ॥ एवमप्येकतां मेने चिदाभासो ह्यविद्यया ॥ ३० ॥ साक्षिसत्यत्वमध्यस्य स्वेनोपेते वपुस्त्रये ॥ तत्सर्वं वास्तवं स्वस्य स्वरूपमिति मन्यते ॥ ३१ ॥ एतस्मिन् भ्रांतिकालेऽयं शरीरेषु ज्वरत्स्वथ ॥ स्वयमेव ज्वरामीति मन्यते हि कुटुंबिवत् ॥ ३२ ॥ पुत्रदारेषु तप्यत्सु तपामीति वृथा यथा ॥ मन्यते पुरुषस्तद्वदाभासोऽप्यभिमन्यते ॥ ३३ ॥ विविच्य भ्रांतिमुज्झित्वा स्वमप्यगणयन्सदा ॥ चिंतयन्साक्षि-

---

कोऽपि ज्वरो विद्यते कुत इत्यत आह यतइति चितः प्रकाशैकस्वभावस्य विद्वदनुभवसिद्धत्वात्प्रतिबिंबस्य चिदाभासस्य तथात्वमेष्टव्यमिति भावः ॥ २९ ॥ यदर्थं चिदाभासे ज्वराभाव उपपादितस्तादिदानीं दर्शयति चिदाभासेऽपीति यदा चिदाभासेऽपि ज्वरा न संभाव्यंते तदा न साक्षिणि संभवंतीति किमु वक्तव्यं इति भावः ननु तर्हि ज्वरामीत्यनुभवस्य का गतिरित्यत आह एवमप्येकतामिति ॥ ३० ॥ एकतां मेने इति संक्षेपेणोक्तमर्थं प्रपंचयति साक्षीति चिदाभासः स्वेन सहिते शरीरत्रये साक्षिगतं सत्यत्वमध्यस्य तत्सर्वं ज्वरवत् शरीरत्रयं स्वस्य वास्तवं रूपमिति मन्यते इत्यर्थः ॥ ३१ ॥ एवं भ्रांतिज्ञाने सति किं भवतीत्याह एतस्मिन्निति अयं चिदाभासः अस्यां भ्रांतिवेलायां शरीरनिष्ठं ज्वरं स्वात्मन्यारोपयतीत्यर्थः तत्र दृष्टांतमाह कुटुंबिवदिति ॥ ३२ ॥ दृष्टांतं विशदयति पुत्रदारेष्विति ॥ ३३ ॥ एवमविवेकदशायां चिदाभासस्य भ्रांत्या ज्वरं प्रदर्श्य विवेकदशायां तदभावं दर्शयति विविच्येति चिदाभासः कूटस्थं स्वात्मानं शरीराणि च विविच्य भेदेन ज्ञात्वा तत्सर्वं वास्तवं स्वस्य रूपमिति मन्यते इत्युक्तां भ्रांतिं परित्यज्य स्वस्याभावरूपत्वज्ञानेन स्वस्मिन्नप्यादरमकुर्वन् स्वस्य निजं रूपं ज्वरादिरहितं साक्षिणं सदा चिंतयन् कस्मात् शरीरमनुसंज्वरेत् ज्वरवच्छरीर-

णं कस्माच्छरीरमनुसंज्वरेत् ॥ ३४ ॥ अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ॥ रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ ३५ ॥ मिथ्याभियोगदोषस्य प्रायश्चित्तप्रसिद्धये ॥ क्षमापयन्निवात्मानं साक्षिणं शरणं गतः ॥३६॥ आवृत्तपापनुत्त्यर्थं स्नानाद्यावर्त्यते यथा ॥ आवर्तयन्निव ध्यानं सदा साक्षिपरायणः ॥ ३७ ॥ उपस्थकुष्ठिनी वेश्या विलासेषु विलज्जते ॥ जानतोऽग्रे तथा भासः स्वप्रख्यातौ विलज्जते ॥ ३८ ॥ गृहीतो ब्राह्मणो म्लेछैः प्रायश्चित्तं चरन् पुनः ॥ म्लेछैः संकीर्यते नैव तथा भासः

---

मनुसृत्य स्वयं कस्मात् संज्वरेत् न संज्वरेदेवेत्यर्थः ॥ ३४ ॥ भ्रांतिज्ञानतत्त्वज्ञानयोः ज्वरतदभावकारणत्वं दृष्टांतप्रदर्शनेन स्पष्टयति अयथेति रज्ज्वादौ कल्पितस्य सर्पादेः ज्ञानं पलायने कारणं भवति आदिशब्देन स्थाणौ कल्पितश्चोरो गृह्यते रज्ज्वादिज्ञानेन सर्पादिबुद्धिनिवृत्तौ तदपि पलायनमनुशोचति वृथा कृतं मयेत्यनुतप्यते इत्यर्थः ॥ ३५ ॥ साक्षिणं सदा चिंतयन्नित्युक्तमर्थं दृष्टांतेन स्पष्टयति मिथ्येति यथा लोके मिथ्याऽभियोगकर्ता तद्दोषस्य प्रायश्चित्तासिद्ध्यर्थं मिथ्याभियुक्तं पुनः पुनः क्षमापयति एवमयं चिदाभासोऽपि साक्षिण्यसंगात्मनि भोक्तृत्वाद्यारोपलक्षणमिथ्याभियोगदोषप्रायश्चित्तार्थं साक्षिणमात्मानं क्षमापयन्निव शरणं गतः ॥ ३६ ॥ तत्रैव दृष्टांतांतरमाह आवृत्तेति यथा पापकारिणा पुरुषेणावृत्तपापापनुत्त्यर्थं अभ्यस्तपापापनोदाय विहितं स्नानादिकं प्रायश्चित्तमावर्त्यते पुनः पुनरनुष्ठीयते तथाऽयमपि चिरं साक्षिणि संसारित्वाद्यारोपणदोषपरिहाराय ध्यानं परिवर्तयन्निव सदा साक्षिपरायणो भवति ॥ ३७ ॥ एवं साक्षिपरत्वं दृष्टांतैरुपवर्ण्य स्वगुणप्रख्याने लज्जालुत्वं सदृष्टांतमाह उपस्थकुष्ठिनीति ॥ ३८ ॥ इदानीं शरीरत्रयाद्विवेचितस्य चिदाभासस्य पुनस्तैः सह तादात्म्यभ्रमाभावे दृष्टांतमाह गृहीतइति

शरीरकैः ॥ ३९ ॥ यौवराज्ये स्थितो राजपुत्रः साम्राज्यवांछया ॥ राजानुकारी भवति तथा साक्ष्यनुकार्ययम् ॥ ४० ॥ यो ब्रह्म वेद ब्रह्मैव भवत्येव इति श्रुतिः ॥ श्रुत्वा तदेकचित्तः सन् ब्रह्म वेत्ति न चेतरत् ॥ ४१ ॥ देवत्वकामा ह्यग्न्यादौ प्रविशंति यथा तथा ॥ साक्षित्वेनावशेषाय स्वविनाशं स वांछति ॥ ४२ ॥ यावत्स्वदेहदाहं स नरत्वं नैव मुञ्चति ॥ यावदारब्धदेहं स्यान्नाभासत्वविमोचनम् ॥ ४३ ॥ रज्जुज्ञानेऽपि कंपादिः शनैरेवो-

---

॥ ३९ ॥ न केवलं स्वापराधनिवृत्तये साक्ष्यनुसरणं किंतु महत्प्रयोजनसिद्ध्यर्थमपीति सिंहावलोकनन्यायेन सदृष्टांतमाह यौवराज्यइति राजानुकारी भवति राजेव प्रजारंजनादिगुणवान् भवतीत्यर्थः ॥ ४० ॥ ननु युवराजस्य राजानुसरणे साम्राज्यफलं दृश्यते नैवं साक्ष्यनुसरणे अतस्तदनुसरणे कथं प्रवर्तते इत्याशंक्याह य इति स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवतीति श्रुतौ ब्रह्मभावादिरूपस्य फलस्य श्रूयमाणत्वात् तत्फलवांछया साक्ष्यनुसरणे प्रवर्तनं युक्तमित्यर्थः ॥ ४१ ॥ ननु ब्रह्मज्ञानेन ब्रह्मभावप्राप्तौ चिदाभासत्वमेव विनश्येदतः स्वविनाशाय कथं प्रवर्तते इत्याशंक्याह देवत्वकामेति यथा लोके देवत्वप्राप्तिकामा मनुष्या भृग्वग्निप्रयागगंगाप्रवेशादौ प्रवर्तंते एवं साक्षिरूपेण अवस्थानलक्षणस्य अधिकफलस्य विद्यमानत्वाच्चिदाभासत्वापगमहेतौ ब्रह्मज्ञानेऽपि प्रवृत्तिर्घटते एवेत्यर्थः ॥ ४२ ॥ ननु तत्त्वज्ञानेनाभासत्वमपगच्छति चेत्कथं तत्त्वविदां जीवत्वव्यवहार इत्याशंक्य प्रारब्धकर्मक्षयपर्यंतं तदुपपत्तिं सदृष्टांतमाह यावदिति यथाऽग्न्यादौ प्रविष्टः पुरुषः दाहादिना स्वदेहनाशपर्यंतं नरत्वं नरव्यवहारयोग्यत्वं नैव मुंचति एवं प्रारब्धकर्मक्षयपर्यंतं चिदाभासत्वव्यवहारो न निवर्तते इत्यर्थः ॥ ४३ ॥ ननु भोक्तृत्वादिभ्रमोपादानस्य अज्ञानस्य निवृत्तत्वात्कथं पुन-

प्रशाम्यति ॥ पुनर्मंदांधकारे सा रज्जुः क्षिप्तोरगी भवेत् ॥ ४४ ॥ एवमारब्धभोगोऽपि शनैः शाम्यति नो हठात् ॥ भोगकाले कदाचित्तु मर्त्योऽहमिति भासते ॥ ४५ ॥ नैतावताऽपराधेन तत्त्वज्ञानं विनश्यति ॥ जीवन्मुक्तिव्रतं नेदं किन्तु वस्तुस्थितिः खलु ॥ ४६ ॥ दशमोऽपि शिरस्ताडं रुदन्बुद्ध्वा न रोदिति ॥ शिरोव्रणस्तु मासेन शनैः शाम्यति नो तदा ॥ ४७ ॥ दशमाप्तिलाभेन जातो हर्षो व्रणव्यथाम् ॥ तिरोधत्ते मुक्तिलाभस्तथा प्रारब्धदुःखिताम् ॥ ४८ ॥ व्रताभावाद्यदाऽध्यासस्तदा भूयो विविच्य-

---

भोगानुवृत्तिः कथं वा मर्त्योऽहमिति विपरीतप्रतीतिरित्याशंक्य दृष्टांतप्रदर्शनेन एतत्संभावयति रज्जुज्ञानइति ॥ ४४ ॥ दार्ष्टांतिके योजयति एवमिति ॥ ४५ ॥ ननु पुनर्मर्त्यत्वबुद्ध्युदये तेन तत्त्वज्ञानं बाध्येत इत्याशंक्याह नैतावतेति कदाचिदहं मर्त्य इत्येवंविधज्ञानोदयमात्रेण आगमप्रमाणजनिततत्त्वज्ञानं न बाध्यते कुत इत्यत आह जीवन्मुक्तीति इदं मर्त्यत्वबुद्ध्युपाकरणलक्षणं जीवन्मुक्तिव्रतं नियमेनानुष्ठेयं न भवति किंतु सम्यग्ज्ञानेन भ्रांतिज्ञाननिवृत्तिरित्ययं वस्तुस्वभावः अतः कदाचिन्मर्त्यत्वबुद्ध्युदयेऽपि पुनस्तत्त्वज्ञानांतरेण तस्या एव बाध्यत्वमिति भावः ॥ ४६ ॥ भवतु रज्जुसर्पादिस्थले विपरीतज्ञाननिवृत्तावपि तत्कार्यकंपाद्यनुवृत्तिः प्रकृतदृष्टांते दशमे दशमस्त्वमसीतिवाक्यविचारजन्यज्ञानेन भ्रमनिवृत्तौ तत्कार्यानुवृत्तिर्नोपलभ्यते इत्याशंक्याह दशमोऽपीति दशमोऽस्मीति ज्ञानोदये सति शिरस्ताडनपूर्वकं रोदनमात्रं निवर्तते ताडनजन्यव्रणस्तु अनुवर्तते एवेत्यर्थः ॥ ४७ ॥ ननु ज्ञानोत्तरकालेऽपि संसारानुवृत्तौ जीवन्मुक्तेः कुतः पुरुषार्थतेत्याशंक्य मुक्तिलाभजन्यहर्षस्य तद्दुःखाच्छादकस्य सत्त्वात्पुरुषार्थतेति दृष्टांतपूर्वकमाह दशमेति ॥ ४८ ॥ जीवन्मुक्तिव्रतं नेदमित्युक्तं तत्र व्रतत्वाभावे किमायातमित्यत आह व्रताभावादिति पुनः पुनर्विचारकरणे दृष्टांतमाह रससेवीति यथा रससे-

ताम् ॥ रससेवी दिने भुंक्ते भूयो भूयो यथा तथा ॥ ४९॥ शमयत्यौषधेनायं दशमः स्वं व्रणं यथा ॥ भोगेन शमयित्वैतत्प्रारब्धं मुच्यते तथा ॥ ५० ॥ किमिच्छन्निति वाक्योक्तः शोकमोक्ष उदीरितः ॥ आभासस्य ह्यवस्थैषा षष्ठी तृप्तिस्तु सप्तमी ॥ ५१ ॥ सांकुशा विषयैस्तृप्तिरियं तृप्तिर्निरंकुशा ॥ कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तृप्यति ॥ ५२ ॥ ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सि-

---

वी नरः एकस्मिन्नेव दिने क्षुद्बाधापरिहाराय पुनः पुनर्भुंक्ते तद्वदध्यासनिवृत्तये पुनः पुनर्विवेकः क्रियतामित्यर्थः ॥ ४९ ॥ ज्ञानेनानिवर्त्यस्य प्रारब्धकर्मफलस्य केन तर्हि निवृत्तिरित्याशंक्य ताडनजन्यव्रणस्य औषधेनेव भोगेनैव निवृत्तिरित्याह शमयतीति ॥ ५० ॥ अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे अवस्थे जीवगे ब्रूत आत्मानं चेदिति श्रुतिरित्यनेन श्लोकेन आत्मानं चेद्विजानीयादयमस्मीति पूरुषः किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदित्यस्मिन्मंत्रे परोक्षज्ञानशोकनिवृत्त्याख्ये जीवावस्थे द्वे अभिहिते इत्युक्तम् इदानीं तदभिधानसूचितां जीवस्य सप्तमीं तृप्तिलक्षणामवस्थां वृत्तानुकीर्तनपूर्वकं वक्तुमारभते किमिच्छन्निति किमिच्छन्नित्युत्तरार्धेनाभिहितो यः शोकमोक्षः स एतावता ग्रंथसंदर्भेण उदीरितोऽभिहितः एषा अज्ञानमावृत्तिस्तद्वद्विक्षेपश्च परोक्षधीः अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरंकुशेत्यनेन श्लोकेनाभिहितासु सप्तसु जीवावस्थासु षष्ठीत्याह आभासस्येति सप्तमी व्याख्यायते इति शेषः ॥ ५१ ॥ अपरोक्षज्ञानजन्यायास्तृप्तेर्निरंकुशत्वं प्रतियोगिप्रदर्शनपुरःसरं प्रतिजानीते सांकुशेति विषयलाभजन्यायास्तृप्तेर्विषयांतरकामनया कुंठितत्वात्सांकुशत्वं अस्यास्तु तदभावान्निरंकुशत्वं तदेव दर्शयति कृतमिति ॥ ५२ ॥ कृतकृत्यत्वमेवोपपादयति ऐहिकेति अस्य विदुषस्तत्त्वज्ञानोदयात्पूर्वमिह लोके इष्टप्राप्तये अनिष्टनिवृत्तये च कृषिवाणिज्यादिकं स्वर्गादिसिद्धये यागोपासनादिकं मोक्षसाधनज्ञानसिद्धये श्रवणादिकं चेति बहुविधं क-

ह्ये ॥ बहु कृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् ॥ ५३ ॥
तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ॥ अनुसंदधदेवा-
यमेवं तृप्यति नित्यशः ॥ ५४ ॥ दुःखिनोऽज्ञाः संसरं-
तु कामं पुत्राद्यपेक्षया ॥ परमानंदपूर्णोऽहं संसरामि कि-
मिच्छया ॥ ५५ ॥ अनुतिष्ठन्तु कर्माणि परलोकयियासवः॥
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ ५६ ॥
व्याचक्षतां ते शास्त्राणि वेदानध्यापयंतु वा ॥ येऽत्राधि-
कारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ ५७ ॥ निद्राभि-
क्षे स्नानशौचे नेच्छामि न करोति च ॥ द्रष्टारश्चेत्कल्पयंति
किं मे स्यादन्यकल्पनात् ॥ ५८ ॥ गुंजापुंजादि दह्येत ना-
न्यारोपितवन्हिना ॥ नान्यारोपितसंसारधर्मानेवमहं भ-

---

र्तव्यमासीद् इदानीं तु सांसारिकफलेच्छाभावाद् ब्रह्मानंदसाक्षात्कारस्य सिद्धत्वाच्च तत्सर्वं कृषियागश्रवणादिकं कृतं कृतप्रायमभूदतः परमनुष्ठेयत्वाभावादित्यर्थः ॥ ५३ ॥ एवं कृतकृत्यत्वमुपपाद्य तत्फलभूतां तृप्तिं दर्शयति तदेतादिति प्रतियोगिपुरःसरं प्रतियोग्यनुसंधानपूर्वकं यथा भवति तथा एवं वक्ष्यमाणप्रकारेण सर्वदा तृप्यति ॥ ५४ ॥ तदेवानुसंधानं प्रपंचयति दुःखिनोज्ञा इत्यादिना कृत्यकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनरित्यतः प्राक्तनेन ग्रंथेन तत्र तावदैहिकसुखार्थिभ्यो वैलक्षण्यं स्वस्य दर्शयति दुःखिन इति ॥ ५५ ॥ स्वर्गाद्यर्थं कर्मानुष्ठातृभ्यो वैलक्षण्यमाह अनुतिष्ठंत्विति ॥ ५६ ॥ ननु स्वार्थप्रवृत्त्यभावेऽपि परार्थप्रवृत्तिः किं न स्यादित्याशंक्याधिकाराभावात्साऽपि नास्तीत्याह व्याचक्षतामिति ॥५७॥ ननु स्वदेहभरणार्थं भिक्षाहरणादिकं परलोकार्थस्नानादिकं च भवता क्रियमाणमुपलभ्यते अतोऽक्रियत्वमसिद्धमित्याशंक्य तदपि स्वदृष्ट्या नैवास्ति किंत्वन्यैरेव कल्पितामित्याह निद्रेति ॥ ५८ ॥ अन्यकल्पनयाऽपि बाधोऽस्तीत्याशंक्य तदभावे दृष्टांतमाह गुंजापुंजेति ॥ ५९ ॥ ननु फलांतरेच्छाभावे कर्मानुष्ठानं मा भूत्तत्त्वसाक्षात्का-

जे ॥ ५९ ॥ शृण्वंत्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ॥ मन्यंतां संशयापन्ना न मन्येऽहमसंशयः ॥ ६० ॥ विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्ययात् ॥ देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥ ६१ ॥ अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ॥ विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ ६२ ॥ प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्तते ॥ कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ ६३ ॥ विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ॥ अबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ॥ ६४ ॥ विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ॥ विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ ६५ ॥ नि-

राय श्रवणादिकं कर्तव्यमेवेत्याशंक्य अज्ञानाद्यभावच्छ्रवणादिकर्तृत्वमपि नास्तीत्याह शृण्वंत्विति अज्ञाततत्त्वाः अज्ञातं ब्रह्मात्मैकत्वलक्षणं तत्त्वं यैस्ते तथा भूताः श्रवणं कुर्वंतु तत्त्वमित्थमन्यथा वेति संशयवंतो मननं कुर्वंतु मम तदुभयाभावान्नोभयत्र प्रवृत्तिरित्यर्थः ॥ ६० ॥ मा भूतां श्रवणमनने विपर्ययनिरासार्थं निदिध्यासनं कर्तव्यमित्याशंक्य देहादावात्मत्वबुद्धिलक्षणस्य विपर्ययस्य अभावात्तदपि नानुष्ठेयमित्याह विपर्यस्त इति ॥ ६१ ॥ ननु विपर्ययाभावे अहं मनुष्य इति व्यवहारः कथं घटते इत्याशंक्य वासनावशाद्भवतीत्याह अहमिति ॥ ६२ ॥ तर्ह्यस्य व्यवहारस्य निवृत्तिसिद्धये ध्यानं संपाद्यमित्याशंक्य प्रारब्धक्षयमंतरेणास्य निवृत्तिर्नास्तीत्याह प्रारब्धेति ॥ ६३ ॥ ननु प्रारब्धनिमित्तकस्यापि व्यवहारस्य विरलत्वाय ध्यानं कर्तव्यमेवेत्याशंक्य व्यवहारस्य अबाधकत्वदर्शनात्तान्निवृत्तये ध्यानमननुष्ठेयमित्याह विरलत्वमिति ॥ ६४ ॥ ध्यानस्य अकर्तव्यत्वेऽपि विक्षेपपरिहाराय समाधिः कर्तव्य इत्याशंक्य विक्षेपसमाधानयोर्मनोधर्मत्वान्न विक्षेपनिवारकेऽपि समाधौ ममाधिकार इत्याह विक्षेप इति ॥ ६५ ॥ ननु तथाऽपि समाधिफलमनुभवः

त्यानुभवरूपस्य को मे वाऽनुभवः पृथक् ॥ कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ ६६ ॥ व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथाऽपि वा ॥ ममाकर्तुरलेपस्य यथाऽरब्धं प्रवर्तताम् ॥ ६७ ॥ अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ॥ शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ॥ ६८ ॥ देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥ तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ ६९ ॥ विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ॥ साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ ७० ॥ एवं च कलहः कुत्र संभवेत्कर्मिणो मम ॥ विभिन्नविषयत्वेन पूर्वापरसमुद्रवत् ॥ ७१ ॥ वपुर्वाग्धीषु निर्बंधः कर्मिणो न तु साक्षिणि ॥ ज्ञानिनः साक्ष्यलेपत्वे निर्बंधो नेतरत्र हि ॥ ७२ ॥ एवं चान्योन्यवृत्तांतानभिज्ञौ बधिराविव ॥ विवदेतां बु-

---

संपादनीय इत्याशंक्य तस्य मत्स्वरूपत्वान्न संपाद्यते इत्याह नित्येति उपपादितं कृतकृत्यत्वं निगमयति कृतं कृत्यमिति ॥ ६६ ॥ एवं सर्वत्र कर्तृत्वानभ्युपगमेऽनियतवृत्तित्वं प्रसज्येतेत्याशंक्य प्रारब्धवशात् प्राप्तमनियतवृत्तित्वमंगीकरोति व्यवहार इति लौकिको भिक्षाहारादिः शास्त्रीयो जपसमाध्यादिरन्यथाऽपि वा प्रतिषिद्धहिंसादिर्वा व्यवहारः कर्तृत्वभोक्तृत्वरहितस्य मम प्रारब्धं कर्मानतिक्रम्य प्रवर्ततामित्यर्थः ॥ ६७ ॥ एवं वस्तुतत्त्वमभिधाय प्रौढवादेनाह अथवेति लोकानुग्रहकाम्यया प्राण्यनुग्रहेच्छयेत्यर्थः ॥ ६८ ॥ शास्त्रीयएव मार्गे प्रवर्तनांगीकारे तर्हि तदभिमानप्रयुक्तो विकारः स्यादित्याशंक्याह देवार्चनेत्यादिना श्लोकद्वयेन तारं प्रणवमाम्नायमस्तकं वेदांतशास्त्रं ॥ ६९ ॥ ७० ॥ फलितमाह एवं चेति ॥ ७१ ॥ विभिन्नविषयत्वमेव स्पष्टयति वपुरिति ॥ ७२ ॥ अथापि यौ ज्ञानिकर्मिणौ कलहं कुर्वाते तौ विद्वद्भिः परिहसनीयावित्या-

द्धिमंतो हसंत्येव विलोक्य तौ ॥ ७३ ॥ यं कर्मी न विजानाति साक्षिणं तस्य तत्त्ववित् ॥ ब्रह्मत्वं बुध्यतां तत्र कर्मिणः किं विहीयते ॥ ७४ ॥ देहवाग्बुद्धयस्त्यक्ता ज्ञानिनाऽनृतबुद्धितः ॥ कर्मी प्रवर्तयत्वाभिर्ज्ञानिनो हीयतेऽत्र किम् ॥ ७५ ॥ प्रवृत्तिर्नोपयुक्ता चेन्निवृत्तिः क्वोपयुज्यते ॥ बोधहेतुर्निवृत्तिश्चेद्बुभुत्सायां तथेतरा ॥ ७६ ॥ बुद्धश्चेन्न बुभुत्सेत नाप्यसौ बुध्यते पुनः ॥ अबाधादनुवर्तेत बोधो न त्वन्यसाधनात् ॥ ७७ ॥ नाविद्या नापि तत्कार्यं बोधं बाधितुमर्हति ॥ पुरैव तत्त्वबोधेन बाधिते ते उभे यतः

---

ह एवं चेति ॥ ७३ ॥ कुतः परिहास्यत्वामित्याशंक्य निर्विषयकलहकारित्वादित्याह यमिति कर्मी यं साक्षिणं कर्मानुष्ठानोपयोगिदेहवाग्बुद्ध्यतिरिक्तं प्रत्यगात्मानं न विजानाति तत्त्वविदा तस्य ब्रह्मत्वे बुद्धे कार्मिणः कर्मानुष्ठाने किं हीयते ॥ ७४ ॥ देहेति ज्ञानिना मिथ्यात्वबुद्ध्या परित्यक्ताभिर्देहवाग्बुद्धिभिः कर्मानुष्ठाने ज्ञानिनो वा किं हीयते अतो निर्विषयकलहकारिणोः परिहसनीयत्वमित्यर्थः ॥ ७५ ॥ कर्मानुष्ठानं प्रयोजनशून्यत्वान्न ज्ञानिनाऽभ्युपगम्यते इति शंकते प्रवृत्तिरिति उपभोगाभावो निवृत्तावपि समान इति परिहरति निवृत्तिरिति निवृत्तेर्बोधहेतुत्वान्नोपयोगाभाव इति शंकते बोधहेतुर्निवृत्तिश्चेदिति तर्हि प्रवृत्तिरपि बुभुत्साहेतुत्वादुपयोगवतीत्याह बुभुत्सेति ॥ ७६ ॥ ननु बुद्धस्य बुभुत्साभावात् प्रवृत्तेरनुपयोगित्वमिति पुनः शंकते बुद्धश्चेदिति तर्हि बुद्धस्य पुनर्बोधाभावात्तद्धेतुनिवृत्तिरपि बुद्धं प्रत्यनुपयोगिनीत्याह नापीति सकृज्जातस्य बोधस्य स्थिरत्वाय निवृत्तिरपेक्ष्यते इत्याशंक्य स्थिरत्वं बाधकाभावमपेक्षते न साधनांतरमित्याह अबाधादिति वाक्यप्रमाणजन्यज्ञानस्य बलवता प्रमाणेन बाधाभावादनुवृत्तिः स्यादेव अतो न साधनांतरं तदर्थमनुष्ठेयमित्यर्थः ॥ ७७ ॥ ननु प्रमाणांतरेण अबाधेऽप्यविद्यया तत्कार्येण कर्तृत्वाध्यासेन वा बाधः स्यादित्याशंक्याह नाविद्येति तत्र

॥ ७८ ॥ बाधितं दृश्यतामक्षैस्तेन बाधो न शक्यते ॥ जीवन्नाखुर्न मार्जारं हंति हन्यात्कथं मृतः ॥ ७९ ॥ अपि पाशुपतास्त्रेण विद्धश्चेन्न ममार यः ॥ निष्फलेषु विनुन्नांगो नंक्ष्यतीत्यत्र का प्रमा ॥ ८० ॥ आदावविद्यया चित्रैः स्वकार्यैर्जृंभमाणया ॥ युद्ध्वा बोधोऽजयत्सोऽद्य सुदृढो बाध्यतां कथम् ॥ ८१ ॥ तिष्ठंत्वज्ञानतत्कार्यशवा बोधेन मारिताः ॥ न भीतिर्बोधसम्राजः कीर्तिः प्रत्युत तस्य तैः ॥८२॥ य एवमतिशूरेण बोधेन न वियुज्यते ॥ प्रवृत्त्या

---

हेतुमाह पुरैवेति ॥ ७८ ॥ नन्वविद्याया बाधितत्वेऽपि तत्कार्यस्य प्रतीयमानस्य बाधितत्वासंभवात्तेन बोधस्य बाधो भवेदित्याशंक्य उपादाननिवृत्त्यैव तस्यापि बाधितत्वान्न तेनापि बाधः शंकितुं शक्यते इत्याह बाधितमिति तत्र दृष्टांतमाह जीवन्निति आखुर्मूषकः ॥ ७९ ॥ हैतदर्शनेन तत्त्वबोधस्य बाधाभावं कैमुतिकन्यायप्रदर्शनेन द्रढयितुं तदनुकूलं दृष्टांतमाह अपीति यः समर्थः पाशुपतास्त्रेण विद्धोऽपि न ममार चेत्किल स निष्फलेषु विनुन्नांगः शल्यरहितेषुणा व्यथितदेहः सन्नंक्ष्यति नाशं प्राप्स्यतीत्यत्र का प्रमा प्रमाणं नास्तीत्यर्थः ॥ ८० ॥ दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति आदाविति आदौ विद्याभ्याससमये चित्रैर्बहुविधैस्तत्कार्यैः प्रमातृत्वभोक्तृत्वकर्तृत्वादिभिः जृंभमाणया विवर्धमानया अविद्यया बोधो युद्ध्वा युद्धं कृत्वा तामजयत् स एवाभ्यासपाटवेन सुदृढोऽद्येदानीमविद्यानिवृत्तौ सत्यं निर्मलेन तत्कार्येणाध्यासेन कथं बाध्यतां न कथमपि बाध्येत इत्यर्थः ॥ ८१ ॥ उपपादितमर्थं श्रोतृबुद्ध्यारोहाय रूपकेणाह तिष्ठंत्विति ॥ ८२ ॥ भवत्वेवं प्रकृते किमायातमित्यत आह य इति यः पुमानेवमुक्तप्रकारेण अतिशूरेण अविद्यातत्कार्यघातकेन बोधेन ब्रह्मात्मैकत्वज्ञानेन न वियुज्यते न कदाऽपि वियुक्तो भवति अस्य पुंसो देहादिनिष्ठया प्रवृत्त्या वा निवृत्त्या वा किं न कि-

वा निवृत्त्या वा देहादिगतयाऽस्य किम् ॥८३॥ प्रवृत्तावाग्रहो न्याय्यो बोधहीनस्य सर्वथा ॥ स्वर्गाय वाऽपवर्गाय यतितव्यं यतो नृभिः ॥ ८४ ॥ विद्वांश्चेत्तादृशां मध्ये तिष्ठेत्तदनुरोधतः ॥ कायेन मनसा वाचा करोत्येवाखिलाः क्रियाः ॥ ८५ ॥ एष मध्ये बुभुत्सूनां यदा तिष्ठेत्तदा पुनः ॥ बोधायैषां क्रियाः सर्वा दूषयंस्त्यजतु स्वयम् ॥ ८६ ॥ अविद्वदनुसारेण वृत्तिर्बुद्धस्य युज्यते ॥ स्तनंधयानुसारेण वर्तते तत्पिता यतः ॥ ८७ ॥ अधिक्षिप्तस्ताडितो वा बालेन स्वपिता तदा ॥ न क्लिश्नाति न कुप्येत बालं प्रत्युत लालयेत् ॥ ८८ ॥ निंदितः स्तूयमानो वा विद्वानज्ञैर्न निंदति ॥ न स्तौति किंतु तेषां स्याद्यथा बोधस्तथाऽऽचरेत् ॥ ८९ ॥ येनायं नटनेनात्र बुध्यते कार्य-

मपीष्टमनिष्टं वेत्यर्थः ॥८३॥ तर्हि ज्ञानिवदज्ञानिनोऽपि प्रवृत्तावाग्रहो न युक्त इत्याशंक्याह प्रवृत्ताविति तत्रोपपत्तिमाह स्वर्गायेति ॥ ८४ ॥ विदुष आग्रहो न युक्त इत्युक्तं तर्हि कर्मिणां मध्ये वर्तमानेन तेन किं कर्तव्यमित्याह विद्वांश्चेदिति विद्वांस्तादृशां कर्मिणां मध्ये तिष्ठंश्चेत्तदनुरोधतः तेषामनुसारेण शरीरादिभिः सर्वाः क्रियाः करोत्येव न तान् कर्मिणो निवारयेदित्यर्थः ॥ ८५ ॥ अस्यैव तत्त्वबुभुत्सूनां मध्येऽवस्थितस्य कृत्यमाह एष इति एष विद्वान् बुभुत्सूनां मध्ये यदा तिष्ठेत्तदा एषां बुभुत्सूनां बोधाय तत्त्वज्ञानजननाय ताः क्रियाः दूषयन् स्वयमपि त्यजतु ॥ ८६ ॥ कुत एवं कर्तव्यमित्याह अविद्वदिति अज्ञान्यनुसारेण ज्ञानिनो वर्तनमुचितं कृपालुत्वात्तेषामनुकंपनीयत्वाच्चेति भावः एवं क्व दृष्टमित्यत आह स्तनंधयेति स्तनंधयाः स्तनपानकर्तारः शिशव इत्यर्थः ॥ ८७ ॥ पितुः स्तनंधयानुसारित्वमेव दर्शयति अधिक्षिप्त इति ॥ ८८ दार्ष्टांतिके योजयति निंदित इति विद्वान् अज्ञैर्निंदितः स्तूयमानो वा स्वयं न निंदति न स्तौति किंत्वेषामज्ञानां यथा बोध उपजायते तथाऽऽचरेत् ॥ ८९ ॥ ए-

मेव तत् ॥ अज्ञप्रबोधान्नैवान्यत्कार्यमस्त्यत्र तद्विदः ॥ ९० ॥ कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ॥ तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरंतरम् ॥ ९१ ॥ धन्योऽहं धन्योऽहं नित्यं स्वात्मानमंजसा वेद्मि ॥ धन्योऽहं धन्योऽहं ब्रह्मानंदो विभाति मे स्पष्टम् ॥ ९२ ॥ धन्योऽहं धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ॥ धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ ९३ ॥ ध-

---

वमाचरणे निमित्तमाह येनेति अयमज्ञानी अत्रास्मिन् लोके विदुषो येन यादृशेन नटनेनाचरणेन बुध्यते तत्त्वमवगच्छति तदाचरणं तेन कर्तव्यमेव तर्हि तद्वदेव कार्यांतरमपि प्रसज्येतेत्यत आह अज्ञेति यतस्तद्विदस्तत्त्वविदः अत्र लोकेऽज्ञप्रबोधादन्यत्कर्तव्यं नैवास्त्यतस्तदनुसरणेन तत्त्वबोधनं कर्तव्यमित्यर्थः ॥ ९० ॥ वृत्तवर्त्तिष्यमाणयोस्तात्पर्यमाह कृतकृत्येति असौ विद्वान् पूर्वोक्तप्रकारेण कृतकृत्यतया कृतं कृत्यजातं येनासौ कृतकृत्यस्तस्य भावस्तत्ता तया तृप्तः सन् वक्ष्यमाणप्रकारेण प्राप्तप्राप्यतया प्राप्तं प्राप्यं येन सः प्राप्तप्राप्यस्तस्य भावस्तत्ता तया तृप्यन् तृप्तो भवन् स्वमनसा निरंतरमेवं मन्यते ॥ ९१ किं मन्यते इत्यत आह धन्योऽहंधन्योऽहमित्यादिना धन्यः कृतार्थः आदरार्थे वीप्सा नित्यमनवरतं स्वात्मानं स्वस्य निजं रूपं देशाद्यनवच्छिन्नं प्रत्यगात्मानमंजसा साक्षाद्यतो वेद्मि जानाम्यतो धन्यः एवमात्मज्ञानलाभनिमित्तां तुष्टिमभिधाय तत्फललाभनिमित्तां तां दर्शयति धन्य इति ब्रह्मानंदः ब्रह्मभूतानंदः मे स्पष्टं विभाति स्पष्टं यथा भवति तथा स्फुरतीत्यर्थः ॥ ९२ ॥ एवमिष्टप्राप्तौ तुष्टिमभिधायानिष्टनिवृत्त्याऽपि तुष्यतीत्याह धन्योऽहमिति अद्य इदानीं दुःखं दुःखस्वरूपं संसारं न वीक्षे न पश्याम्यतः कृतार्थ इत्यर्थः दुःखाप्रतीतौ कारणमाह धन्योऽहमिति अनेककर्मवासनाजालमज्ञानं क्वापि पलायितं नष्टमित्यर्थः ॥ ९३ ॥ अज्ञाननिवृत्तिफलं कृतकृत्यत्वं प्राप्तप्राप्यत्वं च दर्शयति धन्य इति

न्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ॥ धन्योऽहं धन्योहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥१४॥ धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ॥ धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ १५ ॥ अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ॥ अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ १६ ॥ अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥ अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ १७ ॥ तृप्तिदीपमिमं नित्यं येऽनुसंदधते बुधाः ॥ ब्रह्मानंदे निमज्जंतस्ते तृप्यंति निरंतरम् ॥ १८ ॥ इति तृप्तिदीपः ॐ ॐ ॐ ॐ ॐ ॐ ॐ

---

॥ १४ ॥ इदानीं कृतकृत्यत्वमित्यादिना जातायास्तृप्तेर्निरतिशयत्वमाह धन्य इति इतःपरं वक्तव्यादर्शनात्तुष्टिरेव परिस्फुरतीति दर्शयति धन्य इति ॥ १५ ॥ अस्य सर्वस्य कारणभूतपुण्यपुंजपरिपाकमनुस्मृत्य तुष्यतीत्याह अहो पुण्यमिति एवंविधपुण्यसंपादकमात्मानं अनुस्मृत्य तुष्यति अस्येति ॥ १६ ॥ इदानीं सम्यग्ज्ञानसाधनं शास्त्रं तदुपदेष्टारमाचार्यमनुस्मृत्य तुष्यति अहो शास्त्रमिति पुनश्च शास्त्रजन्यं ज्ञानं तत्सुखं चानुस्मृत्य संतुष्यति अहो ज्ञानमिति ॥ १७ ॥ ग्रंथाभ्यासफलमाह तृप्तिदीपमिति ॥ २९८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता पंचदशीयतृप्तिदीपव्याख्या ॥ ॐ ॐ ॐ ॐ ॐ ॐ

॥ इति तृप्तिदीपः ॥

---

## कूटस्थदीपः प्रकरणं ८.

श्रीगणेशाय नमः ॥ अथ कूटस्थदीपः ॥ खादित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत् ॥ कूटस्थभासितो देहो धीस्थजीवेन भास्यते ॥ १ ॥ अनेकदर्पणादित्यदीप्तीनां बहुसंधिषु ॥ इतरा व्यज्यते तासामभावेऽपि प्रकाशते ॥ २ ॥ चिदाभासविशिष्टानां तथाऽनेकधियामसौ ॥ संधिं धियाम-

---

श्रीगणेशाय नमः ॥ अथ कूटस्थदीपव्याख्या ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ कुर्वे कुटस्थदीपस्य व्याख्यां तात्पर्यदीपिकाम् ॥ १ ॥ अत्र मुमुक्षोर्मोक्षसाधनस्य ब्रह्मात्मैकत्वज्ञानस्य त्वंपदार्थशोधनपूर्वकत्वात् त्वंपदार्थशोधनपरं कूटस्थदीपाख्यं ग्रंथमारभमाण आचार्योऽस्य ग्रंथस्य वेदांतप्रकरणत्वेन तदीयैरेव विषयादिभिस्तद्वत्तासिद्धिमभिप्रेत्य त्वंपदलक्ष्यवाच्यौ कूटस्थजीवौ सदृष्टांतं भेदेन निर्दिशति खादित्येति खादित्यदीपिते खे आदित्यः खादित्यः प्रसिद्धः सूर्य इत्यर्थः तेन च तत्संबंध्यालोको लक्ष्यते तेन दीपिते प्रकाशिते कुड्ये दर्पणादित्यदीप्तिवद् दर्पणेषु निपत्य पर्यावृतैश्च कुड्यसंबद्धैरादित्यरश्मिभिस्तत्प्रकाशनमिव कूटस्थभासितः कूटस्थेनाविकारिचैतन्येन भासितः प्रकाशितो देहो धीस्थजीवेन बुद्धिस्थचिदाभासेन भास्यते प्रकाश्यते अनेन सामान्यता विशेषतश्च कुड्यावभासकादित्यप्रकाशद्वयमिव देहावभासकचैतन्यद्वयमस्तीति प्रतिज्ञातं भवति ॥ १ ॥ ननु तत्र दर्पणादित्यदीप्तिव्यतिरेकेण खादित्यदीप्तिर्नोपलभ्यते इत्याशंक्य ताभ्यस्तां विभज्य दर्शयति अनेकेति या अनेका बहुदर्पणजन्याः कुड्ये तत्र तत्र मंडलाकारविशेषप्रभा दृश्यंते तासां संधौ मध्ये इतरा सामान्यप्रकाशरूपा खादित्यप्रभा व्यज्यते अभिव्यक्तोपलभ्यते तासां दर्पणजन्यप्रभाणामभावे दर्पणापगमादिना सत्त्वे च स्वयं सर्वत्र प्रकाशते ॥ २ ॥ दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति चिदाभासे-

भावं च भासयन् प्रविविच्यताम् ॥ ३ ॥ घटैकाकारधी-
स्था चिद्घटमेवावभासयेत् ॥ घटस्य ज्ञातता ब्रह्मचैतन्ये-
नावभासते ॥ ४ ॥ अज्ञातत्वेन ज्ञातोऽयं घटो बुद्ध्युद-
यात्पुरा ॥ ब्रह्मणैवोपरिष्टात्तु ज्ञातत्वेनेत्यसौ भिदा ॥ ५ ॥
चिदाभासांतधीवृत्तिर्ज्ञानं लोहांतकुंतवत् ॥ जाड्यमज्ञान-
मेताभ्यां व्याप्तः कुंभो द्विधोच्यते ॥ ६ ॥ अज्ञातो ब्र-

---

ति तथा तेनैव प्रकारेण चिदाभासविशिष्टानां चित्प्रतिबिंबयुक्तानां अने-
कधियामनेकासां बुद्धिवृत्तीनां घटज्ञानादिशब्दवाच्यानां संधिमंतरालं जा-
ग्रदादौ धियां तासामेव बुद्धिवृत्तीनामभावं च सुषुप्त्यादौ भासयन् प्र-
काशयन् असौ कूटस्थः प्रविविच्यतां ताभ्यो भेदेन ज्ञायतामित्यर्थः ॥३॥
इदानीं देहांतः कूटस्थाचिदाभासयोः भेदप्रदर्शनाय देहाद्बहिरपि चिदा-
भासब्रह्मणी विभज्य दर्शयति घटेति घटैकाकारधीस्था चिद् घटस्यैक-
स्याकार इवाकारो यस्याः सा घटैकाकारा तथाविधायां बुद्धौ वर्तमानः
चिदाभासः घटमेवावभासयेत् तस्य घटस्य ज्ञातताख्यो धर्मो घटो ज्ञात
इतिव्यवहारहेतुर्यः स घटकल्पनाधिष्ठानेन ब्रह्मचैतन्येन साधनभूतेनावभासते
प्रकाशते इत्यर्थः ॥ ४ ॥ ननु ज्ञाततावभासकचैतन्येनैव घटप्रतीतिसंभवाद्
बुद्धिः किमर्थेत्याशंक्य घटस्य ज्ञाततादिभेदसिध्यर्थेत्याह अज्ञातत्वेनेति बुध्यु-
दयात् पुरा अयं घटो ब्रह्मणैवाज्ञातत्वेन प्रकाशितो बुध्युत्पत्तौ सत्यां
ज्ञातत्वेन ब्रह्मणैव प्रकाश्यते इति इयानेव भेदः नान्य इत्यर्थः ॥ ५ ॥
नन्वेकस्यैव घटस्य ज्ञातत्वाज्ञातत्वलक्षणं द्वैरूप्यं कथं संभवतीत्याशंक्य
तदवबोधनाय ज्ञातताऽज्ञाततानिमितयोर्ज्ञानाज्ञानयोः स्वरूपं तावद्दर्शयति
चिदाभासेति चिदाभासांतधीवृत्तिः चिदाभासश्चित्प्रतिबिंबः सोऽते पुरो-
भागे यस्याः सा धीवृत्तिर्ज्ञानमित्युच्यते बोधेद्धा बुद्धिरित्याचार्यैरभिधानात्
तत्र दृष्टांतो लोहांतकुंतवदिति जाड्यं स्वतः स्फूर्तिरहितत्वमज्ञानमित्यु-
च्यते एताभ्यां पर्यायेण व्याप्तः सर्वतः संबद्धः कुंभो द्विधोच्यते ज्ञात इति
अज्ञात इति चोच्यते इत्यर्थः ॥ ६ ॥ नन्वज्ञातस्य कुंभस्य अज्ञानव्या-

ह्मणा भास्यो ज्ञातः कुंभस्तथा न किम् ॥ ज्ञातत्वजननेनैव चिदाभासपरिक्षयः ॥७॥ आभासहीनया बुद्ध्या ज्ञातत्वं नैव जन्यते ॥ तादृग्बुद्धेर्विशेषः को मृदादेः स्याद्विकारिणः ॥८॥ ज्ञात इत्युच्यते कुंभो मृदा लिप्तो न कुत्र चित् ॥ धीमात्रव्याप्तकुंभस्य ज्ञातत्वं नेष्यते तथा ॥ ९ ॥ ज्ञातत्वं नाम कुंभेऽतश्चिदाभासफलोदयः ॥ न फलं ब्रह्मचैतन्यं मानात्प्रागपि सत्त्वतः ॥ १० ॥ परागर्थप्रमेयेषु या फल-

---

प्तत्वाद्भवतु ब्रह्मावभास्यत्वं ज्ञानव्याप्तस्य तु ज्ञातस्य कुंभस्य कुतो ब्रह्मचैतन्यावभास्यत्वमित्याशंक्य अज्ञानस्य अज्ञातताजननमात्रेणेव ज्ञानस्यापि ज्ञातताजननमात्रेणोपक्षीणत्वादज्ञातकुंभवज् ज्ञातस्यापि ब्रह्मावभास्यत्वं भवतीत्याह अज्ञातइति यथा अज्ञातकुंभो ब्रह्मणा भास्यस्तथा ज्ञातकुंभो न किं ब्रह्मावभास्यो भवति किंतु भवत्येवेत्यर्थः कुत इत्यत आह ज्ञातत्वेति ॥ ७ ॥ नन्वज्ञातताजननाय अज्ञानमिव ज्ञातताजननायापि बुद्धिरेवालं किमनेन चिदाभासेनेत्याशंक्य चिदाभासरहिताया बुद्धेर्घटादिवदप्रकाशरूपत्वेन ज्ञातताजननं न संभवतीत्याह आभासेति ॥ ८ ॥ चिदाभासरहितबुद्धिव्याप्तस्य घटस्य ज्ञातत्वाभावं दृष्टांतप्रदर्शनेन स्पष्टयति ज्ञात इति लोके कुत्रचिदपि घटः मृदा शुक्लकृष्णरूपया लिप्तो लेपनं प्राप्तो ज्ञात इति नोच्यते यथा तथा चिदाभासरहितबुद्धिव्याप्तस्यापि कुंभस्य ज्ञातत्वं नाभ्युपगम्यत इति भावः ॥ ९ ॥ फलितमाह ज्ञातत्वमिति यतः केवलायाः बुद्धेर्ज्ञातत्वजननासमर्थत्वमतः कुंभे चिदाभासलक्षणस्य फलस्योत्पत्तिरेव ज्ञातत्वं नाम प्रसिद्धमित्यर्थः नन्वथापि चिदाभासो न कल्पनीयः ब्रह्मचैतन्यस्यैव फलस्य सद्भावादित्याशंक्याह न फलमिति ब्रह्मचैतन्यं फलं घटादिस्फुरणं न भवतीति कुत इत्यत आह मानादिति मानात्प्रागपि प्रमाणप्रवृत्तेः पूर्वमपि विद्यमानत्वात्फलस्य तु तदुत्तरकालीनत्वनियमादिति भावः ॥ १० ॥ नन्विदं परागर्थप्रमेयेष्वित्यादिसुरेश्वरवार्तिकविरुद्धमित्याशंक्य तद्विवक्षान-

त्वेन संमता ॥ संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः ॥ ११ ॥ इति वार्तिककारेण चित्सादृश्यं विवक्षितम् ॥ ब्रह्मचित्फलयोर्भेदः सहस्र्यां विश्रुतो यतः ॥ १२ ॥ आभास उदितस्तस्माज्ज्ञातत्वं जनयेद्घटे॥ तत्पुनर्ब्रह्मणाभास्यमज्ञातत्ववदेव हि ॥ १३ ॥ धीवृत्त्याभासकुंभानां समूहो भास्यते चिता ॥ कुंभमात्रफलत्वात्स एक आभासतः स्फुरेत् ॥ १४ ॥ चैतन्यं द्विगुणं कुंभे ज्ञातत्वेन स्फु-

---

मिह्नस्य इदं चोद्यमिति परिहरति पारागर्थेति अस्य चायमर्थः परागर्था बाह्या घटादयः पदार्थास्तेषु प्रमेयेषु प्रमाणविषयेषु सत्सु या प्रमाणफलत्वेनाभ्युपेता संविदस्ति सैवेहास्मिन्वेदांतशास्त्रे वेदांतोक्तिप्रमाणतो वेदांतवाक्यलक्षणप्रमाणेन मेयोऽर्थो ज्ञातव्योऽर्थः ॥ ११ ॥ इत्यनेन वार्तिकेन ब्रह्मचैतन्यसदृशश्चिदाभासः प्रमाणफलत्वेन विवक्षितो न ब्रह्मचैतन्यमिति भावः वार्तिककाराणामीदृशी विवक्षेति कुतोऽवगम्यते इत्याशंक्य तद्गुरुभिः श्रीमदाचार्यैरुपदेशसहस्र्यां ब्रह्मचैतन्यचिदाभासयोर्भेदस्य प्रतिपादितत्वादित्याह ब्रह्मचिदिति ब्रह्मचिच्च फलं च ब्रह्मचित्फले तयोरिति विग्रहः ॥ १२ ॥ एवं च सति प्रकृते किमायातामित्यत आह आभास इति यस्माद् ब्रह्मचित्फलयोर्भेदः प्रसिद्धः तस्माद् घटे उदित उत्पन्न आभासश्चिदाभासस्तत्र घटे ज्ञातत्वं पुनरज्ञातत्ववद् ब्रह्मणैवाभास्यं भवति हि प्रसिद्धमित्यर्थः ॥ १३ ॥ एवं ब्रह्मचिदाभासयोर्भेदमुपपादितं विषयभेदप्रदर्शनेन स्पष्टयति धीवृत्त्येति चिता ब्रह्मचैतन्येनेत्यर्थः चिदाभासस्य कुंभमात्रनिष्ठफलरूपत्वात्तेनाभासेन स घट एक एव स्फुरेद् भासेतेत्यर्थः ॥ १४ ॥ कुंभस्य चिदाभासब्रह्मोभयभास्यत्वे लिंगमाह चैतन्यमिति अतो घटस्य ब्रह्मचिदाभासोभयभास्यत्वात्कुंभे ज्ञातत्वेन द्विगुणं चैतन्यं भाति इदमेव घटज्ञाततावभासकं चैतन्यं तार्किकैर्नामांतरेण व्यवह्रियते इत्याह अन्य इति यथोदितं यथोक्तमेतदेव ब्रह्मचैतन्यं अन्ये तार्किका अनुव्यवसायाख्यं ज्ञानांतरं प्राहुरिति योजना

रत्यतः ॥ अन्येऽनुव्यवसायाख्यमाहुरेतद्यथोदितम् ॥१५॥ घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ॥ विज्ञातो घट इत्युक्तिर्ब्रह्मानुग्रहतो भवेत् ॥ १६ ॥ आभासब्रह्मणी देहाद्बहिर्यद्वद्विवेचिते ॥ तद्वदाभासकूटस्थौ विविच्येतां वपुष्यपि ॥ १७ ॥ अहंवृत्तौ चिदाभासः कामक्रोधादिकासु च ॥ संव्याप्य वर्तते तप्ते लोहे वन्हिर्यथा तथा ॥ १८ ॥ स्वमात्रं भासयेत्तप्तं लोहं नान्यत्कदाचन ॥ एवमाभाससहिता वृत्तयः स्वस्वभासिकाः ॥ १९ ॥ क्रमाद्विच्छिद्य विच्छिद्य जायंते वृत्तयोऽखिलाः ॥ सर्वा अपि विलीयंते सुप्तिमूर्च्छासमाधिषु ॥ २० ॥ संधयोऽखिलवृत्तीनामभावाश्चावभासिताः ॥ निर्विकारेण येनासौ कूटस्थ इति चोच्यते ॥ २१ ॥ घटे द्विगुणचैतन्यं यथा बाह्ये तथांऽतरे ॥

॥ १५ ॥ अयं घट इति व्यवहारभेदादपि चिदाभासब्रह्मणोर्भेदोऽवगंतव्य इत्याह घटोऽयमिति ॥ १६ ॥ देहाद्बहिश्चिदाभासब्रह्मणी विविच्येते यथा तथा देहांतश्चिदाभासकूटस्थौ विवेचनीयावित्याह आभासेति ॥ १७ ॥ ननु देहाद्बहिश्चिदाभासव्याप्यघटाकारवृत्तिवदांतरविषयगोचरवृत्त्यभावात्कथं तद्व्यापकश्चिदाभासोऽभ्युपगम्यते इत्याशंक्य विषयगोचरवृत्त्यभावेऽप्यहमादिवृत्तिसद्भावात्तद्व्यापकश्चिदाभासोऽभ्युपगंतुं शक्यते इति सदृष्टांतमाह अहमिति ॥ १८ ॥ अहमादिवृत्तीनामेव चिदाभासभास्यत्वं दृष्टांतप्रपंचनेन स्पष्टयति स्वमात्रमिति ॥ १९ ॥ एवं चिदाभासं व्युत्पाद्य कूटस्थस्वरूपं व्युत्पादयितुं तदुपयोगिनं वृत्त्यभावावसरं दर्शयति क्रमादिति ॥ २० ॥ भवत्वेवं सामाध्यादौ वृत्तिविलयोऽनेन कथंकूटस्थोऽवगम्यते इत्याशंक्य वृत्त्यभावसाक्षित्वेनासाववगम्यते इत्याह संधयइति वृत्तिसंधयो वृत्त्यभावाश्च येन चैतन्येनावभास्यंते स कूटस्थोऽवगंतव्य इत्यर्थः ॥ २१ ॥ एवं च सति किं फलितमित्यत आह घट इति बाह्ये घटे यथा घटमात्रावभासकश्चिदाभासः घटस्य ज्ञाततावभासकं

वृत्तिष्वपि ततस्तत्र वैशद्यं संधितोऽधिकम् ॥ २२ ॥ ज्ञातताज्ञातते न स्तो घटवद्वृत्तिषु क्व चित् ॥ स्वस्य स्वेनागृहीतत्वात् ताभिश्चाज्ञाननाशनात् ॥ २३ ॥ द्विगुणीकृतचैतन्ये जन्मनाशानुभूतितः ॥ अकूटस्थं तदन्यत्तु कूटस्थमविकारतः ॥ २४ ॥ अंतःकरणतद्वृत्तिसाक्षीत्यादावनेकधा ॥ कूटस्थ एव सर्वत्र पूर्वाचार्यैर्विनिश्चितः ॥ २५ ॥ आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ॥ गम्यंते शास्त्र-

---

ब्रह्मचैतन्यं चेति चैतन्यद्वैगुण्यं तथांतरेऽहंकारादिवृत्तिष्वपि कूटस्थचैतन्यं वृत्त्यवभासकश्चिदाभासश्चेति द्विगुणचैतन्यमस्ति तत्रोपपत्तिमाह तत इति यतो द्विगुणचैतन्यमस्ति ततः संधितः संधिभ्यस्तत्र वृत्तिषु वैशद्यमधिकं दृश्यत इति शेषः ॥ २२ ॥ नन्वत्रापि घटादिष्विव ज्ञातताज्ञातताावभासकत्वेन कूटस्थः किं नेष्यत इत्याशंक्य तत्र ज्ञाऽततााद्यभावादेवेत्याह ज्ञातततेति तत्रोपपत्तिमाह स्वस्येति ज्ञानाज्ञानव्याप्तिभ्यां ज्ञातताज्ञातते भवतः वृत्तीनां तु स्वप्रकाशत्वेन ज्ञानव्याप्तिर्नास्ति ताभिर्वृत्तिभिः स्वोत्पत्तिमात्रेण स्वगोचराज्ञानस्य निवर्तितत्वादज्ञानस्य व्याप्तिरपि नास्तीति भावः ॥ २३ ॥ ननु कूटस्थचिदाभासयोरुभयोरपि चित्त्वे समाने एकस्य कूटस्थत्वमपरस्य अकूटस्थत्वमित्येतत्कुत इत्याशंक्य चिदाभासनिष्ठयोर्जन्मनाशयोरनुभूयमानत्वादस्य अकूटस्थत्वमपरस्य विकारित्वे प्रमाणाभावात्कूटस्थत्वमित्याह द्विगुणीति ॥ २४ ॥ चिदाभासव्यतिरिक्तकूटस्थाभ्युपगमः स्वकपोलकल्पित इत्याशंक्याचार्यैः कूटस्थस्योपपादितत्वान्नैवमित्याह अंतःकरणेति अंतःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः आनंदरूपः सत्यः सन् किं नात्मानं प्रपद्यसे इत्यादावित्यर्थः ॥ २५ ॥ कूटस्थातिरिक्तश्चिदाभासोऽपि तैर्वर्णित इत्याह आत्माभासेति आत्मा चाभासश्चाश्रयश्च आत्माभासाश्रयाश्चेति द्वंद्वः समासः मुखाभासाश्रया इत्यत्रापि तथा मुखं प्रसिद्धमाभासो मुखप्रतिबिंबः आश्रयो दर्पणादिश्चेति त्रयं यथा प्रत्यक्षेणावगम्यते एवमात्मा कूटस्थ आ-

युक्तिभ्यामित्याभासश्च वर्णितः ॥ २६ ॥ बुद्ध्यवच्छिन्नकूटस्थो लोकांतरगमागमौ ॥ कर्तुं शक्तो घटाकाश इवाभासेन किं वद ॥ २७ ॥ शृण्वसंगः परिच्छेदमात्राज्जीवो भवेन्न हि ॥ अन्यथा घटकुड्याद्यैरवच्छिन्नस्य जीवता ॥ २८ ॥ न कुड्यसदृशी बुद्धिः स्वच्छत्वादिति चेत्तथा ॥ अस्तु नाम परिच्छेदे किं स्वाच्छ्येन भवेत्तव ॥ २९ ॥ प्रस्थेन दारुजन्येन कांस्यजन्येन वा न हि ॥ विक्रेतुस्तंडुलादीनां परिमाणं विशिष्यते ॥ ३० ॥ परिमाणाविशेषेऽपि प्रतिबिंबो विशिष्यते ॥ कांस्ये यदि तदा बुद्धावप्याभासो भवेद्बलात् ॥३१॥ ईषद्भासनमाभासः प्रतिबिंबस्तथाविधः

---

भासश्चिदाभासः आश्रयोंऽतःकरणादिरिति त्रयोऽपि शास्त्रयुक्तिभ्यामवगम्यंते इत्यर्थः अत्र चाभासशब्देन कूटस्थातिरिक्तश्चिदाभासो वर्णित इति भावः मनसः साक्षी बुद्धेः साक्षीति बुद्धिसाक्षिणः कूटस्थस्य प्रतिपादकं शास्त्रं रूपं रूपं प्रतिरूपो बभूवेति चिदाभासप्रतिपादकं विकारित्वाविकारित्वादिरूपा युक्तिः पूर्वमेवोक्तेति भावः ॥ २६ ॥ तत्र चिदाभासमाक्षिपति बुद्धीति स्वस्मिन् कल्प्यमानया बुद्ध्याऽवच्छिन्नकूटस्थ एव घटद्वारा घटाकाश इव बुद्धिद्वारा लोकांतरे गमनागमने कर्तुं शक्नोति अतश्चिदाभासकल्पनायां गौरवमिति भावः ॥ २७ ॥ असंगस्य कूटस्थस्य बुद्ध्यवच्छेदमात्रेण जीवत्वं न घटते अन्यथाऽतिप्रसंगादिति परिहरति शृण्वसंग इति ॥ २८ ॥ बुद्धिकुड्ययोः स्वाच्छ्यास्वाच्छ्याभ्यां वैषम्यं शंकते नेति उक्तं स्वच्छत्वं परिच्छेदप्रयोजकं न भवतीत्याह तथास्त्विति ॥ २९ ॥ उक्तमर्थं दृष्टांतेन स्पष्टयति प्रस्थेनेति दारुकांस्यजन्ययोः प्रस्थयोः स्थिते स्वच्छत्वास्वच्छत्वे तंडुलपरिमाणे न्यूनाधिकभावहेतू न भवत इत्यर्थः ॥ ३० ॥ कांस्यप्रस्थे तंडुलपरिमाणाधिक्याभावेऽपि प्रतिबिंबलक्षणमाधिक्यमस्तीत्याशंक्य तर्हि बुद्धावपि चिदाभासो भवतैवांगीकृतः स्यादित्याह परिमाणाविशेषइति ॥ ३१ ॥

बिंबलक्षणहीनः सन् बिंबवद्भासते स हि ॥ ३२ ॥ ससंगत्वविकाराभ्यां बिंबलक्षणहीनता ॥ स्फूर्तिरूपत्वमेतस्य बिंबवद्भासनं विदुः ॥ ३३ ॥ न हि धीभावभावित्वादाभासोऽस्ति धियः पृथक् ॥ इति चेदल्पमेवोक्तं धीरप्येवं स्वदेहतः ॥ ३४ ॥ देहे मृतेऽपि बुद्धिश्चेच्छास्त्रादस्ति तथा सति ॥ बुद्धेरन्यश्चिदाभासः प्रवेशश्रुतिषु श्रुतः ॥ ३५ ॥ धीयुक्तस्य प्रवेशश्चेन्नैतरेये धियः पृथक् ॥ आत्मा प्रवेशं संकल्प्य प्रविष्ट इति गीयते ॥ ३६ ॥ कथं न्विदं साक्ष-

---

प्रतिबिंबांगीकारे चिदाभासः कथमंगीकृतः स्यादित्याशंक्य प्रतिबिंबाभासशब्दाभ्यामभिधेयस्य अर्थस्य ऐक्यादित्याह ईषदिति प्रतिबिंबस्याऽभासत्वं कथमित्याशंक्य आभासलक्षणयोगादित्याह बिंबलक्षणेति हि यस्मात् कारणात् प्रतिबिंबो बिंबलक्षणरहितो बिंबवदवभासते अतो बिंबाभास इति भावः ॥ ३२ ॥ आभासलक्षणयोगित्वमेव स्पष्टयति ससंगत्वेति एतस्य चिदाभासस्य ससंगत्वविकारित्वाभ्यां बिंबभूतासंगाविकारिचैतन्यलक्षणहीनत्वं स्फुरणरूपत्वं बिंबवदवभासनमित्यर्थः हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासा इति वदित्यर्थः ॥ ३३ ॥ इत्थं चिदाभासस्य अप्रयोजकतां निराकृत्य इदानीं तस्य बुद्धेः पृथक् सत्त्वं साधयितुं पूर्वपक्षमाह नहीति यथा मृदि सत्यामेव भवन् घटो न मृदो भिद्यते तद्वदिति भावः नन्वेवं तर्हि देहातिरिक्ता धीरपि न सिध्येदिति प्रतिबंद्या परिहरति अल्पमिति ॥ ३४ ॥ प्रतिबंदीमोचनं शंकते देहे मृतइति देहव्यतिरिक्ताया बुद्धेः सविज्ञानो भवतीत्यादिश्रुतिसिद्धत्वान्नासत्त्वमिति भावः ननु श्रुतिबलाद्देहातिरिक्ता बुद्धिरभ्युपगम्यते चेत्तर्हि प्रवेशश्रुतिबलाद्बुद्ध्यतिरिक्तश्चिदाभासोऽप्यभ्युपेय इत्याह तथासतीति ॥३५॥ ननु बुद्ध्युपाधिकस्यैव प्रवेशो युज्यते नेतरस्येति शंकते धीयुक्तस्येति ऐतरेयश्रुतौ बुद्ध्यतिरिक्तस्यैव प्रवेशश्रवणान्नैवमिति परिहरति ऐतरेयइति ॥३६॥ तां श्रुतिमर्थतः पठति कथंन्विति अयं परमात्मा साक्षदेहमक्षाणि च

देहं मद्दते स्यादितीरणात् ॥ विदार्य मूर्धसीमानं प्रविष्टः संसरत्ययम् ॥ ३७ ॥ कथं प्रविष्टोऽसंगश्चेत्सृष्टिर्वाऽस्य कथं वद ॥ मायिकत्वं तयोस्तुल्यं विनाशश्च समस्तयोः ॥ ३८ ॥ समुत्थायैष भूतेभ्यस्तान्येवानुविनश्यति ॥ विस्पष्टमिति मैत्रेय्यै याज्ञवल्क्य उवाच हि ॥ ३९ ॥ अविनाश्ययमात्मेति कूटस्थः प्रविवेचितः॥मात्रासंसर्ग इत्येवमसंगत्वस्य कीर्तनात् ॥ ४० ॥ जीवापेतं वाव किल शरीरं

---

देहाश्चाक्षदेहास्तैः सह वर्तत इति साक्षदेहमिदं जडजातं मद्दते चेतनं मां विहाय कथंनु स्यान्न कथमपि निर्वहेदिति विचार्य मूर्द्धसीमानं कपालत्रयमध्यदेशं विदार्य स्वसन्निधिमात्रेण भित्त्वा प्रविष्टः सन् संसरति जाग्रदादिकमनुभवतीत्यर्थः ॥ ३७ ॥ नन्वसंगस्यात्मनः प्रवेशोऽप्ययुक्त इति शंकते कथं प्रविष्ट इति इदं चोद्यं सृष्टावपि समानमित्याह सृष्टिरिति सृष्टिकर्तुर्मायिकत्वान्न दोष इत्याशंक्य अयं परिहारः प्रवृत्त्यपि समान इत्याह मायिकत्वमिति अनयोर्मायिकत्वे हेतुः समान इत्याह विनाश इति ॥ ३८ ॥ प्रधानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति औपाधिकरूपस्य विनाशित्वप्रतिपादिकां श्रुतिं दर्शयति समुत्थायेति एष प्रज्ञानघन आत्मा एतेभ्यो देहेंद्रियादिरूपेभ्यः पंचभूतकार्येभ्यो निमित्तभूतेभ्य उपाधिभ्यः समुत्थाय जीवत्वाभिमानं प्राप्य तान्येव देहादीनि विनश्यंत्यनुविनश्यति तेषु विनश्यत्सु तत्कृतं जीवत्वाभिमानं जहाति एवं प्रकारेण सोपाधिकरूपस्य विनाशित्वं याज्ञवल्क्यो मैत्रेय्यै उवाच उक्तवानित्यर्थः ॥ ३९ ॥ अविनाशी वारेऽयमात्मानुच्छित्तिधर्मेति श्रुत्या कूटस्थस्ततो विभिन्नः प्रदर्शित इत्याह अविनाशीति मात्रासंसर्गस्त्वस्य भवतीति श्रुत्याऽविनाशित्वे हेतुमसंगत्वं चोक्तवानित्याह मात्रेति मीयंते इति मात्रा देहादयस्ताभिरस्यात्मनो असंसर्गो भवतीत्यर्थः ॥ ४० ॥ ननु जीवापेतं वाव किल इदं म्रियते न जीवो म्रियते इति श्रुत्या अस्य औपाधिकस्याप्यविनाशित्वं प्रतिपाद्यते इत्या-

म्रियते न सः ॥ इत्यत्र न विमोक्षोर्थः ।किंतु लोकांतरे गतिः ॥ ४१ ॥ नाहं ब्रह्मेति बुध्येत स विनाशीति चेन्न तत् ॥ सामानाधिकरण्यस्य बाधायामपि संभवात् ॥ ४२ ॥ योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ॥ ब्रह्मास्मीतिधिया शेषाप्यहंबुद्धिर्निवर्त्यते ॥ ४३ ॥ नैष्कर्म्यसिद्धावप्येवमाचार्यैः स्पष्टमीरितम् ॥ सामानाधिकरण्यस्य बाधार्थत्वमतोऽस्तु तत् ॥ ४४ ॥ सर्वं ब्रह्मेति जगता सामानाधिकरण्यवत् ॥ अहं ब्रह्मेति जीवेन सामानाधिकृतिर्भे-

---

शंक्य तस्याः श्रुतेर्देहांतरप्राप्तिविषयतया नात्यंतिकनाशाभावपरत्वमित्याह जीवापेतमिति जीवापेतं जीवरहितं जीवेन त्यक्तमिति यावद् वाव एव जीवो न म्रियते इत्यर्थः ॥४१॥ननु जीवस्य विनाशित्वेऽहं ब्रह्मास्मीत्यविनाशिब्रह्मतादात्म्यज्ञानं न घटते इति शंकते नाहमिति विनाशी स जीवोहं ब्रह्मेति ब्रह्मरूपेणात्मानं न बुध्येत न जानीयाद्विनाश्यविनाशिनोरेकत्वविरोधादिति चेन्मुख्यसामानाधिकरण्याभावेऽपि बाधायां सामानाधिकरण्यसंभवाज् जीवभावबाधेन ब्रह्मभावोऽवगंतुं शक्यते इत्याह न तदिति ॥४२॥ बाधासामानाधिकरण्येन वाक्यार्थप्रतिपत्तिप्रकारोवार्तिककारैः सदृष्टांतोऽभिहित इतीममर्थं तद्वाक्योदाहरणपूर्वकं दर्शयति योयं स्थाणुरिति स्थाणुरेष पुमानित्यस्मिन्वाक्ये पुरुषत्वबोधेन स्थाणुत्वबुद्धिर्निवर्त्यते यथा एवमहं ब्रह्मास्मीतिबोधेनाहंबुद्धिः कर्त्ताऽहमस्मीत्येवमादिरूपा सर्वापि निवर्त्यतइति ॥ ४३ ॥ नैष्कर्म्येति एवमुक्तेन प्रकारेणाचार्यैर्वार्तिककारैर्नैष्कर्म्यसिद्धौ सामानाधिकरण्यस्य बाधार्थत्वं स्पष्टमीरितमिति फलितमाह अतोऽस्तु तदिति अतः कारणाद् ब्रह्माहमस्मीति वाक्ये तत्सामानाधिकरण्यस्य बाधार्थत्वमस्त्वित्यर्थः ॥४४॥ नन्वेवमपि श्रुतिषु बाधायां सामानाधिकरण्यं न क्वापि दृष्टमित्याशंक्य सर्वं ह्येतद्ब्रह्मेत्यत्र बाधायां सामानाधिकरण्यं दृष्टमतोऽत्रापि तद्भविष्यती-

वेत् ॥ ४५ ॥ सामानाधिकरण्यस्य बाधार्थत्वं निराकृतम् ॥ प्रयत्नतो विवरणे कूटस्थस्य विवक्षया ॥ ४६ ॥ शोधितस्त्वंपदार्थो यः कूटस्थो ब्रह्मरूपताम् ॥ तस्य वक्तुं विवरणे तथोक्तमितरत्र च ॥ ४७ ॥ देहेंद्रियादियुक्तस्य जीवाभासभ्रमस्य या ॥ अधिष्ठानचितिः सैषा कूटस्थात्र विवक्षिता ॥ ४८ ॥ जगद्भ्रमस्य सर्वस्य यदधिष्ठानमीरितम् ॥ त्रय्यंतेषु तदत्र स्याद्ब्रह्मशब्दविवक्षितम् ॥ ४९ ॥ एतस्मिन्नेव चैतन्ये जगदारोप्यते यदा ॥ तदा तदेकदेशस्य जीवाभासस्य का कथा ॥ ५० ॥ जगत्तदेकदेशाख्य-

---

त्याह सर्वं ब्रह्मेतीति ॥ ४५ ॥ ननु तर्हि विवरणाचार्यैर्बाधासामानाधिकरण्यं कुतो निराकृतमित्याशंक्य तैरहंशब्देन कूटस्थस्य विवक्षितत्वादित्याह सामानाधिकरण्यस्येति ॥४६॥ कूटस्थत्वविवक्षयेत्युक्तमर्थं विवृणोति शोधित इति शोधितो बुद्ध्यादिभ्यो विवेचितस्त्वंपदलक्ष्यो यः कूटस्थो वक्ष्यमाणलक्षणस्तस्य ब्रह्मरूपतां सत्यत्वादिलक्षणब्रह्मरूपतां वक्तुं विवरणादिषु बाधासामानाधिकरण्यनिराकरणपूर्वकं मुख्यसामानाधिकरण्यमुक्तमित्यर्थः ॥ ४७ ॥ इदानीं कूटस्थस्य ब्रह्मणैक्यं संभावयितुं कूटस्थशब्देन विवक्षितमर्थमाह देहेति आदिशब्देन मनआदयो गृह्यंते एवं च देहेंद्रियादियुक्तस्य शरीरद्वययुक्तस्य जीवाभासभ्रमस्य चिदाभासरूपभ्रमस्य याऽधिष्ठानचितिर्यदधिष्ठानचैतन्यमस्ति तदत्र वेदांतेषु कूटस्थत्वेन विवक्षितमित्यर्थः ॥ ४८ ॥ ब्रह्मशब्दस्य चार्थमाह जगदिति कृत्स्नजगत्कल्पनाधिष्ठानं यच्चैतन्यं वेदांतेषु निरूपितं तदत्र ब्रह्मशब्देन विवक्षितमित्यर्थः ॥ ४९ ॥ ननु जीवभ्रमाधिष्ठानं चैतन्यं कूटस्थ इत्युक्तमनुपपन्नं जीवस्यारोपितत्वासिद्धेरित्याशंक्य तस्यारोपितत्वं कैमुतिकन्यायेन साधयति एतस्मिन्निति जगदेकदेशत्वं चानेन जीवेनानुप्रविश्येत्यादिश्रुतिसिद्धम् ॥ ५० ॥ ननु जगदधिष्ठानचैतन्यस्यैकत्वात्तत्त्वंपदार्थयोर्भेदाभावे तत्त्वंपदार्थयोः पौनरुक्त्यमित्याशंक्य तयोरौपाधिको भेदो

समारोप्यस्य भेदतः ॥ तत्त्वंपदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितेः ॥ ५१ ॥ कर्तृत्वादीन्बुद्धिधर्मान् स्फूर्त्याख्यां चात्मरूपताम् ॥ दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत् ॥५२॥ का बुद्धिः कोऽयमाभासः को वात्माऽत्र जगत्कथम् ॥ इत्यनिर्णयतो मोहः सोऽयं संसार इष्यते ॥५३॥ बुद्ध्यादीनां स्वरूपं यो विविनक्ति स तत्त्ववित् ॥ स एव मुक्त इत्येवं वेदांतेषु विनिश्चयः ॥ ५४ ॥ एवं च सति बंधः स्यात्कस्येत्यादिकुतर्कजाः ॥ विडंबना दृढं खंड्याः खंडनोक्तिप्रकारतः ॥ ५५ ॥ वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ॥ बुभुत्सायां तथाऽज्ञोऽऽ-

---

वास्तवमैक्यमित्याह जगदिति जगत्तदेकदेश इति च आख्याः यस्य समारोप्यस्य तत्तथा जातावेकवचनम् ॥ ५१ ॥ ननु चिदाभासस्य शुक्तिकारजतादिवदधिष्ठानारोप्योभयधर्मवत्त्वानुपलंभात् कथमारोपितत्वमित्याशंक्याह कर्तृत्वादीनिति वुद्ध्युपाधिद्वारा समारोप्यमाणान् कर्तृत्वभोक्तृत्वप्रमातृत्वादीन् स्फुरणलक्षणमात्मरूपत्वं च दधत्पुरतो भाति स्पष्टं प्रतिभासते अत आभासः कल्पित इत्यर्थः ॥ ५२ ॥ अस्य भ्रमस्य किं कारणमित्याकांक्षायां वुद्ध्यादिस्वरूपापरिज्ञानमेवेत्याह कावुद्धिरिति तस्य निवर्तनीयत्वाय अनर्थहेतुतामाह सोयमिति ॥ ५३ ॥ अस्य किं निवर्तकमित्याकांक्षायां वुद्ध्यादिस्वरूपाविवेक एव निवर्तक इत्यभिप्रेत्य तद्वानेव ज्ञानी तत एवानर्थनिवृत्तिरित्याह वुद्ध्यादीनामिति ॥ ५४ ॥ एवं बंधमोक्षयोरविवेकमूलत्वे सत्यद्वैतवादे कस्य बंधः कस्य वा मोक्ष इत्येवमादिरूपास्तार्किकैः क्रियमाणाः कुतर्कमूलाः परिहासविशेषाः खंडनोक्तयुक्तिभिस्तेषां निरुत्तरत्वापादनेन परिहरणीया इत्याह एवमिति ॥ ५५ ॥ एवं श्रुतियुक्तिभ्यां कूटस्थं वुद्ध्यादिभ्यो विविच्य दर्शयित्वा पुराणेष्वपि तद्विवेकः कृत इत्याह वृत्तेरित्यादिश्लोकत्रयेण कामादिवृत्त्युत्पत्तौ सत्यां तत्साक्षित्वेन वृत्त्युदयात्पूर्वं तत्प्रागभावसाक्षित्वेन जिज्ञा-

स्मीत्याभासाज्ञानवस्तुनः ॥ ५६ ॥ असत्यालंबनत्वेन सत्यः सर्वजडस्य तु ॥ साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥ ५७ ॥ आनंदरूपः सर्वार्थसाधकत्वेन हेतुना ॥ सर्वसंबंधवत्त्वेन संपूर्णः शिवसंज्ञितः ॥ ५८ ॥ इति शैवपुराणेषु कूटस्थः प्रविवेचितः जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ॥ ५९ ॥ मायाभासेन जीवेशौ करोतीति

---

सायां सत्यां तत्साक्षित्वेन ततः पूर्वमज्ञोऽस्मीत्यनुभूयमानाज्ञानसाक्षित्वेन च शिव एव तिष्ठति ॥ ५६ ॥ स चासत्यस्य जगतः आलंबनत्वेन अधिष्ठानत्वेन सत्यः जडस्य सर्वस्य साधकत्वेनावभासकत्वात् चिद्रूपः सर्वदा प्रेमविषयत्वादानंदरूपः ॥ ५७ ॥ सर्वार्थावभासकत्वेन सर्वसंबंधित्वात्संपूर्ण इत्युच्यते अत्र चेदमभिप्रेतं विमतः शिवः वृत्त्यादिभ्यो भिद्यते वृत्त्यादिसाक्षित्वाद् यद्यद्वृत्त्यादिभ्यो न भिद्यते तत्तद्वृत्त्यादिसाक्षि न भवति यथा वृत्त्यादिविमतः सत्यो भवितुमर्हति मिथ्याधिष्ठानत्वादसत्यरजताधिष्ठानशुक्तिवद् विमतश्चिद्रूपः जडमात्रावभासकत्वाद्यच्चिद्रूपं न भवति तत्सर्वं जडावभासकमपि न भवति यथा घटादि विमतः परमानंदरूपः परप्रेमास्पदत्वाद् यत्परमानंदरूपं न भवति तत्परप्रेमास्पदमपि न भवति यथा घटादि विमतः परिपूर्णः सर्वसंबंधित्वाद्गगनवत् सर्वसंबंधित्वं च सर्वार्थसाधकत्वेन विमतः सर्वसंबंधवान् सर्वावभासकत्वाद् यः सर्वसंबंधवान् न भवति स सर्वावभासकोऽपि न भवति यथा दीपादिरिति ॥ ५८ ॥ उदाहृतपुराणवाक्यस्य तात्पर्यमाह इतीति इत्येवंप्रकारेण सूतसंहितादिषु पुराणेषु जीवेश्वरत्वादिकल्पनारहितः केवलोऽद्वितीयः स्वप्रभः स्वयंप्रकाशः चैतन्यरूपः शिवः कूटस्थो विवेचित इत्यन्वयः ॥ ५९ ॥ जीवेशत्वादिरहितत्वं कुत इत्याशंक्य श्रुत्या तयोर्मायिकत्वप्रदर्शनादित्याह मायेति जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिर्मायाविद्याधीनयोश्चिदाभासयोर्मायिकत्वं प्रतिपादयतीति भावः मायिकत्वे तयोर्देहादिभ्यो वैलक्षण्यं न स्यादित्याशंक्य

श्रुतत्वतः ॥ मायिकावेव जीवेशौ स्वच्छौ तौ काचकुंभवत् ॥ ६० ॥ अन्नजन्यं मनो देहात्स्वच्छं यद्वत्तथैव तौ ॥ मायिकावपि सर्वस्मादन्यस्मात्स्वच्छतां गतौ ॥ ६१ ॥ चिद्रूपत्वं च संभाव्यं चित्त्वेनैव प्रकाशनात् ॥ सर्वकल्पनशक्ताया मायाया दुष्करं न हि ॥६२॥ अस्मन्निद्राऽपि जीवेशौ चेतनौ स्वप्नगौ सृजेत् ॥ महामाया सृजत्येतावित्याश्चर्यं किमत्र ते ॥ ६३ ॥ सर्वज्ञत्वादिकं चेशे कल्पयित्वा प्रदर्शयेत् ॥ धर्मिणं कल्पयेद्याऽस्याः को भारो धर्मकल्पने ॥ ६४ ॥ कूटस्थेऽप्यतिशंका स्यादिति चेन्माऽतिशंक्यताम् ॥ कूटस्थमायिकत्वे तु प्रमाणं न हि विद्यते ॥ ६५॥ वस्तुत्वं घोषयंत्यस्य वेदांताः सकला अपि ॥ सपत्नरूपं

---

पार्थिवत्वाविशेषेऽपि काचकुंभस्य घटादिभ्यो वैलक्षण्यमिवानयोरपि स्यादित्याह स्वच्छाविति ॥ ६० ॥ ननु घटकाचकुंभारंभकयोर्मृद्विशेषयोर्भेदात्तद्वैलक्षण्यमुचितं जगज्जीवेश्वरभेदहेतोर्मायाया एकत्वात्तयोर्जगतो वैलक्षण्यमनुचितमित्याशंक्य अन्नजन्ययोर्देहमनसोर्यथा वैलक्षण्यं तद्वदित्याह अन्नेति ॥ ६१ ॥ भवतु काचादिवत् स्वच्छत्वं चित्त्वं तु कुत इत्याशंक्यानुभवादित्याह चिद्रूपेति चिद्रूपत्वेन प्रकाशनमपि मायिकयोरनुपपन्नमित्याशंक्य तस्या दुर्घटकारित्वादुपपन्नमित्याह सर्वेति ॥६२॥ उक्तमर्थं कैमुतिकन्यायेन द्रढयति अस्मदिति ॥ ६३ ॥ ईश्वरस्यापि मायिकत्वे तस्य जीववदसर्वज्ञत्वादिकं स्यादित्याशंक्य सर्वज्ञत्वादिकमपि मायैव कल्पयिष्यति इत्याह सर्वज्ञत्वेति तत्रोपपत्तिमाह धर्मिणमिति ॥ ६४ ॥ ननु जीवेशयोरिव कूटस्थस्यापि मायिकत्वं प्रसज्येतेति शंकते कूटस्थइति प्रमाणाभावान्नैवमिति परिहरति माऽतिशंक्यतामिति ॥६५॥ कूटस्थस्य वास्तवत्वेपि प्रमाणं नोपलभ्यते इत्याशंक्य श्रुतयः सर्वा अपि प्रमाणमित्याह वस्तुत्वमिति अत्र कूटस्थस्य पारमार्थिकत्वे प्रति-

वस्त्वन्यन्न सहंतेऽत्र किंचन ॥ ६६ ॥ श्रुत्यर्थं विशदीकुर्मो न तर्काद्वच्मि किंचन ॥ तेन तार्किकशंकानामत्र कोऽवसरो वद ॥ ६७ ॥ तस्मात्कुतर्कं संत्यज्य मुमुक्षुः श्रुतिमाश्रयेत् ॥ श्रुतौ तु माया जीवेशौ करोतीति प्रदर्शितम् ॥ ६८ ॥ ईक्षणादिप्रवेशांता सृष्टिरीशकृता भवेत् ॥ जाग्रदादिविमोक्षांतः संसारो जीवकर्तृकः ॥६९॥ असंग एव कूटस्थः सर्वदा नास्य कश्चन ॥ भवत्यतिशयस्तेन मनस्येवं विचार्यताम् ॥ ७० ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७१ ॥ अवाङ्मनसगम्यं तं श्रुतिर्बोधयितुं सदा ॥ जीवमीशं जगद्वापि समाश्रित्य प्रबोधयेत् ॥७२॥ यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ॥ सा सैव

---

पक्षभूतमन्यद्वस्तु किंचन न सहंत इत्यर्थः ॥ ६६ ॥ ननु कूटस्थस्य जीवेशयोश्च वास्तवत्वावास्तवत्वसाधने श्रुतय एव पठ्यंते न तर्कैः किंचिदपि साध्यते इत्याशंक्य मुमुक्षूणां श्रुत्यर्थविशदीकरणाय प्रवृत्तत्वाद् न तर्कोपन्यास इत्याह श्रुत्यर्थमिति ॥ ६७ ॥ ततः किमित्यत आह तस्मादिति मुमुक्षूणां श्रुत्यर्थः कीदृशोऽनुसंधेय इत्याह श्रुतावित्यादिना श्रुतिषु जीवेशयोर्मायिकत्वम् ॥ ६८ ॥ ईक्षणादिप्रवेशांतायाः सृष्टेः ईश्वरकर्तृत्वं जाग्रत्स्वप्नसुषुप्तिबंधमोक्षलक्षणस्य संसारस्य जीवकर्तृत्वम् ॥ ६९ ॥ कूटस्थस्यासंगत्वादिकं मृतिजन्मादिलक्षणस्य व्यवहारजातस्यासत्त्वं च प्रतिपादितमतो मुमुक्षुरिममर्थं सर्वदा विचारयेदित्यभिप्रायः ॥ ७० ॥ कूटस्थस्य जन्माद्यतिशयाभावः कुतोऽवगम्यते इत्याशंक्य श्रुतिवाक्यादित्यभिप्रेत्य तद्वाक्यं पठति न निरोध इति ॥ ७१ ॥ ननु तर्हि श्रुतिषु तत्र तत्र जीवेश्वरादिस्वरूपप्रतिपादनं किमर्थमित्याशंक्यावाङ्मनसगोचरस्यात्मनोऽवबोधनायेत्याह अवाङ्मनसइति ॥ ७२ ॥ ननु तत्त्वस्वै-

प्रक्रियेह स्यात् साध्वीत्याचार्यभाषितम् ॥ ७३ ॥ श्रुतितात्पर्यमखिलमबुद्ध्वा भ्राम्यते जडः ॥ विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानंदवारिधौ ॥ ७४ ॥ मायामेघो जगन्नीरं वर्षत्वेष यथा तथा ॥ चिदाकाशस्य नो हानिर्न वा लाभ इति स्थितिः ॥ ७५ ॥ इमं कूटस्थदीपं योऽनुसंधत्ते निरंतरम् ॥ स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरंतरम् ॥ ७६ ॥ इति कूटस्थदीपः ॥ ७ ७ ७

---

करूपस्य श्रुतिबोध्यत्वे श्रुतिषु विगानं कुतो दृश्यत इत्याशंक्य न तत्त्वे विगानमस्ति अपि तु तद्बोधनप्रकारे तदपि बोध्यपुरुषचित्तवैषम्यानुसारेण सुरेश्वराचार्यैरुक्तमित्याह यया ययेति ॥ ७३ ॥ श्रुत्यर्थस्यैकरूपत्वे तत्प्रतिपादकानामेव कुतो विप्रतिपत्तिरित्याशंक्य श्रुतितात्पर्यबोधशून्यानामेव विप्रतिपत्तिर्न तु तद्विदामित्याह श्रुतितात्पर्यमिति ॥७४॥ तर्हि विवेकिनो निश्चयः कीदृश इत्याकांक्षायामाह मायेति ॥ ७५ ॥ ग्रंथाभ्यासफलमाह इममिति ॥७६॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्येन विदुषा विरचिता कूटस्थदीपतात्पर्यदीपिकासमाप्तिमगमत् ॥ ७ ७ ७ ७

॥ इति कूटस्थदीपः ॥

---

## ध्यानदीपः प्रकरणं १.

श्रीगणेशाय नमः॥ अथ ध्यानदीपः संवादिभ्रमवद्ब्रह्मतत्त्वोपास्त्याऽपि मुच्यते ॥ उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥ १ ॥ मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ॥ मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ २ ॥ दीपोऽपवरकस्यांतर्वर्तते तत्प्रभा बहिः ॥ दृश्यते द्वार्यथा-

श्रीगणेशाय नमः नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ क्रियते ध्यानदीपस्य व्याख्या संक्षेपतो मया ॥ १ ॥ इह तावद्वेदांतशास्त्रे नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपन्नस्य सम्यक्श्रवणमननिदिध्यासनानुष्ठानवतस्तत्त्वंपदार्थविवेचनपूर्वकं महावाक्यार्थोपरोक्षज्ञानेन ब्रह्मभावलक्षणो मोक्षो भवतीति प्रतिपादितं तत्र श्रुतोपनिषत्कस्यापि बुद्धिमांद्यादिना केन चित् प्रतिबंधेन वाक्यार्थविषयापरोक्षप्रमित्यनुत्पत्तौ सत्यां तदुत्पादनद्वारा मोक्षफलकोपासनानि दिदर्शयिषुरादौ तावत्सदृष्टांतं ब्रह्मतत्त्वोपासनयाऽपि मोक्षो भवतीति प्रतिजानीते संवादीति यथा संवादिभ्रमेण प्रवृत्तस्याभिप्रेतार्थलाभो भवति एवं ब्रह्मतत्त्वोपासनयाऽप्यभिलषितब्रह्मभावलक्षणो मोक्षो भवतीत्यर्थः तत्र किं प्रमाणमित्यत आह उत्तरइति यत उपासनयाऽपि मोक्षोऽस्त्यतः तापनीयोपनिषद्यनेकप्रकारेण ब्रह्मतत्त्वोपासना श्रुता उक्तेत्यर्थः ॥ १ ॥ संवादिभ्रमवदित्युक्तं प्रपंचयितुं संवादिभ्रमप्रतिपादकवार्तिकं पठति मणिप्रदीपेति मणिश्च प्रदीपश्च मणिप्रदीपौ तयोः प्रभे मणिप्रदीपप्रभे तयोरिति विग्रहः मणिप्रभायां दीपप्रभायां च या मणिबुद्धिः सा मिथ्याज्ञानमेव तस्मिंस्तद्बुद्धित्वाद् अथापि मणिप्रभायां च या मणिबुद्धिः साऽर्थक्रियाकारिणी मणिबुद्ध्याभिधावतः पुरुषस्य मणिलाभो भवति इतरस्य तु नास्तीत्यर्थक्रियायां वैषम्यमस्तीत्यर्थः ॥ २ ॥ वार्त्तिकं व्याचष्टे दीपोऽपवरकस्यांतरित्यादिना श्लोक-

न्यत्र तद्वद्दृष्टा मणेः प्रभा ॥ ३ ॥ दूरे प्रभाद्वयं दृष्ट्वा मणिबुध्द्याऽभिधावतोः ॥ प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि ॥ ४ ॥ न लभ्यते मणिर्दीपप्रभां प्रत्यभिधावता ॥ प्रभायां धावताऽवश्यं लभ्येतैव मणिर्मणेः ॥ ५ ॥ दीपप्रभामणिभ्रांतिर्विसंवादिभ्रमः स्मृतः ॥ मणिप्रभामणिभ्रांतिः संवादिभ्रम उच्यते ॥ ६ ॥ बाष्पं धूमतया बुद्ध्वा तत्रांगारानुमानतः ॥ वन्हिर्यदृच्छया लब्धः स संवादिभ्रमो मतः ॥ ७ ॥ गोदावर्युदकं गंगोदकं मत्वा विशु-

---

त्रयेण कस्मिंश्चिन्मंदिरे अपवरकस्यांतर्दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे रत्नमिव वर्तुलोपलभ्यते तथाऽन्यास्मिन्मंदिरे अपवरकस्यांतःस्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव रत्नसमा नोपलभ्यते ॥३॥ दूर इति तथाविधं प्रभाद्वयं दूरतो दृष्ट्वा अयं मणिरयं मणिरिति बुद्ध्या द्वौ पुरुषावभिधावनं कुरुतः तयोर्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रांतमेव ॥ ४ ॥ अथापि दीपप्रभायां मणिवुद्धिं कृत्वा धावता पुरुषेण मणिर्नोपलभ्यते मणेः प्रभायां मणिवुद्ध्या धावता मणिर्लभ्येतैव ॥ ५ ॥ भवत्त्वेवं वार्तिकार्थः प्रकृते किमायतमित्यत आह दीपप्रभेति या दीपप्रभायां मणिभ्रांतिरस्ति स विसंवादिभ्रम इति स्मृतो विद्वद्भिर्मणिलाभलक्षणार्थक्रियारहितत्वाद् या मणिप्रभायां मणिवुद्धिरस्ति सा तु मणिलाभलक्षणार्थक्रियावत्त्वात् संवादिभ्रम इत्युच्यत इत्यर्थः ॥ ६ ॥ एवं प्रत्यक्षविषये संवादिभ्रमं दर्शयित्वाऽनुमानविषयेऽपि तं दर्शयति बाष्पमिति क्वचित् प्रदेशे स्थितं बाष्पं धूमत्वेन निश्चित्य तन्मूलप्रदेशे अयं प्रदेशः अग्निमान् धूमवत्वादित्यनुमाय प्रवृत्तेन पुरुषेण दैवगत्या यद्यग्निस्तत्रोपलभ्येत तदा बाष्प विषयं धूमज्ञानं संवादिभ्रमो मतः ॥ ७ ॥ आगमविषयेऽपि तं दर्शयति गोदावर्युदकमिति गोदावर्युदकस्यापि विशुद्धिहेतुत्वमागमसिद्धमतस्तत्प्रोक्षणादपि विशुद्धिरस्त्येव अथापि गोदावर्युदके या गंगो-

द्धये ॥ संप्रोक्ष्य शुद्धिमाप्नोति स संवादिभ्रमो मतः ॥८॥ ज्वरेणाप्तः सन्निपातं भ्रांत्या नारायणं स्मरन् ॥ मृतः स्वर्गमवाप्नोति स संवादिभ्रमो मतः ॥ ९ ॥ प्रत्यक्षस्यानुमानस्य तथा शास्त्रस्य गोचरे ॥ उक्तन्यायेन संवादिभ्रमाः संति हि कोटिशः ॥ १० ॥ अन्यथा मृत्तिकादारुशिलाः स्युर्दैवताः कथम् ॥ अग्नित्वादिधियोपास्याः कथं वा योषिदादयः ॥ ११ ॥ अयथावस्तुविज्ञानात्फलं लभ्यत ईप्सितम् ॥ काकतालीयतः सोऽयं संवादिभ्रम उच्यते ॥ १२ ॥ स्वयंभ्रमोऽपि संवादी यथा सम्यक्फलप्रदः ॥

---

दकबुद्धिः सा भ्रांतिरेव ॥ ८ ॥ उदाहरणांतरमाह ज्वरेणाप्त इति ज्वरेण सन्निपातं प्राप्तः पुरुष इदं नारायणस्मरणं मम स्वर्गसाधनमिति ज्ञानमंतरेणापि सान्निपातप्रयुक्तभ्रमवशात् साधारणपुरुषतया वैद्यादिवन्नारायणं स्मरन् मृतः स्वर्गमवाप्नोत्येव हरिर्हरतिपापानि दुष्टचित्तैरपि स्मृतः आकृश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिमित्यादिपुराणवचनेभ्यः अत्रापि नारायणनाम्नः पुत्रनामत्वज्ञानं भ्रांतिरेव ॥ ९ ॥ एवं त्रिविधसंवादिभ्रमोदाहरणेन सिद्धमर्थमाह प्रत्यक्षस्येति ॥ १० ॥ विपक्षे बाधकप्रदर्शनेनोक्तमर्थं द्रढयति अन्यथेति अन्यथा संवादिभ्रमाभावे मृदादयः फलसिद्धये देवतात्वेन पूज्या न भवेयुः स्वतो देवतात्वाभावादित्यर्थः बाधकांतरमाह अग्नित्वादिति पंचाग्निविद्यायां योषा वाव गोतमाग्निः पुरुषो वाव गोतमाग्निः पृथिवी वाव गोतमाग्निः पर्जन्यो वाव गोतमाग्निरसौ वाव द्युलोको गोतमाग्निरित्यादिवाक्यैर्योषित्पुरुषपृथिवीपर्जन्यद्युलोकानामग्नित्वेनोपासनं ब्रह्मलोकावाप्तिफलकं न भवेदित्यर्थः आदिपदेन मनो ब्रह्मेत्युपासीत आदित्यो ब्रह्मेत्यादेश इत्येवमादयो गृह्यंते ॥११॥इदानीं बहुभिर्ग्रंथैरुपपादितं संवादिभ्रमं बुद्धिसौकर्याय संक्षिप्य दर्शयति अयथावास्त्विति विहितादविहिताद्वा यस्मादयथावस्तुविज्ञानाद्विपरीतज्ञानादीप्सितमभिलषितं फलं काकतालीयन्यायतो दैवगत्या लभ्यते

ब्रह्मतत्त्वोपासनाऽपि तथा मुक्तिफलप्रदा ॥ १३ ॥ वेदांतेभ्यो ब्रह्मतत्त्वमखंडैकरसात्मकम् ॥ परोक्षमवगम्यैतदहमस्मीत्युपासते ॥ १४ ॥ प्रत्यग्व्यक्तिमनुल्लिख्य शास्त्राद्विष्णवादिमूर्तिवत् ॥ अस्ति ब्रह्मेतिसामान्यज्ञानमत्र परोक्षधीः ॥ १५ ॥ चतुर्भुजाद्यवगतावपि मूर्तिमनुल्लिखन् ॥ अक्षैः परोक्षज्ञान्येव न तदा विष्णुमीक्षते ॥ १६ ॥ परोक्षत्वापराधेन भवेन्नातत्त्ववेदनम् ॥ प्रमाणेनैव शास्त्रेण स-

---

सोऽयं संवादिभ्रम इत्यर्थः ॥ १२ ॥ ननु ब्रह्मोपासनस्यायथावस्तुविषयस्य कथं सम्यग्ज्ञानसाध्यमुक्तिफलप्रदत्वमित्याशंक्य संवादिभ्रमवदेवेत्याह स्वयं भ्रम इति ॥ १३ ॥ ननु ब्रह्मतत्त्वं ज्ञात्वोपासनं क्रियतेऽज्ञात्वा वा आद्ये उपासनावैयर्थ्यं मोक्षसाधनस्य ज्ञानस्यैव विद्यमानत्वाद् द्वितीये विषयापरिज्ञानादुपासनमेव न घटत इत्याशंक्याह वेदांतेभ्य इति अयमभिप्रायः ब्रह्मात्मैकत्वापरोक्षज्ञानस्य मोक्षसाधनस्यानुत्पन्नत्वान्नोपासनावैयर्थ्यं शास्त्रात्परोक्षतयाऽवगतत्वाद् ब्रह्मण उपासनाविषयत्वमिति ॥ १४ ॥ उपास्यब्रह्मतत्त्वगोचरस्य परोक्षज्ञानस्य किं रूपमित्याकांक्षायामाह प्रत्यगिति प्रत्यग्व्यक्तिं बुद्ध्यादिसाक्षिणमानंदात्मानमनुल्लिख्याविषयीकृत्य शास्त्रात् सत्यज्ञानादिवाक्यजाताद् ब्रह्मास्तीत्येवं सामान्याकारेण जायमानं ज्ञानमत्रास्यामुपासनायां परोक्षधीः परोक्षज्ञानं विवक्षितमित्यर्थः तत्र दृष्टांतः विष्णवादीति विष्णवादिमूर्तिप्रतिपादकशास्त्रजन्यज्ञानवदित्यर्थः ॥ १५ ॥ ननु शास्त्रेण विष्णवादिमूर्तेश्चतुर्भुजत्वादिविशेषप्रतीतेस्तज्ज्ञानस्यापि कुतः परोक्षत्वमित्याशंक्याह चतुर्भुजादीति शास्त्रेण चतुर्भुजत्वादिविशेषप्रतीतावपि चक्षुरादिभिर्विष्णवादिमूर्तिमविषयीकुर्वन् पुरुषः परोक्षज्ञान्येव तत्रोपपत्तिमाह न तदेति तदोपासनाकाले विष्णुमुपास्यं नेक्षते नेंद्रियैर्विषयीकरोतीत्यर्थः ॥ १६ ॥ ननु विष्णवादिगोचरज्ञानस्य व्यक्त्युल्लेखित्वाभावाद् भ्रमत्वमित्याशंक्य प्रमाणेन जनितत्वान्नभ्रत्वमित्याह परोक्षत्वेति परोक्षज्ञानत्वं भ्रांतिज्ञानत्वे कारणं

त्वमूर्त्तेर्विभासनात् ॥ १७ ॥ सच्चिदानंदरूपस्य शास्त्राज्ज्ञानेऽप्यनुल्लिखन् ॥ प्रत्यंचं साक्षिणं तत्तु ब्रह्मसाक्षान्न वीक्षते ॥ १८ ॥ शास्त्रोक्तेनैव मार्गेण सच्चिदानंदनिश्चयात् ॥ परोक्षमपि तज्ज्ञानं तत्त्वज्ञानं न तु भ्रमः ॥१९॥ ब्रह्म यद्यपि शास्त्रेषु प्रत्यक्त्वेनैव वर्णितम् ॥ महावाक्यैस्तथाऽप्येतद्दुर्बोधमविचारिणः ॥२०॥ देहाद्यात्मत्वविभ्रांतौ जाग्रत्यां न हठात्पुमान् ॥ ब्रह्मात्मत्वेन विज्ञातुं क्षम-

---

न भवति किं तु विषयासत्यत्वम् इह तु प्रमाणभूतेन शास्त्रेणैव यथार्थभूताया विष्ण्वादिमूर्त्तेरवभासनान्न भ्रमत्वमित्यर्थः ॥ १७ ॥ ननु सच्चिदानंदव्यक्त्युल्लेखिनो ब्रह्मतत्त्वज्ञानस्य शास्त्रजन्यस्यापि कुतः परोक्षतेत्याशंक्यापरोक्षत्वप्रयोजकप्रत्यक्त्वोल्लेखाभावादित्याह सच्चिदानंदेति सत्यं ज्ञानमनंतं ब्रह्म, नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरंजनः, सद्वीदं सर्वं तत्सदिति, इत्यादिशास्त्रात्सच्चिदानंदरूपस्य ब्रह्मणो भानेऽपि प्रत्यञ्चसाक्षिणमनुल्लिखन् तस्य ब्रह्मणः प्रत्यगात्मरूपत्वमजानानस्तद्ब्रह्मसाक्षान्न वीक्षते नैव पश्यति ॥ १८ ॥ कथं तर्हि तथाविधब्रह्मगोचरस्य ज्ञानस्य तत्त्वज्ञानत्वमित्याशंक्यागमप्रमाणजन्यत्वादित्याह शास्त्रेति तज्ज्ञानं परोक्षमपि शास्त्रोक्तेनैव प्रकारेण ब्रह्मणः सच्चिदानंदरूपनिश्चायकत्वात् सम्यग्ज्ञानमेव न भ्रम इत्यर्थः ॥ १९ ॥ ननु सत्यज्ञानादिवाक्यैर्ब्रह्मणः सच्चिदानंदरूपत्वमिव तत्त्वमस्यादिवाक्यैः प्रत्यग्रूपत्वमपि तस्य बोध्यतएव अतः शास्त्रजन्यस्यापि ज्ञानस्य प्रत्यग्व्यक्त्युल्लेखित्वादपरोक्षमेवेत्याशंक्याह ब्रह्मेति यद्यपि वेदांतेषु महावाक्यैर्ब्रह्मप्रत्यगात्मत्वेनैवोपदिष्टं तथाऽप्येतत् प्रत्यग्रूपत्वमन्वयव्यतिरेकाभ्यां तत्त्वंपदार्थविवेकशून्यस्य दुर्बोधं बोद्धुमशक्यमतः केवलाद्वाक्यान्नापरोक्षज्ञानमुत्पद्यत इत्यर्थः ॥ २० ॥ ननु सम्यग्ज्ञानस्य प्रमाणवस्तुपरतंत्रत्वात् प्रमाणस्य च तत्त्वमस्यादिवाक्यरूपस्य सद्भावाद्वस्तुनश्च ब्रह्मात्मैक्यलक्षणस्य विद्यमानत्वात्कुतो विचारमंतरेण दुर्बोधत्वमित्याशंक्याह दे-

ते मंदधीत्वतः ॥ २१ ॥ ब्रह्ममात्रं सुविज्ञेयं श्रद्धालोः शास्त्रदर्शिनः ॥ अपरोक्षद्वैतबुद्धिः परोक्षाद्वैतबुद्ध्यनुत् ॥ २२ ॥ अपरोक्षशिलाबुद्धिर्न परोक्षेशतां नुदेत् ॥ प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥ २३ ॥ अश्रद्धालोरविश्वासो नोदाहरणमर्हति ॥ श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः ॥ २४ ॥ सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत् ॥ विष्णुमूर्त्युपदेशो हि न मीमांसामपेक्षते ॥ २५ ॥ कर्मोपास्ती विचार्येते अनुष्ठेयाविनिर्णयात् ॥ बहुशाखाविप्रकीर्णं निर्णेतुं कः प्रभुर्नरः ॥ २६ ॥ निर्णीतोऽर्थः कल्पसू-

---

ह्वादिति ब्रह्मात्मैकत्वापरोक्षज्ञानविरोधिनो देहेंद्रियादिष्वात्मत्वभ्रमस्य विचारनिवर्त्यस्य सद्भावात्तन्निवृत्तये विचारोऽपेक्ष्यत इत्यर्थः ॥ २१ ॥ ननु तर्हि देहेंद्रियादिगोचरस्य द्वैतभ्रमस्य सद्भावादद्वितीयब्रह्मगोचरं परोक्षज्ञानमपि नोदीयादित्याशंक्य परोक्षद्वैतभ्रमस्य परोक्षाद्वैतज्ञानाविरोधित्वाच्छ्रद्धावतः पुंसः शास्त्रात्परोक्षज्ञानमुत्पद्यतएवेत्याह ब्रह्ममात्रमिति अपरोक्षद्वैतबुद्धिर्यतः परोक्षाद्वैतबुद्ध्यनुदतो ब्रह्ममात्रं सुविज्ञेयमिति योजना ॥ २२ ॥ अपरोक्षभ्रमस्य परोक्षसम्यग्ज्ञानाविरोधित्वे दृष्टांतमाह अपरोक्षेति विरोधाभावमेवोदाहृत्य दर्शयति प्रतिमादिष्विति ॥ २३ ॥ के चन विप्रतिपद्यमाना उपलभ्यंते इत्याशंक्याह अश्रद्धालोरिति कुत इत्यत आह श्रद्धालोरेवेति सर्वेषु वेदोक्तानुष्ठानेषु श्रद्धालोरेव श्रद्धावत एवाधिकारित्वादित्यर्थः ॥ २४ ॥ एतावता परोक्षज्ञाने किमायातमित्यत आह सकृदाप्त इति उक्तमर्थं लोकानुभवेन द्रढयति विष्णुमूर्तीति ॥ २५ ॥ ननु तर्हि शास्त्रेषु कुतो विचाराः क्रियंतइत्याशंक्यानुष्ठेययोः कर्मोपासनयोः संदेहसंभवात्तन्निर्णयाय विचाराः क्रियंत इत्याह कर्मोपास्तीति संदेहसंभवमेवोपपादयति बहुशाखेति अनेकासु शाखासु तत्र तत्र चोदितं कर्म उपासनं वा एकत्र समाहृत्य निर्णेतुमस्मदादिर्नरः कः प्रभुः समर्थः न कोऽपीत्यर्थः ॥ २६ ॥ ननु तर्ह्यननुष्ठेयत्वमेव कर्मोपासनयोः

त्तैर्ग्रथितस्तावताऽस्ति कः ॥ विचारमंतरेणापि शक्तोऽनुष्ठातुमंजसा ॥ २७ ॥ उपास्तीनामनुष्ठानमार्षग्रंथेषु वर्णितम् ॥ विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः ॥ २८ ॥ वेदवाक्यानि निर्णेतुमिच्छन्मीमांसतां जनः ॥ आप्तोपदेशमात्रेण ह्यनुष्ठानं हि संभवेत् ॥ २९ ॥ ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम् ॥ आप्तोपदेशमात्रेण न संभवति कुत्र चित् ॥ ३० ॥ परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत् ॥ अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबंधकः ॥ ३१ ॥ विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत् ॥

---

प्राप्तमित्याशंक्याह निर्णीत इति जैमिन्यादिभिः पूर्वाचार्यैर्निश्चितोऽर्थः अनुष्ठानप्रकारः कल्पसूत्रैः संगृहीतोऽस्ति तावता तैर्ग्रथितत्वेनैव तेषु विश्वासवान् पुरुषः विचारं विनाऽपि कर्म सम्यगनुष्ठातुं शक्नोत्येव ॥ २७ ॥ ननु तत्त्वोपासनाविचाराभावात् तदनुष्ठानं न संभवेदित्याशंक्याह उपास्तीनामिति आर्षग्रंथेषु ब्रह्मवासिष्ठादिमंत्रकल्पेषू उपासनाप्रकारो वर्णितः ततो विचारासमर्था मनुष्याः कल्पेषूक्तं तदुपासनं गुरुमुखादवगत्यानुतिष्ठंतीति भावः ॥ २८ ॥ ननु तर्हि इदानींतनैरपि ग्रंथकर्तृभिर्वेदवाक्यविचारः कुतः क्रियत इत्याशंक्य स्वस्वबुद्धिपरितोषायैव क्रियते नानुष्ठानासिद्धयइत्याह वेदेति ॥ २९ ॥ ननु ब्रह्मोपासनवद् ब्रह्मसाक्षात्कारस्याप्युपदेशमात्रादेव सिद्धिः किं न स्यादित्याशंक्याह ब्रह्मेति ॥ ३० ॥ आप्तोपदेशमात्रेणोपासनानुष्ठानोपयोगि परोक्षज्ञानमुत्पद्यते अपरोक्षज्ञानं तु विचारमंतरेण न जायतइत्युक्तं तत्र कारणमाह परोक्षेति यतोऽविश्वास एव परोक्षज्ञानं प्रतिबध्नाति नाविचारोऽतस्तन्निवृत्तौ सकृदुपदेशादेव परोक्षज्ञानजन्मोपपद्यते अविचारप्रतिबंधस्यापरोक्षज्ञानस्य तु विचारद्वारा तन्निवृत्तिमंतरेणोत्पत्तिर्न संभवति अतो विचारः कर्तव्य इति भावः ॥ ३१ ॥ ननु विचारे कृतेऽपि यदाऽपरोक्षज्ञानं न जायते तदा किं कर्तव्यमित्यत आह विचार्यापीति तत्त्वंपदार्थौ सम्यग्विचार्यापि बा-

आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत् ॥ ३२ ॥ विचारयन्नामरणं नैवात्मानं लभेत चेत् ॥ जन्मांतरे लभेतैव प्रतिबंधक्षये सति ॥ ३३ ॥ इह वाऽमुत्र वा विद्येत्येवं सूत्रकृतोदितम् ॥ शृण्वंतोऽप्यत्र बहवो यन्न विद्युरिति श्रुतिः ॥ ३४ ॥ गर्भएव शयानः सन् वामदेवोऽवबुद्धवान् ॥ पूर्वाभ्यस्तविचारेण यद्वदध्ययनादिषु ॥ ३५ ॥ बहुवारमधीतेऽपि तदा नायाति चेत्पुनः ॥ दिनांतरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान् ॥ ३६ ॥ कालेन परिपच्यंते कृषिगर्भादयो यथा ॥ तद्वदात्मविचारोऽपि शनैः कालेन पच्यते ॥३७॥ पुनः पुनर्विचारेऽपि त्रिविधप्रतिबंधतः ॥ न वेत्ति तत्त्वमित्येतद्वार्तिके सम्यगीरितम् ॥ ३८ ॥ कुतस्तज् ज्ञा-

---

क्यार्थं ब्रह्मात्मैकत्वमपरोक्षतया न जानातीति चेत्तदापि पुनःपुनर्विचार एव कर्तव्योऽपरोक्षज्ञानहेतोरन्यस्याभावादिति भावः ॥ ३२ ॥ ननु भूयोभूयो विचारेणापि इह साक्षात्कारानुदये सति विचारो व्यर्थः स्यादित्याशंक्याह विचारयन्निति ॥ ३३ ॥ नन्विदं कुतोऽवगतमित्याशंक्य ब्रह्मसूत्रकृता व्यासेनैहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनादित्यस्मिन् सूत्रेऽभिधानादित्याह इह वामुत्रेति सति प्रतिबंधे इह जन्मनि ज्ञानानुत्पत्तौ श्रुतिं दर्शयति शृण्वंत इति ॥ ३४ ॥ इह जन्मनि श्रवणादिकर्तुः जन्मांतरेऽपरोक्षज्ञानं भवतीत्यत्रापि गर्भे नु सन्नन्वेषाम वेदमहं देवानां जनिमानि विश्वेत्यादिकां श्रुतिमर्थतः पठति गर्भेति इह जन्मन्युत्पन्नस्य ज्ञानस्य कालांतरोत्पत्तौ दृष्टांतमाह यद्वदिति ॥ ३५ ॥ दृष्टांतं विवृणोति बहुवारमिति ॥३६॥ आदिशब्देन परिगृहीतानि दृष्टांतांतराण्याह कालेनेति दार्ष्टांतिके योजयति तद्वदिति ॥३७॥ बहुवारं विचारितेऽपि तत्त्वे प्रतिबंधबलात्साक्षात्कारो न जायतइत्येतद्वार्तिककारैरपि निरूपितमित्याह पुनःपुनरिति॥३८॥ तान्येव वार्तिकान्युदाहरति कुतस्तज् ज्ञानमित्यादिना भरतस्य त्रिजन्मभिरित्यंतेन तत्र तावत्पूर्वमनुत्पन्नस्य ज्ञानस्येदानीमुत्पत्तौ कारणं

नमिति चेत्तद्धि बंधपरिक्षयात् ॥ असावपि च भूतो वा भावी वा वर्ततेथ वा ॥३९॥ अधीतवेदवेदार्थोऽप्यत एव न मुच्यते॥ हिरण्यनिधिदृष्टांतादिदमेव हि दर्शितम् ॥४०॥ अतीतेनापि महिषीस्नेहेन प्रतिबंधतः ॥ भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रगीयते ॥ ४१ ॥ अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ॥ ततो यथावद्वेदैष प्रतिबंधस्य संक्षयात् ॥४२॥ प्रतिबंधो वर्तमानो विषयासक्ति-

---

पृच्छति कुत इति उत्तरमाह तद्धि बंधेति बंधः प्रतिबंधस्तस्य परिक्षयादित्यर्थः सोऽपि प्रतिबंधो भूतो भावी वर्तमानश्चेति त्रिविध इत्याह असाविति ॥ ३९ ॥ भवत्वेवं त्रिविधप्रतिबंधस्ततः किमित्यत आह अधीतेति अत एव प्रतिबंधसद्भावादेवेत्यर्थः सति प्रतिबंधे ज्ञानं नोदेतीत्येतत् तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरंतो न विंदेयुः एवमेवेमाः सर्वाः प्रजाः अहरहर्ब्रह्मलोकं गच्छंत्य एतं ब्रह्मलोकं न विंदंत्यनृतेन हि प्रत्यूढा इत्यनया श्रुत्या प्रदर्शितमित्याह हिरण्येति ॥ ४० ॥ नन्वतीतस्य प्रतिबंधकत्वं न दृष्टमित्याशंक्याह अतीतेनेति अयमर्थः कश्चिद्यतिः पूर्वं गार्हस्थ्यदशायां कस्यां चिन्महिष्यां स्नेहं कृत्वा पश्चात्संन्यासानंतरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहेन जनितात्प्रतिबंधात्तत्त्वं गुरुणो पदिष्टमपि न ज्ञातवानित्येवंविधा गाथा लोके प्रगीयते न पुराणादिषु पठ्यतइत्यर्थः ॥४१॥ तर्हि तथाविधस्य तस्य कथं ज्ञानोत्पत्तिरित्यत आह अनुसृत्येति गुरुस्तस्य तत्त्वोपदेष्टा तदीयमहिषीस्नेहमनुसृत्य तस्यामेव महिष्यां तत्त्वं तन्महिष्युपाधिकं ब्रह्मोक्तवान् ततः सोऽपि महिषीस्नेहलक्षणप्रतिबंधकापगमेन गुरूपदिष्टं तत्त्वं यथावच्छास्त्रोक्तप्रकारेणैव ज्ञातवानित्यर्थः ॥ ४२ ॥ एवमतीतप्रतिबंधं प्रदर्श्य वर्तमानं दर्शयति प्रतिबंध इति वर्तमानः प्रतिबंधश्चित्तस्य विषयासक्तिरूपः एकः प्रज्ञामांद्यं बुद्धेस्तैक्ष्ण्याभावः कुतर्कश्च शुष्कतार्किकत्वेन श्रुत्यर्थस्यान्यथोहनं विपर्ययदुराग्रहः विपर्यये आत्मनः कर्तृत्वादिधर्मयुक्तत्वज्ञानलक्षणे दुराग्रहो युक्तिर-

लक्षणः ॥ प्रज्ञामांद्यं कुतर्कश्च विपर्ययदुराग्रहः ॥ ४३ ॥ शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ॥ नीतेऽस्मिन्प्रतिबंधेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥ ४४ ॥ आगामिप्रतिबंधश्च वामदेवे समीरितः ॥ एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥ ४५ ॥ योगभ्रष्टस्य गीतायामतीते बहुजन्मनि ॥ प्रतिबंधक्षयः प्रोक्तो न विचारोऽप्यनर्थकः ॥ ४६ ॥ प्राप्य पुण्यकृतां लोकानात्मतत्त्वविचारतः ॥ शु-

---

हितोऽभिनिवेशः एतेषामन्यतमस्यापि सत्त्वे ज्ञानं नोदेतीत्यर्थः ॥ ४३ ॥ अस्यापि प्रतिबंधस्य केन निवृत्तिरित्यत आह शमाद्यैरिति शमादयः शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वेतिश्रुत्युक्ताः श्रवणादयः श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रुत्या अभिहिता एतैः साधनैस्तत्र तत्र तस्य तस्य प्रतिबंधस्य निवर्तने उचितैर्योग्यैस्तस्मिंतस्मिन् प्रतिबंधे क्षयं नीते सति विनाशिते सति अतः प्रतिबंधापगमादेव स्वस्य प्रत्यगात्मनो ब्रह्मत्वं प्राप्नोतीत्यर्थः ॥ ४४ ॥ इदानीं भाविप्रतिबंधं दर्शयति आगामीति आगामिप्रतिबंधो जन्मांतरहेतुः प्रारब्धशेष इत्यर्थः तस्य च भोगमंतरेण निवृत्त्यभावात्तन्निवृत्तौ कालनियमो नास्तीत्याह एकेनेति स च एकेन जन्मना क्षीणो वामदेवस्येति शेषः भरतस्य त्रिजन्मभिः क्षीण इत्यनुषज्यते ॥ ४५ ॥ नन्वेकेन त्रिजन्मभिरितिनियतकालत्वं भवतैवोच्यत इत्याशंक्याह योगेति ,योगभ्रष्टस्तत्त्वसाक्षात्कारपर्यंतं विचाररहित इत्यर्थः तर्हि तत्त्वविचारो निष्फलः स्यादित्याशंक्याह न विचारोपीति प्रतिबंधनिवृत्त्यनंतरमेवापरोक्षज्ञानलक्षणफलसद्भावादिति भावः ॥ ४६ ॥ गीतायां प्रतिपादितमर्थं दर्शयति प्राप्येत्यादिना ततो याति परां गतिमित्यंतेन प्राप्येति योगभ्रष्ट आत्मतत्त्वविचारबलादेव पुण्यकारिणां लोकान् स्वर्गविशेषान्प्राप्य तत्र बहुकालं सुखमनुभूय तद्भोगावसाने साभिलाषश्चेदस्मिन् लोके शुचीनां मातृतः पितृतः शुद्धानां श्रीमतां कुलेऽभिजायते

चीनां श्रीमतां गेहे साभिलाषोऽभिजायते ॥ ४७ ॥ अथ वा योगिनामेव कुले भवति धीमताम् ॥ निस्पृहो ब्रह्मतत्त्वस्य विचारात्तद्धि दुर्लभम् ॥ ४८ ॥ तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥ यतते च ततो भूयस्तस्मादेतद्धि दुर्लभम् ॥ ४९ ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ५० ॥ ब्रह्मलोकाभिवांछायां सम्यक् सत्यां निरुद्ध्य ताम् ॥ विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम् ॥ ५१ ॥ वेदांतविज्ञानसुनिश्चितार्था इति शास्त्रतः ॥ ब्रह्मलोके स

---

॥ ४७ ॥ पक्षांतरमाह अथ वेति निस्पृहः स्वयमतिविरक्तश्चेद्ब्रह्मतत्त्वविचारादेव धीमतामात्मतत्त्वनिश्चयविचारवतां योगिनां चित्तैकाग्र्यवतां कुले भवति जायत इत्यर्थः पूर्वस्मात् पक्षात्को विशेष इत्याह तद्धीति हि यस्मात्कारणात् तद्योगिकुले जन्म दुर्लभमल्पपुण्येनालभ्यमित्यर्थः ॥ ४८ ॥ तस्य दुर्लभत्वमुपपादयति तत्रेति हि यस्मात् कारणात् तत्र तस्मिन् जन्मनि पौर्वदेहिकं पूर्वदेहभवं तं बुद्धिसंयोगं तत्त्वविचारगोचरबुद्धिसंबंधं शीघ्रं लभते प्राप्नोति न केवलं बुद्धिसंबंधमात्रलाभः किंतु ततः पूर्वस्मात् प्रयत्नाद्भूयो यतते चाधिकं प्रयत्नं करोति तस्मादेतज्जन्म दुर्लभमित्यर्थः ॥ ४९ ॥ भूयोऽभ्यासे कारणमाह पूर्वेति योगभ्रष्टस्तेन पूर्वाभ्यासेनैवावशोऽपि अस्वाधीनोऽपि ह्रियते आकृष्यते एवमनेकेषु जन्मसु कृतेन प्रयत्नेन संसिद्धस्तत्त्वज्ञानसंपन्नस्ततस्तस्मात् तत्त्वज्ञानात्परां गतिं मुक्तिं याति प्राप्नोतीत्यर्थः ॥ ५० ॥ आगामि प्रतिबंधांतरं दर्शयति ब्रह्मलोकेति ब्रह्मलोकप्राप्तीच्छायां दृढायां सत्यां तां निरुध्य य आत्मानं विचारयेत्तस्य साक्षात्कारो नैव जायतइत्यर्थः ॥ ५१ ॥ ननु तर्हि तस्य कदाऽपि मुक्तिर्न स्यादित्याशंक्याह वेदांतेति वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ते ब्रह्मलोके तु परांतकाले परामृताः परिमुच्यंति सर्वे ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे परस्यांते कृतात्मानः

कल्पांते ब्रह्मणा सह मुच्यते ॥ ५२ ॥ केषां चित्तु विचारोऽपि कर्मणा प्रतिबध्यते ॥ श्रवणायापि बहुभिर्यो न लभ्य इति श्रुतेः ॥ ५३ ॥ अत्यंतबुद्धिमांद्याद्वा सामग्र्या वाऽप्यसंभवात् ॥ यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥ ५४ ॥ निर्गुणब्रह्मतत्त्वस्य न ह्युपास्तेरसंभवः ॥ सगुणब्रह्मणीवात्र प्रत्ययावृत्तिसंभवात् ॥ ५५ ॥ अवाङ्मनसगम्यं तन्नोपास्यमिति चेत्तदा ॥ अवाङ्मनसगम्यस्य वेदनं न च संभवेत् ॥ ५६ ॥ वागाद्यगोचराकारमित्येवं यदि वेत्त्यसौ ॥ वागाद्यगोचराकारमित्युपासीत नो

---

प्रविशंति परं पदम् इत्यादिशास्त्रवशाद् ब्रह्मलोकप्राप्त्यनंतरं तत्त्वं साक्षात्कृत्य ब्रह्मणा सह मुक्तिर्भविष्यतीत्यर्थः ॥ ५२ ॥ एवं तत्त्वविचारे क्रियमाणे प्रतिबंधवशादत्र साक्षात्कारो न जायतइत्यभिधाय तीव्रपापिनां तु सोऽपि विचारो दुर्लभ इत्याह केषां चिदिति तत्र प्रमाणमाह श्रवणायेति यः परमात्मा बहुभिः पुरुषैः श्रवणायापि श्रोतुमपि न लभ्यः दुर्लभ इत्यर्थः ॥ ५३ ॥ एतावता सति प्रतिबंधे तत्त्वसाक्षात्कारस्तत्साधनभूतो विचारश्च न संभवति इत्यभिधायेदानीं विचारासमर्थेन पुरुषार्थार्थिना किं कर्तव्यमित्यपेक्षायां विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोरिति यत्प्राक् प्रतिज्ञातं तदुपपादयति अत्यंतेति सामग्र्यसंभवो नाम तदुपदेष्टुर्गुरोरध्यात्मशास्त्रस्य देशकालादेर्वा असंभवस्तस्मादित्यर्थः ॥ ५४ ॥ ननु निर्गुणब्रह्मतत्त्वस्य गुणरहितत्वात्तदुपासनं न घटतइत्याशंक्योपासनस्य प्रत्ययावृत्तिरूपत्वात् सगुणब्रह्मणीव निर्गुणेपि तत्संभवतीत्याह निर्गुणेति ॥ ५५ ॥ ननु निर्गुणस्य ब्रह्मणो वाङ्मनसगोचरत्वाभावान्नोपास्यत्वमित्याशंक्य वेदनपक्षेऽप्ययं दोषः समान इत्याह अवाङ्मनसेति ॥ ५६ ॥ ननु ब्रह्मावाङ्मनसगोचरमित्येवं ज्ञातुं शक्यमित्याशंक्य एवमेवोपासि-

कुतः॥ ५७ ॥ सगुणत्वमुपास्यत्वाद्यदि वेद्यत्वतोऽपि तत् ॥ वेद्यं चेल्लक्षणावृत्त्या लक्षितं समुपास्यताम् ॥ ५८ ॥ ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥ इति श्रुतेरुपास्यत्वं निषिद्धं ब्रह्मणो यदि ॥ ५९ ॥ विदितादन्यदेवेति श्रुतेर्वेद्यत्वमस्य न ॥ यथा श्रुत्यैव वेद्यं चेत्तथा श्रुत्याऽप्युपास्यताम् ॥ ६० ॥ अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम्॥ वृत्तिव्याप्तिर्वेद्यता चेदुपास्यत्वेऽपि तत्समम् ॥ ६१ ॥ का ते भक्तिरुपास्तौ चेत्कस्ते द्वेषस्तदीरय ॥ मानाभावो न वाच्योऽस्यां बहुश्रुतिषु दर्शनात् ॥ ६२ ॥ उत्तरास्मिंस्तापनीये

---

तुमपि शक्यामित्याह वागादीति ॥ ५७ ॥ ब्रह्मण उपास्यत्वे सगुणत्वं प्रसज्येतेत्याशंक्य वेद्यत्वेऽपि तत्सगुणत्वं स्यादित्याह सगुणत्वमिति तत्सगुणत्वमित्यर्थः ननु लक्षणावृत्त्याश्रयणान्न वेद्यत्वे सगुणत्वप्रसंग इत्याशंक्य उपासनमपि तथैव क्रियतामित्याह वेद्यं चेदिति ॥ ५८ ॥ ननु ब्रह्मण उपास्यत्वं श्रुत्या निषिध्यत इति शंकते ब्रह्मविद्धीति यन्मनसा न मनुते येनाहुर्मनोमतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इतिश्रुतिरुपास्यस्य ब्रह्मत्वं निषेधयतीत्यर्थः त्वं यदवाङ्मनसगम्यं तदेव ब्रह्म विद्धीदमिति यत्तूपासते पुरुषास्तन्न विद्धीति योजना ॥ ५९ ॥ उपास्यत्ववद् वेद्यत्वस्यापि तन्निषेधः समान इत्याह विदितादिति अन्यदेव तद्विदितादथोविदितादधीति ब्रह्मणो वेद्यत्वमपि निवारयतीत्यर्थः विदिताज् ज्ञातादित्यर्थः अविदितादज्ञातादित्यर्थः विदिताविदिताभ्यामन्यद् ब्रह्मेति श्रुतिः प्रतिपादयतीति चेत्तर्हि तथैव तज्जानीयादित्याशंक्योपासनेऽप्येतत्समानामित्याह यथेति ॥ ६० ॥ ननुवेद्यत्वं ब्रह्मणो वास्तवं न भवतीत्याशंक्योपास्यत्वमपि तथेत्याह अवास्तवीति ननु वेदनपक्षे वृत्तेर्ब्रह्माकारत्वमस्ति नोपासन इत्याशंक्य शब्दबलात्तदाकारत्वमुभयत्र समानमित्याह वृत्तीति ॥ ६१ ॥ युक्तिशून्य उपालंभस्तु त्वत्पक्षेऽपि समान इत्याह का त इति ननु निर्गुणोपासने प्रमाणं नास्तीत्याशं-

शैब्यप्रश्नेऽथ काठके ॥ मांडूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥ ६३ ॥ अनुष्ठानप्रकारोऽस्याः पंचीकरण ईरितः ॥ ज्ञानसाधनमेतच्चेन्नेति केनात्र वारितम् ॥ ६४ ॥ नानुतिष्ठति कोऽप्येतदिति चेन्माऽनुतिष्ठतु ॥ पुरुषस्यापराधेन किमुपास्तिः प्रदुष्यति ॥ ६५ ॥ इतोऽप्यतिशयं मत्वा मंत्रान्वश्यादिकारिणः ॥ मूढा जपंतु तेभ्योऽतिमूढाः

---

क्यानेकासु श्रुतिषु उपलभ्यमानत्वान्मैवमित्याह मानाभाव इति ॥ ६२ ॥ बहुश्रुतिषु दर्शनादित्युक्तमर्थं विवृणोति उत्तरस्मिन्निति तापनीयोपनिषदि तावद् देवा ह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्वेत्यादिना बहुधा निर्गुणोपासनमभिधीयते शैब्यप्रश्ने प्रश्नोपनिषदि पंचमे प्रश्ने यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीतेति काठके कठवल्ल्यां सर्वे वेदा यत्पदमामनंतीत्युपक्रम्य एतद्ध्येवाक्षरं ब्रह्म एतदालंबनं श्रेष्ठमित्यादिना प्रणवोपासनमुच्यते मांडूक्योपनिषदि ओमित्येतदक्षरमिदं सर्वमित्यादिनावस्थायातीततुरीयोपासनमेवाभिधीयत इत्यर्थः आदिशब्देन तैत्तिरीयमुंडकादयो गृह्यंते ॥ ६३ ॥ ननु निर्गुणोपासनं कथमनुष्ठेयमित्यत आह अनुष्ठानेति नन्वेतदुपासनं ज्ञानसाधनमेव न मुक्तिसाधनमित्याशंक्य ब्रह्मतत्त्वोपास्त्यापि मुच्यत इतिवदतामस्माकमनुकूलमित्याह ज्ञानसाधनमिति ॥ ६४ ॥ ननु सगुणोपासनमेव सर्वैरनुष्ठीयते न निर्गुणोपासनमित्याशंक्य तस्य प्रमाणसिद्धस्यापलापो न युक्त इत्याह नानुतिष्ठतीति ॥ ६५ ॥ प्रमाणसिद्धस्यानुष्ठानाभावेनापरित्याज्यत्वे दृष्टांतमाह इतोऽपीति अयमभिप्रायः यथा सगुणोपासनेभ्यः कालांतरभाविफलेभ्यो वश्यादिकारिमंत्रेषु ऐहिकफलप्रदत्वमतिशयं बुध्द्वा मूढानां तन्मंत्रजपादौ प्रवृत्तावपि विवेकिभिः सगुणोपासनं न परित्यज्यते यथा वा नियमानुष्ठानापेक्षेभ्यस्तेभ्योऽपि मंत्रेभ्यः कृष्यादावतिशयं नियमनैरपेक्ष्यं मत्वा मूढतराणां तत्र प्रवृत्तावपि तन्मंत्रानुष्ठानं न परित्यज्यते तथा सांसारिकफलेप्सूनां निर्गुणोपासनानुष्ठानाभावेऽपि न मुमुक्षुभिर्निर्गुणो-

कृषिमुपासताम् ॥ ६६ ॥ तिष्ठंतु मूढाः प्रकृता निर्गुणोपास्तिरीर्यते ॥ विद्यैक्यात्सर्वशाखास्थान् गुणानत्रोपसंहरेत् ॥ ६७ ॥ आनंदादेर्विधेयस्य गुणसंघस्य संहृतिः ॥ आनंदादय इत्यस्मिन् सूत्रे व्यासेन वर्णिता ॥ ६८ ॥ अस्थूलादेर्निषेध्यस्य गुणसंघस्य संहृतिः ॥ तथा व्यासेन सूत्रेऽस्मिन्नुक्ताऽक्षरधियां त्विति ॥ ६९ ॥ निर्गुणब्रह्मतत्त्वस्य विद्यायां गुणसंहृतिः ॥ न युज्येतेत्युपालंभो व्यासं प्रत्येव मां न तु ॥ ७० ॥ हिरण्यश्मश्रुसूर्यादिमूर्तीनामनु-

---

पासनं त्यज्यत इति ॥ ६६ ॥ एवं प्रासंगिकं परिसमाप्य प्रकृतमनुसरति तिष्ठंत्विति सर्ववेदांतप्रत्ययं चोदनाद्यविशेषादित्युक्तन्यायेन निर्गुणोपासनस्यैकत्वात् तासु तासु शाखासु श्रुतानुपास्यगुणानेकत्रोपसंहृत्योपासनं कर्तव्यमित्याह विद्येति॥६७॥ ते च गुणा द्विप्रकाराः विधेया निषेध्याश्चेति तत्रानंदो ब्रह्म विज्ञानमानदं ब्रह्म नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरंजनो विभुरद्वय आनंदः परः प्रत्यगेकरस इत्यादयो ये विधेयगुणास्तेषामुपसंहार आनंदादयः प्रधानस्येत्यस्मिन्नधिकरणेऽभिहित इत्याह आनंदादेरिति ॥६८॥ ये चास्थूलमनण्वह्रस्वं यत्तदद्रश्यमग्राह्यमशब्दमस्पर्शमरूपमव्ययमित्यादयो निषेध्यगुणास्तत्र तत्र श्रुतास्तेषामुपसंहारोऽक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदनवत्तदुक्तमित्यस्मिन्नधिकरणेऽभिहित इत्याह अस्थूलादेरिति ॥ ६९ ॥ ननु निर्गुणब्रह्मविद्यायां न गुणोपसंहार एव युज्यते निर्गुणविद्यात्वविरोधादित्याशंक्य सूत्रकारेणैवमभिहितस्योपसंहारस्यास्माभिरभिधीयमानत्वान्नास्मान् प्रतीदं चोद्यमुचितमित्याह निर्गुणेति ॥ ७० ॥ हिरण्यश्मश्रुत्वादिगुणविशिष्टमूर्तीनाम् अनभिधानादिदं निर्गुणोपासनमेवेति चेत्तर्हि न विरोध इत्याह हिरण्येति हिरण्यश्मश्रुसूर्यादिमूर्तीनां हिरण्मयानि श्मश्रूणि यस्यासौ हिरण्यश्मश्रुः तथाविधः सूर्यो हिरण्यश्मश्रुः सूर्यः आदिर्येषां ते हिरण्यश्मश्रुसूर्यादयस्तेषां मूर्तयो हि-

दाहृतेः ॥ अविरुद्धं निर्गुणत्वमिति चेत्तुष्यतां त्वया ॥७१॥ गुणानां लक्षकत्वेन न तत्त्वेऽतःप्रवेशनम् ॥ इति चेदस्त्वेवमेव ब्रह्म तत्त्वमुपास्यताम् ॥ ७२ ॥ आनंदादिभिरस्थूलादिभिश्चात्माऽत्र लक्षितः ॥ अखंडैकरसः सोऽहमस्मीत्येवमुपासते ॥ ७३ ॥ बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु ॥ वस्तुतंत्रो भवेद्बोधः कर्तृतंत्रमुपासनम्॥७४॥ विचाराज्जायते बोधोऽनिच्छा यं न निवर्तयेत् ॥ स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम् ॥ ७५ ॥ तावता कृतकृत्यः सन्नित्यतृप्तिमुपागतः ॥ जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥ ७६ ॥ आप्तोपदेशं विश्वस्य श्रद्धालुर-

---

रण्यश्मश्रुसूर्यादिमूर्तयस्तासामिति विग्रहः ॥ ७१ ॥ ननु आनंदादीनामस्थूलादीनां च गुणानामुपास्यतत्त्वेंऽतःप्रवेशाभावात्तद्गुणाविशिष्टत्वेन कथमुपास्यत्वमित्याशंक्य तेषां तत्त्वांतःप्रवेशाभावेऽपि तेषां लक्षकत्वसंभवात्तैर्लक्षितं ब्रह्मोपास्यमित्याह गुणानामिति ॥ ७२ ॥ तथोपासनप्रकारमेव दर्शयति आनंदादिभिरिति अत्रासु श्रुतिषु योऽखंडैकरस आत्मा आनंदादिभिरस्थूलादिभिश्च गुणैर्लक्षितः सोहमस्मीत्येवमुपासते मुमुक्षवः इति शेषः ॥ ७३ ॥ नन्वेवं सति विद्योपासनयोः कुतो भेद इत्याशंक्य वस्तुतंत्रकर्तृतंत्रत्वाभ्यां भेद इत्याह बोधोपास्त्योरिति ॥ ७४ ॥ वैलक्षण्यांतरसिद्धये बोधस्य हेत्वादिकं दर्शयति विचाराज्जायतइत्यादिना श्लोकद्वयेन विचारादिति विचाराद्वस्तुतत्त्वविचाराद्बोधो जायते किं च विचाराज्जायमानं यं बोधमनिच्छा बोधो मा भूदित्येवंरूपा न निवर्तयेन्न निवारयेद् उत्पद्यमानश्च बोधः स्वजन्ममात्रात्संसारेऽखिलस्य प्रपंचस्य सत्यतां दहति नाशयति ॥ ७५ ॥ तावता तत्त्वज्ञानोत्पत्तिमात्रेण निरतिशयं सुखं प्राप्नोतीत्यर्थः ॥ ७६ ॥ उपासनायाश्च बोधाद्वैलक्षण्यांतरसिद्धये तद्दर्शयति आप्त इति आप्तस्य गुरोरुपदेशमुपास्य स्वरूपप्रतिपादकवाक्यजातं विश्वस्य विश्वासं कृत्वा विचारयन् उपास्य तत्त्वं प्रत्ययैरन्यैऽ-

विचारयन् ॥ चिंतयेत् प्रत्ययैरन्यैरनंतरितवृत्तिभिः ॥७७॥ यावच्चिंत्यस्वरूपत्वाभिमानः स्वस्य जायते ॥ तावद्विचिंत्य पश्चाच्च तथैवामृति धारयेत् ॥ ७८ ॥ ब्रह्मचारी भिक्षमाणो युतः संवर्गविद्यया ॥ संवर्गरूपतां चित्ते धारयित्वा ह्यभिक्षत ॥ ७९ ॥ पुरुषस्येच्छया कर्तुमकर्तुं कर्तुमन्यथा॥ शक्योपास्तिरतो नित्यं कुर्यात्प्रत्ययसंततिम् ॥ ८० ॥ वेदाध्यायी ह्यप्रमत्तोधीते स्वप्नेधिवासतः ॥ जपिता तु जपत्येव तथा ध्याताऽपि वासयेत् ॥ ८१ ॥ विरोधिप्रत्ययं त्यक्त्वा नैरंतर्येण भावयन् ॥ लभते वासनावेशात्स्वप्नादावपि भावनाम् ॥ ८२ ॥ भुंजानोऽपि निजारब्धमास्थाति-

---

विजातीयघटादिविषयैरनंतरितवृत्तिभिरव्यवहितवृत्तिभिश्चिंतयेदिति ॥७७॥ कियंतं कालं चिंतयेदित्याशंक्याह यावदिति ॥ ७८ ॥ उपासकस्य तद्रूपत्वाभिमानमुदाहरणप्रदर्शनेन स्पष्टीकरोति ब्रह्मचारीति कश्चित्संवर्गत्वगुणविशिष्टप्राणोपासकब्रह्मचारी भिक्षाहरणार्थमागत्याभिप्रतारिताम्नो राज्ञः पुरतः महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेयं नाभिपश्यंति मर्त्याः अभिप्रतारिन् बहुधा वसंतमितिमंत्रेण स्वात्मनः संवर्गरूपत्वं चित्ते धृतं प्रकटीकृतवानिति छांदोग्ये श्रूयत इत्यर्थः ॥७९॥ आमृतिधारणे निमित्तं दर्शयन्ननिच्छा यं न निवर्तयेदित्युक्ताद्बोधधर्माद्वैलक्षण्यमाह पुरुषस्येति उपास्तिः पुरुषस्योपासकस्येच्छया कर्तुमकर्तुमन्यथा प्रकारांतरेण वा कर्तुं शक्या अतः पुरुषस्येच्छाधीनत्वादुपासनं सर्वदा कुर्यादित्यर्थः ॥ ८० ॥ एवं सदा चिंतने किं भवतीत्यत आह वेदाध्यायीति अप्रमत्तो वेदाध्यायी सदाऽध्ययनशीलः जपिता सदा जपशीलोधिवासतः दृढवासनया स्वप्नादिष्वध्ययनं जपं वा करोति एवमुपासकोऽपि वासनादार्ढ्यात् स्वप्नादावपि ध्यायीतेत्यर्थः ॥ ८१ ॥ स्वप्नादावपि ध्यानानुवर्तने कारणमाह विरोधीति वासनावेशात्संस्कारपाटवाद् भावनां ध्यानम् ॥ ८२ ॥ ननु प्रारब्धकर्मवशाद्विषयाननुभवतः कथं

शयतोऽनिशम् ॥ ध्यातुं शक्तो न संदेहो विषयव्यसनी यथा ॥ ८३ ॥ परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ॥ तदेवास्वादयत्यंतः परसंगरसायनम् ॥ ८४ ॥ परसंगं स्वादयंत्या अपि नो गृहकर्म तत् ॥ कुंठीभवेदपि त्वेतदापातेनैव वर्तते ॥ ८५ ॥ गृहकृत्यव्यसनिनी यथा सम्यक्करोति तत् ॥ परव्यसनिनी तद्वन्न करोत्येव सर्वथा ॥ ८६ ॥ एवं ध्यानैकनिष्ठोऽपि लेशाल्लौकिकमारभेत् ॥ तत्त्वविस्त्वविरोधित्वाल्लौकिकं सम्यगाचरेत्॥८७॥मायामयः प्रपंचोऽयमात्मा चैतन्यरूपधृक् ॥ इतिबोधे विरोधः को लौकिकव्यवहारिणः ॥ ८८ ॥ अपेक्षते व्यवहृतिर्न प्रपंचस्य वस्तुताम् ॥ नाप्यात्मजाड्यं किं त्वेषा साधनान्येव कांक्षति ॥ ८९ ॥ मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान् ॥ तत्त्वविन्नोपमृद्गाति व्यवहारोऽस्य नो कुतः ॥ ९० ॥ उपमृद्गाति चित्तं चेद्ध्याताऽसौ न तु तत्त्ववित् ॥

---

नैरंतर्येण भावनासिद्धिरित्याशंक्यास्थातिशये सति विषयव्यसनिवद्भावनासिद्धिः स्यादित्याह भुंजान इति ॥ ८३ ॥ दृष्टांतं विवृणोति परव्यसनिनीति ॥ ८४ ॥ परसंगास्वादने गृहकृत्यविच्छेदः स्यादित्याशंक्याह परसंगमिति ॥ ८५ ॥ आपातेनैव वर्तते इत्युक्तमर्थं विवृणोति गृहकृत्येति ॥ ८६ ॥ दार्ष्टांतिके योजयति एवं ध्यानेति ननु तत्त्वविदपि लौकिकव्यवहारं किं लेशेनाचरति किं वा सम्यगिति विषयव्यवहारस्य तत्त्वज्ञानाविरोधित्वात् सम्यगेवाचरति इत्याह तत्त्वविदिति ॥ ८७ ॥ अविरुद्धत्वमेव दर्शयति मायामय इति ॥ ८८ ॥ विरोधाभावमेव प्रपंचयति अपेक्षतइति ॥ ८९ ॥ कानि तानि व्यवहारसाधनानीत्यत आह मनोवागिति तद्बाह्याः पदार्थाः गृहक्षेत्रादयस्तान् मनआदींस्तत्त्वज्ञानी न निवारयति अतोऽस्य ज्ञानिनो व्यवहारः कुतो न भवति भवत्येवेत्यर्थः ॥ ९० ॥ ननु विषया-

न बुद्धिमर्दयन् दृष्टो घटतत्त्वस्य वेदिता ॥ ९१ सकृत्प्रत्ययमात्रेण घटश्चेद्भासते सदा ॥ स्वप्रकाशोऽयमात्मा किं घटवच्च न भासते ॥९२॥ स्वप्रकाशतया किं ते तद्बुद्धिस्तत्त्ववेदनम्॥बुद्धिश्च क्षणनाश्येति चोद्यं तुल्यं घटादिषु॥९३॥ घटादौ निश्चिते बुद्धिर्नश्यत्येव यदा घटः॥ इष्टो नेतुं तदा शक्य इति चेत्सममात्मनि ॥ ९४ ॥ निश्चित्य सकृदात्मानं यदापेक्षा तदैव तम् ॥ वक्तुं मंतुं तथा ध्यातुं शक्नोत्येव हि तत्त्ववित् ॥ ९५ ॥ उपासक इव ध्यायल्ँ लौकिकं विस्मरेद्यदि ॥ विस्मरत्वेव सा ध्यानाद्विस्मृतिर्न तु वेदनात् ॥ ९६ ॥ ध्यानं त्वैच्छिकमेतस्य वेदनान्मुक्तिसिद्धि-

---

नुपमर्दनेऽपि तत्त्वविदा चित्तोपमर्दनं कार्यमित्याशंक्य तथाकरणे तत्त्वविदेव न स्यादित्याह उपमृद्नातीति ननु तत्त्वविदा चित्तं नोपमृद्यते इत्येतत् क्व दृष्टमित्याशंक्याह न बुद्धिमिति घटतत्त्वस्य वेदिता ज्ञाता बुद्धिमर्दयन् पीडयन्नैकाग्र्यं कुर्वन्पुरुषो न दृष्टो नोपलब्ध इत्यर्थः ॥९१॥ घटस्य स्थूलत्वेन स्पष्टत्वात्तद्दर्शने चित्तपीडनं नापेक्ष्यते ब्रह्मणस्त्वतथात्वात् तज्ज्ञाने तदपेक्ष्यते इत्याशंक्य तस्य स्वप्रकाशत्वेन घटादपि स्पष्टतरत्वाच्चित्तनिरोधनं नैवापेक्ष्यते इत्याह सकृदिति॥ ९२ ॥ ननु ब्रह्मणः स्वप्रकाशत्वेऽपि तद्गोचराया बुद्धिवृत्तेरेव तत्त्वज्ञानत्वात्तस्याश्च क्षणिकत्वेन ब्रह्मणि पुनः पुनरवस्थानमपेक्ष्यते इत्याशंक्येदं चोद्यं घटादिष्वपि समानमित्याह स्वप्रकाशतयेति॥९३॥घटादिज्ञानस्य क्षणिकत्वेऽपि सकृन्निश्चितस्य घटस्य सर्वदा व्यवहर्तुं शक्यत्वात् तत्र चित्तस्थैर्यसंपादनमप्रयोजकमित्याशंक्येदमात्मन्यपि समानमित्याह घटादाविति॥९४॥सममात्मनीत्युक्तमर्थं विवृणोति निश्चित्येति॥९५॥ननु तत्त्वविदप्युपासकवदात्मानुसंधानवशाज्जगदनुसंधानरहितो दृश्यते इत्याशंक्य सोऽनुसंधानाभावो ध्यानप्रयुक्तो न वेदनप्रयुक्त इत्याह उपासक इति ॥ ९६ ॥ ननु तत्त्वविदाऽपि मुक्तिसिद्धये ब्रह्मध्यानं कर्तव्यमित्याशंक्य ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते

तः ॥ ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिंडिमः ॥९७॥ तत्त्वविद्यदि न ध्यायेत्प्रवर्तेत तदा बहिः ॥ प्रवर्ततां सुखेनायं को बाधोऽस्य प्रवर्तने॥९८॥अतिप्रसंग इति चेत् प्रसंगं तावदीरय ॥ प्रसंगो विधिशास्त्रं चेन्न तत्तत्त्वविदं प्रति ॥९९॥ वर्णाश्रमवयोवस्थाभिमानो यस्य विद्यते ॥ तस्यैव च निषेधाश्च विधयः सकला अपि ॥१००॥ वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥ नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः॥ १ ॥ समाधिमथ कर्माणि मा करोतु करोतु वा ॥ हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥२॥ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ॥ न स-

---

'तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय' 'ज्ञात्वा देवं मुच्यते सर्वपापैः'रित्यादिशास्त्रसद्भावान्न मोक्षाय ध्यानं कर्तव्यमित्याह ध्यानमिति ॥ ९७ ॥ ननु तत्त्वविदो ध्यानानभ्युपगमे तस्य सदा बहिः प्रवृत्तिः स्यादित्याशंक्य बाधकत्वात्प्रवृत्तेः साऽभ्युपेयत इत्याह तत्त्वविदिति ॥ ९८ ॥ बहिःप्रवृत्त्यभ्युपगमेऽतिप्रसंगः स्यादित्याशंक्य प्रसंगस्य दुर्निरूप्यत्वान्नैवमिति परिहरति अतिप्रसंग इति न प्रसंगो दुर्निरूप्यो विधिशास्त्रस्य प्रसंगशब्देन विवक्षितत्वाद् इति चेन्न तस्याज्ञानिविषयत्वेन तत्त्वविद्विषयत्वाभावादित्याह प्रसंग इति विधिशास्त्रमित्युपलक्षणं निषेधशास्त्रस्यापि ॥ ९९ ॥ विधिशास्त्रस्याविद्वद्विषयत्वमेव दर्शयति वर्णेति ॥ १०० ॥ ननु तत्त्वविदोऽपि देहधारित्वेन वर्णाश्रमाद्यभिमानित्वमस्तीत्याशंक्याह वर्णाश्रमेति ॥ १ ॥ ननु तत्त्वविनिश्चयस्तावत्तिष्ठतु शास्त्रं तु तस्य कर्तव्यं प्रतिपादयतीत्याशंक्य तदपि तस्य कर्तव्याभावमेव बोधयतीत्याह समाधिमिति यो हृदयेन बुद्ध्या अस्तसर्वास्थः अस्ताः परित्यक्ताः अशेषाः आसक्तिविशेषा यस्य तथाविधः अत एवोत्तमाशयः उत्तमः आशयः अभिप्रायो निर्मलं ज्ञानं यस्य स तथोक्तः स मुक्त एव अतः समाधिमथ कर्माणीत्यन्वयः ॥ २ ॥ विदुषः कर्तव्यं नास्तीत्यत्र

माधानजप्याभ्यां यस्य निर्वासनं मनः ॥ ३ ॥ आत्मा-संगस्ततोऽन्यत्स्यादिंद्रजालं हि मायिकम् ॥ इत्यचंचल-निर्णीते कुतो मनसि वासना ॥ ४ ॥ एवं नास्ति प्रसं-गोऽपि कुतोऽस्यातिप्रसंजनम् ॥ प्रसंगो यस्य तस्यैव शंक्येतातिप्रसंजनम् ॥ ५ ॥ विध्यभावान्न बालस्य दृश्य-तेऽतिप्रसंजनम् ॥ स्यात्कुतोऽतिप्रसंगोऽस्य विध्यभावे स-मे सति ॥ ६ ॥ न किंचिद्वेत्ति बालश्चेत्सर्वं वेत्त्येव तत्त्ववि-त् ॥ अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः ॥ ७ ॥ शापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद्यदि ॥ तन्न शापा-दिसामर्थ्यं फलं स्यात्तपसो यतः ॥ ८ ॥ व्यासादेरपि सामर्थ्यं दृश्यते तपसो बलात् ॥ शापादिकारणादन्यत्त-

---

वचनांतरमुदाहरति नैष्कर्म्येणेति नैष्कर्म्यं कर्मराहित्यं तेन कर्मत्यागेनेत्य-र्थः समाधानं समाधिः जप्यं जपः ॥ ३ ॥ ननु विदुषाऽपि वासनानि-वृत्तये ध्यानं कर्तव्यमित्याशंक्य सम्यग्ज्ञानिनो वासनैव नास्तीत्याह आ-त्मेति ॥ ४ ॥ भवत्वेवं प्रकृते किमायातमित्यत आह एवमिति कस्य तर्ह्यतिप्रसंग इत्यत आह प्रसंग इति ॥ ५ ॥ एवं क्व दृष्टमित्यत आह विध्यभावादिति दार्ष्टांतिके योजयति स्यादिति ॥ ६ ॥ बालस्य विध्य-भावे प्रयोजकमज्ञत्वमस्ति न विदुष इत्याशंक्य तस्याज्ञत्वाभावेऽपि वि-ध्यभावप्रयोजकं सर्वज्ञत्वमस्ति इत्याह न किं चिदिति तर्हि विध्यधि-कारः कस्येत्याशंक्याह अल्पज्ञस्येति ॥ ७ ॥ ननु व्यासादिवच्छापानुग्र-हसामर्थ्यं यस्य स एव तत्त्वविन्नान्य इति शंकते शापेति परिहरति त-न्नेति तत्र हेतुमाह शापादिसामर्थ्यमिति ॥ ८ ॥ ननु व्यासादीनां तत्त्व-विदामपि शापादिसामर्थ्यं दृश्यते इत्याशंक्य तेषां न तत्त्वज्ञानफलं अ-पि तु तपःफलमित्याह व्यासादेरिति ननु तर्हि तपसा ब्रह्म विजिज्ञा-सस्वेति श्रुतेस्तपोरहितस्य तत्त्वज्ञानमपि न घटेतेत्याशंक्य शापादिका-

पो ज्ञानस्य कारणम् ॥ ९ ॥ द्वयं यस्यास्ति तस्यैव सामर्थ्यज्ञानयोर्जनिः ॥ एकैकं तु ततः कुर्वन्नेकैकं लभते फलम् ॥ १० ॥ सामर्थ्यहीनो निंद्यश्चेद्यतिभिर्विधिवर्जितः ॥ निंद्यंते यतयोऽप्यन्यैरनिशं भोगलंपटैः ॥ ११ ॥ भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये ॥ अहो यतित्वमेतेषां वैराग्यभरमंथरम् ॥ १२ ॥ वर्णाश्रमपरान्मूढानिंदंत्वित्युच्यते यदि ॥ देहात्ममतयो बुद्धं निंदंत्वाश्रममानिनः ॥ १३ ॥ तदित्थं तत्त्वविज्ञाने साधनानुपमर्दनात् ॥ ज्ञानिनाऽऽचरितुं शक्यं सम्यग् राज्यादि लौकिकम् ॥ १४ ॥ मिथ्यात्वबुद्ध्या तत्रेच्छा नास्ति चेत्तर्हि माऽस्तु तत् ॥ ध्यायन्वाऽथ व्यवहरन्यथाऽऽरब्धं वसत्वयम् ॥ १५ ॥

---

रणादन्यस्य तपसः सत्वान्नैवमित्याह शापेति ॥ ९ ॥ तर्हि तेषां व्यासादीनां तत्त्वज्ञानित्वं शापादिकारणत्वं च कथं दृश्यत इत्याशंक्य उभयविधतपसः सद्भावादित्याह द्वयमिति ॥ १० ॥ ननु यः शापादिसामर्थ्यरहितस्तस्य विध्यभावेऽपि विहितानुष्ठातृभिर्निंद्यत्वं स्यादित्याशंक्य तेषामपि विषयलंपटैर्निंद्यत्वं स्यादित्याह सामर्थ्यहीन इति ॥ ११ ॥ एतेऽपि भोगतुष्ट्यर्थं विषयान्संपादयेयुरित्याशंक्य तदा तेषां यतित्वमेव हीयेतेत्यभिप्रायेणोपहसति भिक्षेति ॥ १२ ॥ विषयलंपटैः पामरैश्च क्रियमाणया निंदया क्रियापराणां शिष्टानां हानिर्नास्तीत्युच्यते चेत्तर्हि देहाभिमानिभिः क्रियापरैः क्रियमाणया निंदया तत्त्वविदोऽपि न हानिरित्याह वर्णाश्रमेति ॥ १३ ॥ प्रासंगिकं परिसमाप्य प्रकृतमनुसरति तदित्थमिति तत्तस्मात्कारणादित्थमुक्तेन प्रकारेण तत्त्वविज्ञाने सति साधनानुपमर्दनाल्लौकिकव्यवहारसाधनानां मनआदीनामविलापनाल्लौकिकं राज्यादि राज्यपरिपालनादिकर्म वा ज्ञानिना सम्यगाचरितुं शक्यमित्यर्थः ॥ १४ ॥ ननु तत्त्वविदः प्रपंचमिथ्यात्वज्ञानेन तत्रेच्छैव नोदीयादिति चेत्तर्हि स्वकर्मानुसारेण वर्ततामित्याह मिथ्यात्वेति ॥ १५ ॥

उपासकस्तु सततं ध्यायन्नेव वसेद्यतः ॥ ध्यानेनैव कृतं तस्य ब्रह्मत्वं विष्णुतादिवत् ॥ १६ ॥ ध्यानोपादानकं यत्तद्ध्यानाभावे विलीयते ॥ वास्तवी ब्रह्मता नैव ज्ञानाभावे विलीयते ॥ १७ ॥ ततोऽभिज्ञापकं ज्ञानं न नित्यं जनयत्यदः ॥ ज्ञापकाभावमात्रेण न हि सत्यं विलीयते ॥ १८ ॥ अस्त्येवोपासकस्यापि वास्तवी ब्रह्मतेति चेत् ॥ पामराणां तिरश्चां च वास्तवी ब्रह्मता न किम् ॥ १९ ॥ अज्ञानादपुमर्थत्वमुभयत्रापि तत्समम् ॥ उपवासाद्यथा

---

इदानीमुपासकस्यातो वैषम्यं दर्शयति उपासक इति तत्रोपपत्तिमाह यत इनि यतः कारणात्तस्य ब्रह्मत्वं ध्यानेनैव कृतं न प्रमाणेन प्रमितमतो ध्यायिना सदा ध्यानं कर्तव्यमित्यर्थः तत्र दृष्टांतः विष्णुतादिवदिति यथा स्वस्मिन् ध्यानेन संपादितस्य विष्णुत्वादेः पारमार्थिकत्वं नास्ति तद्वदित्यर्थः ॥ १६ ॥ ध्यानसंपादितस्यापि तस्य पारमार्थिकत्वं किं न स्यादित्याशंक्य ध्यानसंपादितस्य वाग्धेनुत्वादेर्ध्यानापायेऽपगमदर्शनान्नैवमित्याह ध्यानेनेति ज्ञानेन प्रकाशितस्य ब्रह्मत्वस्य ततो वैलक्षण्यमाह वास्तवीति हेतुगर्भितं विशेषणं यतो ब्रह्मत्वं वास्तवमतो ज्ञापकज्ञानाभावे सति नैव विलीयते ॥ १७ ॥ वास्तवत्वादेव ज्ञानेन नैव जन्यत इत्याह तत इति यतोऽदो ब्रह्मत्वं नित्यं ततो ज्ञानं तस्याभिज्ञापकमवबोधकमेव न जनकमित्यर्थः तत्रोपपत्तिं व्यतिरेकमुखेनाह ज्ञापकेति अयमभिप्रायः ब्रह्मत्वं यदि ज्ञानजन्यं स्यात्तर्हि ज्ञाननाशे स्वयं विलीयेत न च विलीयते अतो न जन्यत इत्यर्थः ॥ १८ ॥ ननु ज्ञानिवदुपासकस्यापि ब्रह्मत्वं वास्तवमस्त्येवेति शंकते अस्त्येवेति अत्यल्पमिदमुच्यत इत्यभिप्रायेणाह पामराणामिति ॥१९॥ पामरादीनां विद्यमानमपि तद्ब्रह्मत्वमज्ञातत्वान्न पुरुषार्थोपयोगीत्याशंक्य अज्ञातत्वेनापुरुषार्थोपयोगित्वमुपासकस्यापि समानमित्याह अज्ञानादिति ननु तर्ह्युपासनं किमर्थमभिधीयत इत्याशंक्येतरानुष्ठानेभ्यः श्रेष्ठत्वाभिप्रायेणोक्तमिति दृष्टांतपू-

भिक्षा वरं ध्यानं तथान्यतः ॥ २० ॥ पामराणां व्यवहृतेर्वरं कर्माद्यनुष्ठितिः ॥ ततोऽपि सगुणोपास्तिर्निर्गुणोपासना ततः ॥ २१ ॥ यावद्विज्ञानसामीप्यं तावच्छ्रैष्ठ्यं विवर्धते ॥ ब्रह्मज्ञानाय ते साक्षान्निर्गुणोपासनं शनैः ॥ २२॥ यथा संवादिविभ्रांतिः फलकाले प्रमायते ॥ विद्यायते तथोपास्तिर्मुक्तिकालेतिपाकतः ॥ २३ ॥ संवादिभ्रमतः पुंसः प्रवृत्तस्यान्यमानतः ॥ प्रमेति चेत्तथोपास्तिर्मांतरे कारणायताम् ॥ २४ ॥ मूर्तिध्यानस्य मंत्रादेरपि कारणता यदि ॥ अस्तु नाम तथाप्यत्र प्रत्यासत्तिर्विशिष्यते ॥२५॥ निर्गुणोपासनं पक्कं समाधिः स्याच्छनैस्ततः ॥ यः समाधिर्निरोधाख्यः सोऽनायासेन लभ्यते ॥ २६ ॥ निरोध-

---

वेकमाह उपवासादिति ॥ २० ॥ इतरानुष्ठानाच्छ्रैष्ठ्यमेव दर्शयति पामराणामिति ॥ २१ ॥ उत्तरोत्तरश्रैष्ठ्ये कारणमाह यावदिति निर्गुणोपासनस्य सर्वश्रैष्ठ्ये कारणमाह ब्रह्मज्ञानाय त इति ॥ २२ ॥ उक्तमर्थं दृष्टांतप्रदर्शनपूर्वकं द्रढयति यथेति ॥ २३ ॥ ननु संवादिविभ्रांतिः स्वयमेव न प्रमा भवति किं तु तया प्रवृत्तस्येंद्रियार्थसन्निकर्षात्प्रमा जायत इति शंकते संवादीति अस्तु तर्हि निर्गुणोपासनमपि निदिध्यासनरूपं सद्वाक्यजन्यापरोक्षज्ञाने कारणं भविष्यतीत्याह तथेति ॥ २४ ॥ नन्वेवं सति मूर्तिध्यानादेरपि चित्तैकाग्र्यसंपादनद्वारा अपरोक्षज्ञानसाधनत्वं स्यादिति चेत्तदप्यंगीक्रियत इत्याह मूर्तीति तर्हि निर्गुणोपासने कोऽतिशयस्तत्राह तथापीति प्रत्यासत्तिः सामीप्यं ज्ञानं प्रतीति शेषः ॥ २५ ॥ प्रत्यासत्तिप्रकारमेव दर्शयति निर्गुणेति निर्गुणोपासनं यदा पक्कं भवति तदा सविकल्पकसमाधिः स्यात् ततः सविकल्पकसमाधेर्निरोधाख्यो यः तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति सूत्रोक्तलक्षणो निर्विकल्पकः समाधिः सोऽनायासेन लभ्यते ॥ २६ ॥ भवत्वेवं निर्विकल्पकलाभस्ततः किमित्यत आह निरोधेति ततोऽपि किमित्यत आह पुनः

लाभे पुंसोऽतरसंगं वस्तु शिष्यते ॥ पुनः पुनर्वासितेऽस्मिन्वाक्याज्जायेत तत्त्वधीः ॥ २७ ॥ निर्विकारासंगनित्यस्वप्रकाशैकपूर्णताः ॥ बुद्धौ झटिति शास्त्रोक्ता आरोहंत्यविवादतः ॥ २८ ॥ योगाभ्यासस्त्वेतदर्थोऽमृतबिंद्वादिषु श्रुतः ॥ एवं च दृष्टद्वारापि हेतुत्वादन्यतो वरम् ॥ २९ ॥ उपेक्ष्य तत्तीर्थयात्राजपादीनेव कुर्वताम् ॥ पिंडं समुत्सृज्य करं लेढीति न्याय आपतेत् ॥ ३० ॥ उपासकानामप्येवं विचारत्यागतो यदि॥बाढं तस्माद्विचारस्यासंभवे योग ईरितः ॥ ३१ ॥ बहुव्याकुलचित्तानां विचारात्तत्त्वधीर्नहि ॥ यो यो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति

---

पुनरिति अस्मिन्नसंगे वस्तुनि पुनः पुनर्वासिते भाविते सति वाक्यात्तत्त्वमस्यादिलक्षणात्तत्त्वधीस्तत्त्वज्ञानमहं ब्रह्मास्मीत्येवमाकारं जायेत उत्पद्येत ॥ २७ ॥ तत्त्वज्ञानस्वरूपमेव विशदयति निर्विकारेति ॥ २८ ॥ ननु निर्विकल्पकसमाधिवशादपरोक्षज्ञानमुदेतीत्यत्र किं प्रमाणमित्याशंक्यामृतबिंद्वादिश्रुतयः सर्वा अपि प्रमाणमित्याह योगाभ्यासेति फलितमाह एवमिति एवं च सति निर्गुणोपासनस्याप्यपरोक्षज्ञानप्रत्यासत्तिसंभवे सति दृष्टद्वारापि निर्विकल्पकसमाधिलाभद्वारेण अपि शब्माददृष्टद्वारापि हेतुत्वाज् ज्ञानसाधनत्वादन्यतः सगुणोपासनादिभ्यो वरं श्रेष्ठमित्यर्थः ॥ २९ ॥ एवं निर्गुणोपासनस्यापरोक्षज्ञानसाधनत्वे सिद्धे सति तत्परित्यज्यान्यत्र प्रवृत्तानां वृथा श्रमः स्यादिति लौकिकन्यायदर्शनेनाह उपेक्ष्येति ॥ ३० ॥ नन्वात्मतत्त्वविचारं परित्यज्य निर्गुणोपासनं कुर्वतामप्ययं न्यायः समान इत्याशंक्यांगीकरोति उपासकानामिति तर्हि निर्गुणोपासनं कुतः प्रतिपाद्यत इत्यत आह तस्मादिति यस्मादुक्तन्यायप्रसंगस्तस्माद्विचारासंभवे योग उपासनमुक्तमित्यर्थः ॥ ३१ ॥ विचारासंभवे कारणमाह बह्विति यतो विचारो न संभवति अतो योगः कर्तव्य इत्याह योग इति मुख्यत्वे कारणमाह धीदर्प इति तेन योगेन यतो धीदर्पो नश्यति अतो मुख्य

॥ ३२ ॥ अव्याकुलधियां मोहमात्रेणाच्छादितात्मनाम् ॥ सांख्यनामा विचारः स्यान्मुख्यो झटिति सिद्धिदः ॥३३॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥ एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ३४ ॥ तत्कारणं सांख्ययोगाधिगम्यमिति हि श्रुतिः ॥ यस्तु श्रुतेर्विरुद्धः स आभासः सांख्ययोगयोः ॥ ३५ ॥ उपासनं नातिपक्कमिह यस्य परत्र सः ॥ मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते ॥ ३६ ॥ यं यं वाऽपि स्मरन् भावं त्यजत्यंते कलेवरम् ॥ तं तमेवैति यच्चित्तस्तेन यातीति शास्त्रतः ॥३७॥ अंत्यप्रत्ययतो नूनं भाविजन्म तथा सति ॥

---

इत्यर्थः ॥ ३२ ॥ एवं व्याकुलचित्तानां योगस्य मुख्यत्वमभिधाय तद्रहितानां विचार एव मुख्य इत्याह अव्याकुलेति सांख्यनामा विचारः सांख्यशब्दवाच्यस्तत्त्वविचारो मुख्यः कुत इत्यत आह झटितीति ॥३३॥ योगसांख्ययोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वे गीतावाक्यं प्रमाणयति यत्सांख्यैरिति यः सांख्यं च योगं च फलत एकं पश्यति स शास्त्रार्थं सम्यक् पश्यतीत्यर्थः ॥३४॥ न केवलं गीतावाक्यं किं तु तन्मूलभूता श्रुतिरप्यस्तीत्याह तत्कारणमिति ननु सांख्ययोगयोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वेनांगीकारे तच्छास्त्रे प्रतिपादितानां तत्त्वानामपि स्वीकार्यत्वं स्यादित्याशंक्याह यस्त्विति आभासो बाध्यत इत्यर्थः ॥३५॥ ननूपासनं कुर्वाणस्य तत्त्वज्ञानात्प्राङ् मरणे सति मोक्षो न सिद्ध्येदित्याशंक्याह उपासनमिति ॥ ३६ ॥ मरणावसरे ज्ञानान्मुक्तिलाभे प्रमाणमाह यं यं वापीति यच्चित्तस्तेनैव प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथा संकल्पितं लोकं नयतीतिवाक्याच्चेत्यर्थः ॥ ३७ ॥ ननूदाहृताभ्यां श्रुतिस्मृतिवाक्याभ्यामंत्यप्रत्ययतो भाविजन्माभिधीयते ज्ञानान्मुक्तिरित्याशंक्य मुखतस्तथाऽभिधानमंगीकरोति अंत्यप्रत्ययत इति कथं तर्हि मरणकाले ज्ञानान्मोक्षो भवतीत्यत्रेदं वाक्यद्वयं प्रमाणत्वेनोप-

निर्गुणप्रत्ययोऽपि स्यात्सगुणोपासने यथा ॥ ३८ ॥ नित्यनिर्गुणरूपं तन्नाममात्रेण गीयताम् ॥ अर्थतो मोक्ष एवैष संवादिभ्रमवन्मतः ॥ ३९ ॥ तत्सामर्थ्याज्जायते धीर्मूलाविद्यानिवर्तिका ॥ अविमुक्तोपासनेन तारकब्रह्मबुद्धिवत्॥४०॥सोऽकामो निष्काम इति ह्यशरीरो निरिंद्रियः॥ अभयं हीति मुक्तत्वं तापनीये फलं श्रुतम् ॥ ४१ ॥ उ-

---

न्यस्तमित्याशंक्याह तथा सतीति तथा सति अंत्यप्रत्ययाद्भाविजन्मविनिश्चये सति सगुणोपासकस्य यथा मरणावसरे पूर्वाभ्यासवशात्सगुणब्रह्माकारः प्रत्ययो जायते एवं निर्गुणोपासकस्यापि निर्गुणब्रह्मगोचरः प्रत्ययो जायते जनिष्यते इत्यर्थः ॥ ३८ ॥ ननु निर्गुणप्रत्ययाभ्यासवशान्निर्गुणब्रह्मप्राप्तिरेव भवेन्न मुक्तिरित्याशंक्य ब्रह्मप्राप्तिमुक्त्योः शब्दमात्रेण भेदो नार्थत इत्याह नित्यनिर्गुणेति तद्ब्रह्म नित्यमिति नाममात्रेणोच्यतामर्थतस्त्वेष मोक्ष एव स्वरूपावस्थितिर्मुक्तिरित्यभिधानादिति भावः तत्र दृष्टांतमाह संवादीति यथा संवादिभ्रमो नाममात्रेण भ्रम इत्युच्यते वस्तुतस्तत्त्वज्ञानमेव तद्वदित्यर्थः ॥३९॥ ननु निर्गुणोपासनस्य मानसक्रियारूपस्य मुक्तिसाधनत्वाभिधानं विरुद्धमित्याशंक्य तज्जन्यज्ञानस्य मोक्षसाधनत्वाभिधानान्न विरोध इत्याह तदिति तत्र दृष्टांतमाह अविमुक्त इति यथा अविमुक्तसगुणब्रह्मोपासनसामर्थ्यात्तारकब्रह्मविद्या जायते एवं निर्गुणोपासनान्निर्गुणब्रह्मज्ञानं जायत इत्यर्थः ॥ ४० ॥ ननु निर्गुणोपासनस्य मोक्षः फलमित्यत्र किं प्रमाणमित्याशंक्याह सोकाम इति सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयंते ब्रह्मैव सन्ब्रह्माप्येति अशरीरो निरिंद्रियोऽप्राणो ह्यमनाः सच्चिदानंदमात्रः स्वस्वराट् भवति य एवं वेद चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्वं तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्म भवति य एवं वेदेति रहस्यमित्यादिवाक्यैस्तापनीयोपनिषदि निर्गुणोपासनस्य मोक्षः फलत्वेन श्रूयत इत्यर्थः ॥ ४१ ॥ ननूपासनया मुक्तिः स्याच्चेत् नान्यः पंथा वि-

पासनस्य सामर्थ्याद्विद्योत्पत्तिर्भवेत्ततः ॥ नान्यः पंथा इति ह्येतच्छास्त्रं नैव विरुध्यते ॥ ४२ ॥ निष्कामोपासनान्मुक्तिस्तापनीये समीरिता ॥ ब्रह्मलोकः सकामस्य शैब्यप्रश्ने समीरितः ॥४३॥ य उपास्ते त्रिमात्रेण ब्रह्मलोके स नीयते ॥ स एतस्माज्जीवघनात्परं पुरुषमीक्षते ॥४४॥ अप्रतीकाधिकरणे तत्क्रतुन्याय ईरितः ॥ ब्रह्मलोकफलं तस्मात्सकामस्येति वर्णितम् ॥ ४५ ॥ निर्गुणोपास्तिसामर्थ्यात्तत्र तत्त्वमवेक्षते ॥ पुनरावर्तते नायं कल्पांते च वि-

घतेऽयनायेति श्रुतिविरोध इत्याशंक्य विद्याव्यवधानेन मोक्षप्रदत्वाभिधानान्न विरोध इत्याह उपासनस्येति ॥ ४२ ॥ मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते इत्युक्तार्थे श्रुतिं प्रमाणयति निष्काम इति तत्र सोऽकाम इत्यादि तापनीयवाक्यं पूर्वमेवोदाहृतम् ॥ ४३ ॥ इदानी शैब्यप्रश्नोपनिषद्वाक्यमर्थतः पठति य उपास्त इति यः पुनरेतत्त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परं पुरिशयं पुरुषमीक्षते इति सकामस्य ब्रह्मलोकप्राप्तिः श्रूयते इत्यर्थः ननु शैब्यप्रश्ने सकामस्य ब्रह्मलोकगतिरेव प्रतीयते इत्याशंक्य तत्र तत्त्वसाक्षात्कारश्च श्रूयते इत्याह स एतस्मादिति ब्रह्मलोकं गतः स उपासकः एतस्माज्जीवघनाज्जीवसमष्टिरूपाद् हिरण्यगर्भात्परमुत्कृष्टं पुरुषं निरुपाधिकचैतन्यरूपं परमात्मानमीक्षते साक्षात्करोति ॥ ४४ ॥ किं चाप्रतीकालंबनान्नयतीति बादरायणः उभयथादोषात्तत्क्रतुश्चेत्यत्र कामानुसारेण फलप्राप्तिर्भवतीति प्रतिपादितं तस्मादपि सकामस्य ब्रह्मलोकगतिरित्युक्तेत्याह अप्रतीकेति ॥ ४५ ॥ तर्हि सकामस्य तत्त्वज्ञानं कुतो जायते इत्याशंक्याह निर्गुणेति इमं मानवमावर्तं नावर्तते न स पुनरावर्तते न स पुनरावर्तते इति ब्रह्मणा सह ते सर्वे इत्यादिश्रुतिस्मृतिसद्भावान्न तस्य पुनः संसारप्राप्तिः किं तु मुक्तिरेवेत्याह

मुच्यते ॥ ४६ ॥ प्रणवोपास्तयः प्रायो निर्गुणा एव वेदगाः ॥ क्व चित्सगुणताप्युक्ता प्रणवोपासनस्य हि ॥४७॥ परापरब्रह्मरूप ओंकार उपवर्णितः ॥ पिप्पलादेन मुनिना सत्यकामाय पृच्छते ॥ ४८ ॥ एतदालंबनं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ इति प्रोक्तं यमेनापि पृच्छते नचिकेतसे ॥ ४९ ॥ इह वा मरणे वाऽस्य ब्रह्मलोकेऽथ वा भवेत् ॥ ब्रह्मसाक्षात्कृतिः सम्यगुपासीनस्य निर्गुणम् ॥ ५० ॥ अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरितः ॥ विचाराक्षम आत्मानमुपासीतेति संततम् ॥ ५१ ॥ साक्षात्कर्तुमशक्तोऽपि चिंतयेन्मामशंकितः ॥ कालेनानुभवारूढो भवेयं फलितो ध्रुवम् ॥५२॥ यथाऽगाधनिधेर्लब्धौ नोपायः खननं विना ॥ मल्लाभेऽपि तथा स्वात्मचिंतां मुक्त्वा न चापरः ॥ ५३ ॥ देहोपलमपाकृत्य बुद्धिकुद्दालकात्पुनः ॥ खात्वा मनोभुवं भूयो गृह्णीयान्मां निधिं पुमान् ॥ ५४ ॥ अनुभूतेरभावेऽपि ब्रह्मास्मीत्येव चिंत्यताम् ॥ अप्यसत्प्रा-

---

पुनरावर्तते इति ॥ ४६ ॥ इदानीं प्रणवोपासनप्रसंगाद् बुद्धिस्थं तद्द्वैविध्यं दर्शयति प्रणवेति ॥ ४७ ॥ द्वैविध्ये प्रमाणमाह परापरेति एतद्वै सत्यकामपरं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेन एकतरमन्वेतीति उभयरूपत्वं प्रतिपादितमित्यर्थः ॥ ४८ ॥ कठवल्ल्यां यमेनाप्येतदालंबनं ज्ञात्वेत्यादिना द्वैविध्यमुक्तमित्याह एतदालंबनमिति ॥४९॥ उक्तमर्थमुपसंहरति इह वेति ॥५०॥ विचारात्तत्त्वज्ञानसंपादनासमर्थस्य निर्गुणब्रह्मध्यानेऽधिकार इत्ययमर्थ आत्मगीतायां सम्यगभिहित इत्याह अर्थोऽयमिति ॥५१॥ आत्मगीतावाक्यान्येवोदाहरति साक्षादिति ॥५२॥ ध्यानस्य सम्यग्ज्ञानोपायत्वे दृष्टांतमाह यथेति दार्ष्टांतिके योजयति मल्लाभइति ॥ ५३ ॥ व्यतिरेकेणोक्तमर्थमन्वयमुखेनाह देहोपलमिति ॥ ५४ ॥ ज्ञानेऽसमर्थस्य

प्यते ध्यानान्नित्याप्तं ब्रह्म किं पुनः ॥५५॥ अनात्मबुद्धिशैथिल्यं फलं ध्यानाद्दिने दिने ॥ पश्यन्नपि न चेद्ध्यायेत्कोऽपरोऽस्मात्पशुर्वद ॥ ५६ ॥ देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम् ॥ पश्यन्मर्त्योऽमृतो भूत्वा ह्यत्र ब्रह्म समश्नुते ॥ ५७ ॥ ध्यानदीपमिमं सम्यक्परामृशति यो नरः ॥ मुक्तसंशय एवायं ध्यायति ब्रह्म संततम् ॥ ५८ ॥

---

ध्यानेऽधिकार इत्यत्र वाक्यांतरं पठति अनुभूतेरिति ध्यानाद्धि ब्रह्मप्राप्तौ कैमुतिकन्यायमाह अपीति उपासकस्य पूर्वमविद्यमानमपि देवत्वादिकं ध्यानात् प्राप्यते किल स्वरूपत्वेन नित्यप्राप्तं सर्वात्मकं ब्रह्म ध्यानात् प्राप्यत इति किमु वक्तव्यमित्यर्थः ॥ ५५ ॥ ब्रह्मध्यानफलस्य प्रत्यक्षसिद्धत्वादपि ध्यानं कर्तव्यमित्याह अनात्मेति ॥ ५६ ॥ इदानीमुपपादितमर्थं संक्षिप्य दर्शयति देहाभिमानमिति मरणशीले देहेऽहमित्यभिमानपरित्यागात्स्वयममृतो भूत्वा अत्रास्मिन्नेव शरीरे स्वस्य निजं रूपं सच्चिदानंदरूपं ब्रह्म प्राप्नोति ॥ ५७ ॥ ध्यानदीपानुसंधानफलमाह ध्यानदीपमिति ॥ ५८ ॥ श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचितं ध्यानदीपव्याख्यानं समाप्तम् ॥ ९ ॥ ❀ ❀ ❀ ❀ ❀ ❀

॥ इति ध्यानदीपः ॥

---

## नाटकदीपः प्रकरणं १०.

श्रीगणेशाय नमः ॥ अथ नाटकदीपप्रारंभः ॥ परमात्माऽद्वयानंदपूर्णः पूर्वं स्वमायया ॥ स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ॥ १ ॥ विष्णवाद्युत्तमदेहेषु प्रविष्टो देवता भवेत् ॥ मर्त्याद्यधमदेहेषु स्थितो भजति मर्त्यताम् ॥ ॥ २ ॥ अनेकजन्मभजनात् स्वविचारं चिकीर्षति ॥ वि-

---

श्रीगणेशाय नमः अथ नाटकदीपव्याख्याप्रारंभः ॥ नत्वा श्रीभारतातीर्थविद्यारण्यमुनीश्वरौ ॥ अर्थो नाटकदीपस्य मया संक्षिप्य वक्ष्यते ॥ १ ॥ चिकीर्षितस्य ग्रंथस्य निष्प्रत्यूहपरिपूरणायाभिमतदेवतातत्त्वानुस्मरणलक्षणं मंगलमाचरन् मंदाधिकारिणामनायासेन निष्प्रपंचब्रह्मात्मतत्त्वप्रतिपत्तिसिद्धये 'अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते । शिष्याणां बोधसिद्ध्यर्थं तत्वज्ञैः कल्पितः क्रम ' इति न्यायमनुसृत्य आत्मन्यध्यारोपं तावदाह परमात्मेति ॥ पूर्वं सृष्टेः प्रागद्वयानंदपूर्णः सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं विज्ञानमानंदं ब्रह्म पूर्णमदः पूर्णमित्यादिश्रुतिप्रसिद्धः स्वगतादिभेदशून्यः परमानंदरूपः परिपूर्णः परमात्मा स्वमायया मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमितिश्रुत्युक्तया स्वनिष्ठया मायाशक्त्या स्वयमेव जगद्भूत्वा तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवदितिश्रुतेः स्वयमेव जगदाकारतां प्राप्य जीवरूपतः प्राविशत् तत्सृष्ट्वा तदेवानुप्राविशत् अनेन जीवेनात्मनाऽनुप्रविश्येत्यादिश्रुतेर्जीवरूपेण प्रविष्टवानित्यर्थः ॥ १ ॥ ननु परमात्मन एवैकस्य सर्वशरीरेषु प्रविष्टत्वे पूज्यपूजकादिभावेन प्रतीयमान उत्तमाधमभावो विरुध्येतेत्याशंक्याह विष्ण्वाति नायं स्वाभाविक उत्तमाधमभावः किं तु शरीरोपाधिनिबंधनः अतो न विरोध इति भावः ॥२॥ इत्थमात्मन्यध्यारोपं संक्षेपेण प्रदर्श्य ससाधनं तदपवादं संक्षिप्य दर्शयति अनेकेति अनेकजन्मभजनादनेकेषु जन्मस्वनु-

चारेण विनष्टायां मायायां शिष्यते स्वयम् ॥ ३ ॥ अद्वयानंदरूपस्य सद्वयत्वं च दुःखिता ॥ बंधः प्रोक्तः स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥ ४ ॥ अविचारकृतो बंधो विचारेण निवर्तते ॥ तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ५ ॥ अहमित्यभिमंता यः कर्ताऽसौ तस्य साधनम् ॥ मनस्तस्य क्रिये अंतर्बहिर्वृत्ती क्रमोत्थिते ॥ ६ ॥ अं-

---

ष्ठितानां कर्मणां ब्रह्मणि समर्पणरूपाद्भजनात् स्वविचारं स्वस्यात्मनो ब्रह्मरूपस्य ज्ञानसाधनं श्रवणादिकं चिकीर्षति कर्तुमिच्छति ततः स्वविचारेण विचारजनितज्ञानेन मायायां स्वस्याद्वयानंदत्वादिरूपाच्छादिकायामज्ञानाविद्यादिशब्दवाच्यायां विनष्टायां निवृत्तायां स्वयमद्वयानंदपूर्णः परमात्मैवावशिष्यते ॥ ३ ॥ ननु तद् ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते इत्यादिश्रुतिभिर्बंधनिवृत्तिलक्षणस्य मोक्षस्य ज्ञानफलत्वाभिधानात् परमात्मावशेषणस्य तत्फलताभिधानमनुपपन्नमित्याशंक्याह अद्वयानंदेति अद्वितीये ब्रह्मणि वास्तवस्य बंधस्य मोक्षस्य वा दुर्निरूपत्वाद्दुःखित्वादिभ्रम एव बंधः स्वरूपावस्थितिलक्षणा तन्निवृत्तिरेव मोक्षः अतो न श्रुतिविरोध इति भावः ॥ ४ ॥ ननु कर्मणैव हि संसिद्धिमास्थिता जनकादय इति स्मृतेर्मोक्षस्य कर्मसाधनत्वावगमात् किमनेन विचारजनितज्ञानेनेत्यत आह अविचारेति विचारप्रागभावोपलक्षिताज्ञानकृतस्य बंधस्य न विचारजन्यज्ञानादन्यतो निवृत्तिरुपपद्यते उदाहृतस्मृतौ च संसिद्धिशब्देन चित्तशुद्धिरेवाभिधीयते न मोक्ष इति भावः विचारेण बंधनिवृत्तिरुक्ता किंविषयेण विचारेणेत्यत आह तस्मादिति तत्त्वसाक्षात्कारपर्यंतं सर्वदा विचारं कुर्यादित्यर्थः ॥ ५ ॥ तत्र जीवस्वरूपं तावन्निरूपयति अहमिति यश्चिदाभासविशिष्टोऽहंकारो व्यवहारदशायां देहादावहमित्यभिमन्यते असौ कर्ता कर्तृत्वादिधर्मविशिष्टो जीव इत्यर्थः तस्य किं करणमित्यपेक्षायामाह तस्येति कामादिवृत्तिमानंतःकरणभागो मनः करणस्य क्रियाव्याप्तत्वात्तत्क्रियां दर्शयति तस्य क्रियेति ॥ ६ ॥ अनयोः

तर्मुखाऽहमित्येषा वृत्तिः कर्तारमुल्लिखेत् ॥ बहिर्मुखेद-मित्येषा बाह्यं वस्त्विदमुल्लिखेत् ॥ ७॥ इदमो ये विशेषाः स्युर्गंधरूपरसादयः ॥ असांकर्येण तान् भिंद्याद् घ्राणा-दींद्रियपंचकम् ॥ ८ ॥ कर्त्तारं च क्रियां तद्व्द्यावृत्तविष-यानपि ॥ स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ॥९॥ ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम् ॥ इति भासयते सर्वं नृत्यशालास्थदीपवत् ॥ १० ॥ नृत्यशाला-स्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम् ॥ दीपयेदविशेषेण तदभावेऽपि दीप्यते ॥ ११ ॥ अहंकारं धियं साक्षी वि-षयानपि भासयेत् ॥ अहंकाराद्यभावेऽपि स्वयं भात्येव

स्वरूपं विषयं च विविच्य दर्शयति अंतर्मुखेति इदमित्येषेति बहिर्वृत्तेः स्वरूपाभिनयः अवशिष्टेन विषयप्रदर्शनं बाह्यं देहाद्बहिर्वर्तमानमिदंतया निर्दिश्यमानं वस्तूल्लिखेद् विषयीकुर्यादित्यर्थः ॥ ७ ॥ ननु मनसैव सर्वव्य-वहारसिद्धौ चक्षुरादिवैयर्थ्यं प्रसज्येतेत्याशंक्याह इदम इति मनसेदमिति सामान्यमात्रं गृह्यते न तु तद्विशेषो गंधादिरतस्तद्ग्रहणे घ्राणादिकमु-पयुज्यतइत्यर्थः ॥ ८ ॥ एवं सोपकरणं जीवस्वरूपं निरूप्य परमात्मानं निरूपयति कर्तारमिति कर्तारं पूर्वोक्तमहंकाररूपं क्रियामहमिदमात्मक-मनोवृत्तिरूपां व्यावृत्तविषयानपि व्यावृत्तान् अन्योन्यविलक्षणान् घ्राणा-दिग्राह्यान् गंधादीन् विषयांश्च एकयत्नेन युगपदेव यश्चिद्वपुश्चिद्रूप एव सन् स्फोरयेत् प्रकाशयेत् असावत्र वेदांतशास्त्रे साक्षीत्युच्यत इत्यर्थः ॥ ९ ॥ साक्षिण एकयत्नेन सर्वस्फोरकत्वमभिनीय दर्शयति ईक्षे शृणो-मीति ईक्षे रूपमहं पश्यामीत्येवंद्रष्टृदर्शनदृश्यलक्षणां त्रिपुटीमेकयत्नेन भासयेत् एवं शृणोमीत्यादावपि योज्यं युगपदविकारित्वे अनेकावभास-कत्वे दृष्टांतमाह नृत्यशालास्थदीपवदिति ॥ १० ॥ दृष्टांतं स्पष्टयति नृत्येति अविशेषेण प्रभ्वादिविषयविशेषावभासनाय वृद्ध्यादिविकारमंतरे-णेति यावत् ॥ ११ ॥ दार्ष्टांतिके योजयति अहंकारमिति सुषुप्त्यादाव-

पूर्ववत् ॥ १२ ॥ निरंतरं भासमाने कूटस्थे ज्ञप्तिरूपतः ॥ तद्भासा भास्यमानेयं बुद्धिर्नृत्यत्यनेकधा ॥ १३ ॥ अहंकारः प्रभुः सभ्या विषया नर्तकी मतिः ॥ तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासकः ॥ १४ ॥ स्वस्थानसंस्थितो दीपः सर्वतो भासयेद्यथा ॥ स्थिरस्थायी तथा साक्षी बहिरंतः प्रकाशयेत् ॥ १५ ॥ बहिरंतर्विभागोऽयं देहापेक्षो न साक्षिणि ॥ विषया बाह्यदेशस्था देहस्यांत-

---

हंकाराद्यभावेऽपि तत्साक्षितया भात्येवेत्यर्थः ॥ १२ ॥ ननु प्रकाशरूपाया बुद्धेरेवाहंकारादिसर्ववस्त्ववभासकत्वसंभवात् किं तदतिरिक्तसाक्षिकल्पनयेत्याशंक्याह निरंतरमिति कूटस्थे निर्विकारे साक्षिणि ज्ञप्तिरूपतः स्वप्रकाशचैतन्यतया निरंतरं भासमाने सदा स्फुरति सति इयं बुद्धिस्तद्भासा तस्य साक्षिणः स्वरूपचैतन्येन भासमाना प्रकाश्यमानैव अनेकधा घटोयं पटोयमित्यादिज्ञानाकारेण नृत्यति विक्रियते अयं भावः यतो बुद्धेर्विकारितया जडत्वात्स्वतः स्फूर्तिराहित्यमतस्तदतिरिक्तः सर्वावभासकः साक्ष्यभ्युपगंतव्य इति ॥ १३ ॥ उक्तमर्थं श्रोतृबुद्धिसौकर्याय नाटकत्वेन निरूपयति अहंकार इति विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वान्नृत्याभिमानिप्रभुतुल्यत्वमहंकारस्य परिसरवर्तित्वेऽपि विषयाणां तद्राहित्यात्सभ्यपुरुषसाम्यं नानाविधविकारवत्त्वान्नर्तकीसाम्यं धियः धीविक्रियाणामनुकूलव्यापारवत्त्वात्तालादिधारिसमानत्वमिंद्रियाणां एतत्सर्वावभासकत्वात्साक्षिणो दीपसादृश्यमस्तीति द्रष्टव्यम् ॥ १४ ॥ ननु साक्षिणोऽप्यहंकाराद्यवभासकत्वे तेन तेन संबंधापगमागमरूपविकारवत्त्वं स्यादित्याशंक्याह स्वस्थानेति दीपो यथा गमनादिविकारशून्यः स्वदेशेवस्थित एव सन् स्वसन्निहिताखिलपदार्थानवभासयति एवं साक्ष्यपीति भावः ॥ १५ ॥ ननु साक्षिणो बहिरंतरवभासकत्वाभिधानमनुपपन्नम् अपूर्वमनपरमनंतरमबाह्यमिति श्रुत्या तस्य बाह्यांतरविभागाभावाभिधानादित्याशंक्याह बहिरिति कस्य बाह्यत्वं कस्य

रहंकृतिः ॥ १६ ॥ अंतस्था धीः सहैवाक्षैर्बहिर्याति पुनः पुनः ॥ भास्यबुद्धिस्थचांचल्यं साक्षिण्यारोप्यते वृथा ॥ ॥ १७ ॥ गृहांतरगतः स्वल्पो गवाक्षादातपोऽचलः ॥ तत्र हस्ते नर्त्यमाने नृत्यतीवातपो यथा ॥ १८ ॥ निजऽस्थानास्थितः साक्षी बहिरंतर्गमागमौ ॥ अकुर्वन् बुद्धिचांचल्यात् करोतीव तथा तथा ॥ १९ ॥ न बाह्यो नांतरः साक्षी बुद्धेर्देशौ हि तावुभौ ॥ बुद्ध्याद्यशेषसंशांतौ यत्र भात्यस्ति तत्र सः ॥ २० ॥ देशः कोऽपि न भासेत यदि तर्ह्यस्त्वदेशभाक् ॥ सर्वदेशप्रक्लृप्त्यैव सर्वगत्वं न तु

चांतरत्वमित्यत आह विषया इति ॥ १६ ॥ ननु स्थिरस्थायी तथा साक्षी बहिरंतः प्रकाशयेद् इति अविकारिणः सतो बहिरंतरवभासकोक्तिरयुक्ता अहं घटं पश्यामीत्यत्र अहमित्यंतरहंकारसाक्षितया प्रथमतो भासकस्य अनंतरं घटं पश्यामीति घटाकारवृत्तिस्फुरणरूपेण बहिर्निर्गमानुभवादित्याशंक्याह अंतस्थेति दृष्टग्राहकत्वेन देहांतरावस्थिता बुद्धिः रूपादिग्रहणाय चक्षुरादिद्वारा भूयो भूयो निर्गच्छति तथा च तन्निष्ठं चांचल्यं तद्भासके साक्षिण्यारोप्यते अतो न वास्तवं साक्षिणश्चांचल्यमिति भावः ॥ १७ ॥ भासके भास्यचांचल्यारोपः क दृष्ट इत्याशंक्याह गृहांतरगत इति गवाक्षाद् गृहांतरगतः स्वल्पातपोऽचल एव वर्तते तत्र तस्मिन्नातपे पुरुषेण हस्ते नर्त्यमाने इतस्ततश्चाल्यमाने यथा आतपो नृत्यतीव चलतीव लक्ष्यते न तु चलतीत्यर्थः ॥ १८ ॥ दार्ष्टांतिकमाह निजस्थानेति ॥ १९ ॥ निजस्थानस्थित इत्यनेन किं बाह्यादिदेशस्थत्वमेवोच्यते नेत्याह न बाह्य इति तत्र हेतुमाह बुद्धेरिति तर्हि किं विवक्षितमित्यत आह बुद्ध्यादीति आदिशब्देनेंद्रियादयो गृह्यंते संशांतिशब्देन तत्प्रतीत्युपरातिर्विवक्षिता ॥ २० ॥ ननु सर्वव्यवहारोपरतौ देश एव नोपलभ्यते कुतस्तन्निष्ठत्वमुच्यतइत्याशंक्य स्वाभिप्रायमाविष्करोति देश इति देशादिकल्पनाधिष्ठानस्य स्वातिरिक्तदेशापेक्षा नास्तीति भावः ननु दे-

स्वतः ॥२१॥ अंतर्बहिर्वा सर्वं वा यं देशं परिकल्पयेत् ॥ बुद्धिस्तद्देशगः साक्षी तथा वस्तुषु योजयेत् ॥ २२ ॥ यद्यद्रूपादि कल्प्येत बुद्ध्या तत्तत्प्रकाशयन् ॥ तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥ २३ ॥ कथं ताहृङ्मया ग्राह्य इति चेन्मैव गृह्यताम् ॥ सर्वग्रहोपसंशांतौ स्वयमेवावशिष्यते ॥२४॥ न तत्र मानापेक्षाऽस्ति स्वप्रकाशस्वरूपतः ॥ तादृग्व्युत्पत्त्यपेक्षा चेच्छ्रुतिं पठ गुरोर्मुखात् ॥ २५ ॥ यदि सर्वग्रहत्यागोऽशक्यस्तर्हि धियं

---

शाद्यभावे शास्त्रे सर्वगतसर्वसाक्षित्वाद्युक्तिर्विरुध्येतेत्यत आह सर्वदेशेति स्वाभाविकमेव किं न स्यादित्यत आह न तु स्वत इति अद्वितीयत्वादसंगत्वाच्चेति भावः ॥ २१ ॥ सर्वगतत्ववत्सर्वसाक्षित्वमपि न वास्तवमित्याह अंतर्बहिरिति ॥ २२ ॥ तथा वस्तुषु योजयेदित्येतत्प्रपंचयति यद्यदिति तर्हि किं तस्य निजं रूपमित्यत आह स्वत इति ॥ २३ ॥ अवाङ्मनसगोचरत्वे मुमुक्षुणा न गृह्येतेति शंकते कथमिति अग्राह्यत्वमिष्टमेवेत्याह मैवेति नन्वात्मनो ग्राह्यत्वाभावे विचारेण विनष्टायां मायायां शिष्यते स्वयमित्युक्तं परमात्मावशेषणं न सिध्येदित्यत आह सर्वग्रहेति स्वात्मातिरिक्तस्य द्वैतस्य मिथ्यात्वनिश्चयेन तत्प्रतीत्युपशांतौ स्वात्मैव सत्यतयाऽवशिष्यतइति भावः ॥ २४ ॥ यद्यप्युक्तन्यायेन स्वात्मा परिशिष्यते तथाऽपि तदापरोक्ष्याय. किं चित्प्रमाणमपेक्षितमित्यत आह न तत्रेति तत्र हेतुमाह स्वप्रकाशेति नन्वात्मनः स्वप्रकाशतया स्वतः स्फूर्तौ मानं नापेक्ष्यते इति व्युत्पत्तिसिद्ध्ये मानमपेक्षितमित्याशंक्य श्रुतिरेवात्र प्रमाणमित्याह तादृगिति ॥ २५ ॥ एवमुत्तमाधिकारिण आत्मानुभवोपायमभिधाय मंदाधिकारिणस्तं दर्शयति यदीति बुद्धिशरणत्वे किं फलमित्यत आह तदधीन इति बुद्ध्या यद्यत्परिकल्प्यते बाह्यमांतरं

व्रज ॥ शरणं तदधीनोंतर्बहिर्वैषोऽनुभूयताम् ॥ २६ ॥
इति नाटकदीपः ॥ १० ॥

---

वा तस्य तस्य साक्षित्वेन तदधीनः परमात्मा तथैवानुभूयतामित्यर्थः ॥ २६ ॥ श्रीमद्विद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिते पंचदशीप्रकरणगतनाटकदीपव्याख्या समाप्ता ॥ १० ॥

॥ इति नाटकदीपः ॥

**श्रीगणेशाय नमः ॥ अथ ब्रह्मानंदे योगानंदः ॥ ब्रह्मानंदं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः ॥ ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ १ ॥ ब्रह्मवित्परमाप्नोति शोकं तरति**

---

श्रीगणेशाय नमः ॥ अथ योगानंदव्याख्याप्रारंभः ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ ब्रह्मानंदाभिधं ग्रंथं व्याकुर्वे बोधसिद्धये ॥ १ ॥ चिकीर्षितग्रंथस्य निष्प्रत्यूहपरिपूरणाय परिपंथिकल्मषनिवृत्तये अभिमतदेवतातत्त्वानुसंधानलक्षणमंगलमाचरन् श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयमाविष्कुर्वन् ग्रंथारंभं प्रतिजानीते ब्रह्मानंदमिति "निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ॥ ये मंदास्तेऽनुकंप्यंते सविशेषनिरूपणैः ; इतिसविशेषब्रह्मरूपाणां देवतानां तत्त्वस्य निर्विशेषब्रह्मरूपत्वाभिधानाद्ब्रह्मणश्चानंदो ब्रह्म" इत्यादिश्रुतिभिरानंदरूपताभिधानाद् ब्रह्मानंदमित्यानंदरूपस्य ब्रह्मणो वाचकशब्दप्रयोगेण यद्धि मनसा ध्यायति तद्वाचा वदतीति श्रुतिप्रोक्तन्यायेन ब्रह्मानुसंधानलक्षणं मंगलाचरणं सिद्धं ब्रह्मणश्च सर्ववेदांतप्रतिपाद्यत्वात् तत्प्रकरणरूपस्य अस्य ग्रंथस्यापि तदेव विषय इति ब्रह्मशब्दप्रयोगेण विषयश्चापि सूचितः ऐहिकेति उत्तरार्धेन अनिष्टनिवृत्तीष्टप्राप्तिरूपं प्रयोजनद्वयं मुखत एवोक्तं ब्रह्मानंदं ब्रह्म चासावानंदश्चेति ब्रह्मानंदः वाच्यवाचकयोरभेदोपचारात्तत्प्रतिपादको ग्रंथोऽपि ब्रह्मानंदस्तं प्रवक्ष्यामीति तस्मिन् प्रतिपाद्यप्रतिपादकरूपे ब्रह्मानंदे ज्ञातेऽवगते सति ऐहिकामुष्मिकानर्थव्रातम् ऐहिकानाम् इह लोके भवानां देहपुत्रादिष्वहंममाभिमानप्रयुक्तानाम् आध्यात्मिकादितापानाम् आमुष्मिकाणाममुष्मिन् परलोके भवानां च तेषामनर्थानां व्रातः समूहः तमशेषतः निःशेषं यथा भवति तथा हित्वा परित्यज्य सुखायते सुखरूपं ब्रह्मैव भवति ॥ १ ॥ ब्रह्मज्ञानस्य अनिष्टनिवृत्तीष्टप्राप्तिहेतुत्वे बहूनि श्रुतिस्मृतिवाक्यानि प्रमाणानि संतीति प्रदर्शयितुकामः तावद्ब्रह्मवि-

**चात्मवित् ॥ रसो ब्रह्मरसं लब्ध्वाऽऽनंदीभवति नान्यथा ॥ २ ॥ प्रतिष्ठां विंदते स्वस्मिन् यदा स्यादथ सोऽभयः ॥**

द्वाप्नोति परं श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयत्विति वाक्यद्वयमर्थतः पठति ब्रह्मविदिति ब्रह्म वेत्तीति ब्रह्मवित् परमुत्कृष्टमानंदरूपं ब्रह्म प्राप्नोति आत्मविद् भूमशब्दवाच्यं देशकालवस्तुपरिच्छेदशून्यम् आत्मानं वेत्तीत्यात्मवित् शोकं स्वसंसृष्टं पुरुषं शोचयतीति शोकस्तमोमूलः संसारस्तं तरति अतिक्रामति ननूदाहृततैत्तिरीयकश्रुतिवाक्ये ब्रह्मज्ञानस्य परप्राप्तिहेतुतैवावभासते नानंदप्राप्तिहेतुतेत्याशंक्य आनंदप्राप्तिहेतुत्वप्रतिपादनपरं रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनंदीभवतीति तदीयमेव वाक्यमर्थतः पठति रस इति सत्यं ज्ञानमनंतं ब्रह्म तस्माद्वा एतस्मादात्मन आकाशः संभूतः इति प्रकरणादौ ब्रह्मात्मशब्दाभ्यामभिहितो य आत्माऽसौ रसः सार आनंदरूप इत्यर्थः रसमानंदरूपं ब्रह्म लब्ध्वा ब्रह्माहमस्मीति ज्ञानेन प्राप्यानंदीभवतीति अपरिच्छिन्ननिरतिशयसुखवान् भवति उक्तमर्थं व्यतिरेकप्रदर्शनेन द्रढयति नान्यथेति अन्यथा ब्रह्मात्मैकत्वज्ञानं विहाय साधनांतरानुष्ठानेन नानंदीभवतीत्यर्थः ॥ २ ॥ एवमन्वयमुखेनेष्टप्राप्त्यनिष्टनिवृत्तिप्रतिपादनपराणि वाक्यानि प्रदर्श्य अन्वयव्यतिरेकाभ्यामनर्थनिवृत्तिप्रदर्शनपरं यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विंदतेऽथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुतेऽथ तस्य भयं भवतीति वाक्यद्वयमर्थतोऽनुक्रामति प्रतिष्ठामिति अस्यायमर्थः यदा यस्मिन्काले हीति विद्वत्प्रसिद्धिप्रदर्शनपरो निपातः एवेत्ययमेवानर्थनिवृत्त्युपायो नान्य इति नियमनार्थः एष मुमुक्षुः एतस्मिन्विद्वदनुभवगम्ये अदृश्ये इंद्रियागोचरे अनात्म्ये अनात्मीये स्वरूपतया स्वकीयत्वरहिते अनिरुक्ते निरुक्तं निर्वचनं शब्देनाभिधानं यत्र नास्ति तदनिरुक्तं तस्मिन्ननिलयने निलीयतेऽस्मिन्निति निलयनमाधारः स न विद्यते यस्य तस्मिन्स्वमहिम्नि स्थित इत्यर्थः अभयमद्वितीयं द्वितीयाद्वै भयं भवतीति श्रुतेर्भयशब्देन अत्रभयहेतुर्भेदो ल-

कुरुतेऽस्मिन्नंतरं चेदथ तस्य भयं भवेत् ॥ ३ ॥ वायुः सूर्यो वन्हिरिंद्रो मृत्युर्जन्मांतरेंतरम् ॥ कृत्वा धर्मं विजानंतोऽप्यस्माद्भीत्या चरंति हि ॥ ४ ॥ आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥ एतमेव तपेन्नैषा चिंता कर्माग्नि-

---

क्ष्यते न विद्यते भयं भेदो यथा भवति तथा प्रतिष्ठां प्रकर्षेण संशयविपर्ययराहित्येन स्थितिः ब्रह्माहमस्मीत्यवस्थानं प्रतिष्ठा तां विंदते गुरूपसत्त्यादिना श्रवणादिकं कृत्वा लभतेऽथ तदानीमेव स एवं विद्वानभयं भयरहितं मोक्षरूपमद्वितीयं ब्रह्म गतः प्राप्तो भवति ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः यदा यस्मिन्नेव काले एष पूर्वोक्तः एतस्मिन्नदृश्यत्वादिगुणके प्रत्यगभिन्ने ब्रह्मणि उदितिनिपात अपिशब्दार्थः अरमुदल्पमपि अंतरं भेदम् उपास्योपासकादिलक्षणं कुरुते पश्यति धातूनामनेकार्थत्वादथ तदानीमेव तस्य भेददर्शिनो भयं संसारप्रयुक्तं दुःखं भवति ॥ ३ ॥ भेददर्शिनां भयं भवतीत्येतद्दृढीकर्त्तुं ब्रह्मात्मैकत्वज्ञानरहितानां वाय्वादीनां भयप्रदर्शनपरं भीषास्माद्वातः पवते इत्यादिमंत्रमर्थतः पठति वायुरिति वाय्वादयो जगन्नियामकत्वेन प्रसिद्धाः पंचापि देवता अतीते जन्मनि धर्ममिष्टापूर्तादिलक्षणं विजानंतोऽपि ज्ञानपूर्वकमनुष्ठितवंतोऽपि अंतरं प्रत्यग्ब्रह्मणोर्भेदं कृत्वाऽस्माद्ब्रह्मणो भीत्याऽस्मिन्वाय्वादिजन्मनि चरंति स्वस्वव्यापारेषु सदा प्रवर्तते हिशब्देन भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचम इतिकठश्रुतौ यमेनोक्तां प्रसिद्धिं दर्शयति ॥ ४ ॥ ननु तरति शोकमात्मविदित्यादिषूदाहृतवाक्येषु ब्रह्मानंदज्ञानस्यानर्थनिवृत्तिहेतुत्वं स्पष्टं नावभासत इत्याशंक्य तथाप्रतिपादनपरं वाक्यमुदाहरति आनंदमिति राहोः शिर इत्यादिवद् भेदव्यपदेश औपचारिकः ब्रह्मणः स्वरूपभूतमानंदं विद्वानपरोक्षतया जानन् पुरुषः कुतश्चन कस्मादपि ऐहिकभयहेतोर्व्याघ्रादेः पारलौकिकभयहेतोः पापादेर्वा न बिभेति भयं न प्राप्नोति ननु तत्त्वविदः पापादेर्भयं नास्तीत्येतत्कुतोऽवगम्यत इत्याशंक्य तत्प्रतिपादकम् एतं ह वाव न तपति कि-

संभृता ॥ ५ ॥ एवं विद्वान्कर्मणी द्वे हित्वाऽऽत्मानं स्मरे-त्सदा ॥ कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥ ६ ॥ भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य-

---

महँ साधु नाकरवं किमहं पापमकरवमिति वाक्यमर्थतः पठति एतमिति कर्माग्निसंभृता पुण्यपापरूपकं कर्मैवाग्निः अकरणकरणाभ्यामग्निवत्संतापहे-तुत्वात् तेन संभृता संपादिता एषा पुण्यं नाकरवं कस्मात् पापं तु कृतवान् कुत इत्येवंरूपा चिंता एतमेव तत्त्वविदमेव न तपेत् न संतापयेत् ना-न्यमविद्वांसं स तु तया चिंतया सदा संतप्यत इत्यर्थः ॥ ५ ॥ पुण्यपा-पयोरतापकत्वे हेतुप्रदर्शनपरं स य एवं विद्वानेते आत्मानꣳस्पृणुते उभे ह्येवैष एते आत्मानꣳस्पृणुते इति वाक्यद्वयमर्थतः पठति एवमिति स यः कश्चित्पुमानेवमुक्तेन प्रकारेण स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यनेन प्रकारेण विद्वान् जानन् प्रवर्तते स एते पुण्यपापे हित्वेत्यध्या-हारः आत्मानं ब्रह्माभिन्नं प्रत्यञ्चं स्पृणुते प्रीणयति सदा स्मरेदित्यर्थः यतः पुण्यपापयोर्मिथ्यात्वानुसंधानेन हानं कृतम् अतस्तद्विषया चिंतैव नास्ति कुतस्तन्निमित्तकस्ताप इत्याभिप्रायः किंच एष विद्वानेते पूर्वोक्ते उभे पुण्यपापरूपे कर्मणी देहेंद्रियादिप्रवृत्त्या जनिते स्वात्मानुरूपेणैवेदं सर्वं यदयमात्मेत्यादिवाक्योक्तप्रकारेण पश्यति जानातीत्यर्थः अतः स्वा-त्माभिन्नत्वादप्यतापकत्वमिति भावः ॥ ६ ॥ ननु नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि इत्यादिशास्त्रसद्भावादनादौ संसारे बहुजन्मो-पार्जितेषु पुण्यापुण्यलक्षणेषु कर्मस्वसंख्यातेषु अप्रसिद्धत्वेनात्मतया अनुसंधानायोग्येषु सत्सु कथं तद्विषया चिंता न भवे-दित्याशंक्य सनिदानानां तेषां तत्त्वज्ञानेन विनाशित्वान्न चिंता-जनकत्वमित्याभिप्रायेण हृदयग्रंथ्यादिनिवृत्तिपरं मुंडकादिश्रुतिषु स्थितं वाक्यं पठति भिद्यत इति परावरे परमपि हिरण्यगर्भादिकं पदमव-रं निकृष्टं यस्मात्तस्मिन् परात्मनि दृष्टे साक्षात्कृते अस्य साक्षात्कारवतो हृदयस्य बुद्धेश्चिदात्मनश्च ग्रंथिवद् दृढसंश्लेषरूपत्वाद् ग्रंथिरन्योन्या-ध्यासो भिद्यते विदीर्यते विनश्यतीत्यर्थः सर्वसंशयाः आत्मा देहादिव्य-

कर्माणि तस्मिन्दृष्टे परावरे ॥ ७ ॥ तमेव विद्वानत्येति मृत्युं पंथा न चेतरः ॥ ज्ञात्वा देवं पाशहानिः क्षीणैः

---

तिरिक्तो न वा, व्यतिरिक्तोऽपि कर्तृत्वादिधर्मयोगी न वा, अकर्तृत्वेऽपि तस्य ब्रह्मणो भेदोऽस्ति न वा, अभेदेऽपि तज्ज्ञानं कर्मादिसहितं मुक्तिसाधनं केवलं वेत्यादयः छिद्यंते द्वैधीक्रियंते तत्त्वतः साक्षात्कृतस्य वस्तुनः संशयविपर्ययविषयत्वादर्शनादिति भावः कर्माणि संचितानि पुण्यापुण्यलक्षणानि क्षीयंते स्वनिदानाज्ञानविनाशेन विनश्यंतीति ॥ ७ ॥ ननु कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुतइत्यादिश्रुतेः कर्मणैव हि संसिद्धिमास्थिता जनकादयः 'यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्' एवं तपश्च विद्या च संयुक्तं भेषजं महदित्यादिस्मृतेश्च केवलस्य वा ज्ञानसमुच्चितस्य वा कर्मणो मुक्तिहेतुत्वं स्यादित्याशंक्य उदाहृतवाक्यस्थलेऽपि तपःशब्दस्य पापनिवृत्तिपरत्वादाङ्शब्दस्य च पापेनिवृत्तिपरत्वात् संसिद्धिशब्देन च ज्ञानसाधनचित्तशुद्ध्याभिधानाद्विद्याशब्देन चोपासनाया विवक्षितत्वान्न कर्मणां मुक्तिसाधनत्वमित्यभिप्रायेण साधनांतरनिषेधपरं तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथाविद्यतेऽयनायेति श्वेताश्वतरवाक्यमर्थतः पठति तमेवेति तं पूर्वोक्तं परमात्मानं विद्वानेव मृत्युं संसारमत्येति अतिक्रामति इतरः समुच्चयरूपः केवलः कर्मरूपो वा पंथा मार्गो मोक्षोपायो न च नैव विद्यते ननूदाहृतासु श्रुतिष्वन्वयव्यतिरेकाभ्यामैहिकानिष्टनिवृत्तिरेव प्राधान्येनावभासते नामुष्मिकीत्याशंक्यामुष्मिकस्यानिष्टस्य भाविजन्मपूर्वकत्वात्तस्य सनिदानस्याभावप्रतिपादकं ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिरिति श्वेताश्वतरवाक्यमर्थतः पठति ज्ञात्वेति देवं स्वप्रकाशं प्रत्यगभिन्नं ब्रह्म ज्ञात्वा परोक्षतयाऽनुभूय स्थितस्य कामक्रोधादीनां सर्वेषां पाशानां हानिर्भवति तैः पाशशब्दाभिधेयैः रागादिभिः क्लेशैः क्षीणैर्नष्टैर्भाविजन्महेतुकर्मारंभा-

क्लेशैर्न जन्मभाक् ॥ ८ ॥ देवं मत्वा हर्षशोकौ जहात्यत्रै-व धैर्यवान् ॥ नैनं कृताकृते पुण्यपापे तापयतः क चित् ॥ ९ ॥ इत्यादिश्रुतयो बह्व्यः पुराणैः स्मृतिभिः सह ॥ ब्रह्मज्ञा-नेऽनर्थहानिमानंदं चाप्यघोषयन् ॥ १० ॥ आनंदस्त्रिवि-धो ब्रह्मानंदो विद्यासुखं तथा ॥ विषयानंद इत्यादौ ब्रह्मा-

---

योगाच्च तन्न प्राप्नोतीत्यर्थः ॥ ८ ॥ ननु शोकतरणादिफलं श्रूयते एव नानुभूयते ज्ञानिनामपीष्टानिष्टप्राप्तिपरिहारार्थं प्रवृत्तिदर्शनादित्याशं-क्य दृढापरोक्षज्ञानिनां तदभावप्रतिपादनपरम् अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति कठश्रुतिवाक्यमर्थतः पठति देवमि-ति धैर्यवान्ब्रह्मचर्यादिसाधनसंपन्नो देवं चिदानंदादिलक्षणं मत्वाऽवगम्याऽ-त्रैवास्मिन्नेव जन्मनि हर्षशोकौ जहाति एतमेव तपेन्नैषा चिंता कर्माग्नि-संभृतेत्युक्तार्थे विशेषप्रदर्शनपरं नैनं कृताकृते तपत इति याज्ञव-ल्क्यब्राह्मणवाक्यमर्थतः पठति नैनमिति पूर्वमकृतं पुण्यं कृतं च पापं तत्त्वविदस्तापहेतुर्न भवतीत्युक्तम् इह तु कृतमकृतं वा पुण्यं पापं वा तथा-विधं तापकं न भवतीत्युच्यत इति विशेषः तथा हि तापो नाम चित्तवि-कारविशेषः पुण्यं कृतं सद्धर्षलक्षणं विकारमुत्पादयति अकृतं विषादं पापं पुनस्तद्वैपरीत्येनाकृतं हर्षमुत्पादयति कृतं विषादं तत्त्वविदस्तु उभे अप्युभयविधविकारहेतू न कदा चिद्भवतः अविक्रियब्रह्मरूपत्वज्ञानादित्य-भिप्रायः ॥ ९ ॥ नन्वियंत्येव वाक्यानि प्रमाणानि नेत्याह इत्यादिश्रुतय इति आदिशब्देन इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः य एतद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवापि यंति तयो यो देवानां प्रत्यबुध्यत स एव तदभवत् निचाय्य तं मृत्युमुखात्प्रमुच्यत इत्याद्याः श्रुतयो गृह्यंते " सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि संपश्यन्नात्मया-जी वै स्वाराज्यमधिगच्छति क्षेत्रज्ञस्यात्मविज्ञानाद्विशुद्धिः परमा मता " इत्यादिपुराणस्मृतिवचनैः सह प्रमाणानीत्यर्थः उदाहृतानां श्रुतिस्मृति-पुराणवाक्यानां सर्वेषां तात्पर्यमाह ब्रह्मज्ञान इति ॥ १० ॥ ननु ब्रह्मानंद

नंदो विविच्यते ॥ ११ ॥ भृगुः पुत्रः पितुः श्रुत्वा वरुणाद्ब्रह्मलक्षणम् ॥ अन्नप्राणमनोबुद्धीस्त्यक्त्वाऽऽनंदं विजज्ञिवान् ॥ १२ ॥ आनंदादेव भूतानि जायंते तेन जीवनम् ॥ तेषां लयश्च तत्रातो ब्रह्मानंदो न संशयः ॥ १३ ॥ भूतोत्पत्तेः पुरा भूमा त्रिपुटी द्वैतवर्जनात् ॥ ज्ञातृज्ञानज्ञे-

---

इत्यानंदपदस्य ब्रह्मपदेन विशेषणादानंदांतरमस्तीत्यवगम्यते स कतिविधः कीदृशश्चानंद इत्याकांक्षायां तद्भेददर्शनपूर्वकं ब्रह्मानंदविवेचनं प्रतिजानीते आनंद इति ब्रह्मानंदो विद्यानंदो विषयानंद इत्यनेन प्रकारेणानंदस्य त्रैविध्यमवगंतव्यं तत्रेतरयोरानंदयोः ब्रह्मानंदमूलत्वादादावध्यायत्रयेण ब्रह्मानंदो विभज्य प्रदर्श्यत इत्यर्थः ॥ ११ ॥ तत्रादौ तावत्तैत्तिरीयश्रुतिपर्यालोचनायामानंदरूपं ब्रह्म अवगम्यते इत्यभिप्रायेण भृगुवल्ल्या अर्थं संक्षेपेण दर्शयति भृगुरिति भृगुनामकः पुत्रः पितुर्वरुणाख्याद्ब्रह्मलक्षणं "यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति तद्विजिज्ञासस्व तद्ब्रह्म" इत्येवंरूपं श्रुत्वा अन्नमयादिकोशेषु तल्लक्षणासंभवेन तेषामब्रह्मत्वं निश्चित्यानंदं आनंदमयकोशे पंचमावयवत्वेन ब्रह्मपुच्छं प्रतिष्ठा इति श्रुतं बिंबभूतमानंदं ब्रह्मलक्षणयोजनया ब्रह्मत्वेन ज्ञातवानित्यर्थः ॥ १२ ॥ कथमानंदे तल्लक्षणं योजितवानित्याशंक्य तद्योजनाप्रकारदर्शनपरम् "आनंदाद्ध्येव खल्विमानि भूतानि जायंते आनंदेन जातानि जीवंति आनंदं प्रयंत्यभिसंविशंति" इतिवाक्यमर्थतः पठति आनंदादिति ग्राम्यधर्मनिमित्तकानंदादेव भूतानि प्राणिनो जायंते उत्पद्यंते तेन विषयभोगादिनिमित्तकेनानंदेन जीवनं प्राप्नुवंति तेषां प्राणिनां लयश्च तत्र तस्मिन् सुषुप्तिकालिके स्वस्वरूपभूते आनंदे एव भवति सुषुप्तावानंदातिरेकेण कस्याप्यनुभवाभावादत आनंदो ब्रह्मैव सर्वानुभवासिद्धत्वान्नात्र संशयः कर्तव्य इति भावः ॥ १३ ॥ एवं तैत्तिरीयश्रुतिपर्यालोचनया ब्रह्मण आनंदरूपतां प्रदर्श्य छांदोग्यश्रुतिपर्यालोचनयाऽपि तां दिदर्शयिषुः सनत्कुमारनारदसंवादरूपे सप्तमाध्याये स्थि-

**यरूपा त्रिपुटी प्रलये हि नो ॥ १४ ॥ विज्ञानमय उत्पन्नो ज्ञाता ज्ञानं मनोमयः ॥ ज्ञेयाः शब्दादयो नैतत्त्रयमुत्पत्तितः पुरा ॥ १५ ॥ त्रयाभावे तु निर्द्वैतः पूर्ण एवानुभूयते ॥ समाधिसुप्तिमूर्छासु पूर्णः सृष्टेः पुरा तथा ॥ १६ ॥ यो भूमा स सुखं नाल्पे सुखं त्रेधा विभेदिनि॥ सनत्कुमारः**

---

तस्य भूमरूपब्रह्मप्रतिपादकस्य " यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा " इत्यादिवाक्यस्यार्थं संक्षेपेणाह भूतोत्पत्तेरिति भूतानामाकाशादीनां तत्कार्याणां जरायुजांडजादीनां चोत्पत्तेः पूर्वं त्रिपुटीद्वैतवर्जनात् त्रयाणां ज्ञातृज्ञानज्ञेयरूपाणां पुटानामाकाराणां समाहारस्त्रिपुटी सैव द्वैतं तस्य वर्जनमभावस्तस्माद्भूमा देशतः कालतो वस्तुतो वा परिच्छेदशून्यः परमात्मा भावानयने द्रव्यानयनम् इतिन्यायाद्भूमैवासीदित्यध्याहारः तदेव द्वैतवर्जनमुपपादयति ज्ञातृज्ञानेति वक्ष्यमाणज्ञात्रादिरूपा त्रिपुटी प्रलयकाले नास्तीत्येतत्सर्ववेदांतसंमतमिति हिशब्दं प्रयुंजानस्यायमभिप्रायः ॥ १४ ॥ इदानीं ज्ञात्रादिस्वरूपं दर्शयति विज्ञानमय इति परमात्मन उत्पन्नो बुद्ध्युपाधिको जीवो विज्ञानमयो ज्ञाता मनोमयः मनसि प्रतिबिंबितं मनोमयशब्दवाच्यं चैतन्यं ज्ञानं शब्दस्पर्शादयो ज्ञेयाः प्रसिद्धाः इदं त्रयं कार्यत्वादुत्पत्तेः पुरा कारणव्यतिरेकेण नास्तीत्यर्थः ॥ १५ ॥ फलितमाह त्रयेति ज्ञात्रादित्रयाभावे निर्द्वैतः द्वैतरहितः पूर्ण एवात्माऽनुभूयते कुत्रानुभूयतइत्यत आह समाधीति विद्वदनुभवप्रदर्शनाय समाधिग्रहणं सर्वानुभवद्योतनाय सुषुप्तिमूर्छयोरुदाहरणं सुषुप्त्याद्युत्थितस्य द्वैतादर्शनस्मरणान्यथानुपपत्त्या निर्द्वैतस्य तदनुभवितुः सिद्धिरिति भावः भवतु सुषुप्त्यादावद्वैतसिद्धिः प्रकृते किमायातमित्यत आह पूर्ण इति यथा सुषुप्त्यादौ परिच्छेदकाभावात्पूर्णः तथा सृष्टेः पुराऽपि तदभावात्पूर्ण इत्यर्थः ॥ १६ ॥ अस्तु ब्रह्मणः पूर्णत्वमानंदरूपत्वे किमायातमित्याशंक्य अन्वयव्यतिरेकाभ्यां भूम्नः सुखरूपत्वप्रदर्शनपरं यो वै भूमा तत्सुखं नाल्पे सुखमस्तीतिवाक्यमर्थतोऽनुक्रामति यो

प्राहैवं नारदायातिशोकिने ॥ १७ ॥ सपुराणान् पंच वेदान् शास्त्राणि विविधानि च ॥ ज्ञात्वाऽप्यनात्मवित्त्वेन नारदोऽतिशुशोच ह ॥१८॥ वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ॥ पश्चात्त्वभ्यासविस्मारभंगगर्वैश्च शोकिता ॥१९॥ सोऽहं विद्वन्प्रशोचामि शोकपारं नयात्र माम् ॥ इत्युक्तः सुखमेवास्य पारमित्यभ्यधादृषिः ॥ २० ॥ सुखं वैषयिकं शोकसहस्रेणावृतत्वतः ॥ दुःखमेवेति मत्वाऽऽह ना-

---

भूमेति यः पूर्वोक्तो भूमा स सुखरूप एव अद्वितीये दुःखहेतोरभावाद् अल्पे परिच्छिन्ने तस्यैव विवरणं त्रेधा विभेदिनीति हेतुगर्भं विशेषणं सुखं तत्र न विद्यते इत्यर्थः एवं कस्मै केनाभिहितमित्यत आह सनत्कुमार इति नारदस्य शिष्यत्वे कारणमाह अतिशोकिनइति अतिशयितः अधिकः शोकोऽस्यास्तीत्यातिशोकी तस्मै ॥ १७ ॥ तस्यातिशोकित्वे हेतुमाह सपुराणानिति नारदः पुराणैः सह वर्तंते इति सपुराणाः पंच वेदास्तान्विविधानि च शास्त्राणि विदित्वाऽप्यात्मज्ञानरहितत्वेनातिशयेन शोकं प्राप्तः ॥१८॥ ननु वेदशास्त्रविषयकज्ञानस्य शोकऽनिवर्तकत्वेन प्रसिद्धस्य कथमतिशोकहेतुत्वमित्यत आह वेदाभ्यासादिति तापत्रयेण आध्यात्मिकादिलक्षणेनैव शोकिता शोकोऽऽस्यास्तीति शोकी तस्य भावस्तत्ता आसीदित्यध्याहारः पश्चात्त्विति तुशब्दो विशेषद्योतनार्थः अभ्यासः पाठाद्यावर्तनं विस्मारः पठितस्य विस्मरणं भंगः स्वतोऽधिकेन तिरस्कारः गर्वो न्यूनदर्शनेन स्वाधिक्यबुद्धिः एतैः कारणैः शोकित्वम् ॥ १९ ॥ नन्वेवं सर्वज्ञस्यापि नारदस्यातिशोकित्वं जातमिति कुतोऽवगम्यतइत्याशंक्य सोहं भगवः शोचामीति तदीयादेव वाक्यादवगऽतमित्यभिप्रेत्य तं मा भगवान् शोकस्य पारं तारयत्विति तन्निवृत्त्युपाये तेन पृष्टे सति सनत्कुमारो भूमशब्दवाच्यं सुखरूपं ब्रह्मैव ज्ञायमानं शोकनिवृत्त्युपाय इति सुखं त्वेव जिज्ञासितव्यमित्यारभ्योत्तरग्रंथसंदर्भेणोक्तवानित्याह सोऽहमिति ॥ २० ॥ ननु स्रगादिजन्येषु सुखेषु बहुषु सत्सु

ल्पेऽस्ति सुखमित्यसौ ॥ २१ ॥ ननु द्वैते सुखं मा भूदद्वै-
तेऽप्यस्ति नो सुखम् ॥ अस्ति चेदुपलभ्येत तथा च त्रि-
पुटी भवेत् ॥ २२ ॥ मास्त्वद्वैते सुखं किं तु सुखमद्वैतमेव
हि ॥ किं मानमिति चेन्नास्ति मानाकांक्षा स्वयंप्रभे ॥
॥ २३ ॥ स्वप्रभत्वे भवद्वाक्यं मानं यस्माद्भवानिदम् ॥
अद्वैतमभ्युपेत्यास्मिन्सुखं नास्तीति भाषते ॥ २४ ॥ ना-
भ्युपैम्यहमद्वैतं तद्वचोनूद्य दूषणम् ॥ वच्मीतिचेत्तदाब्रू-
हि किमासीद्द्वैततः पुरा ॥२५॥ किमद्वैतमुत द्वैतमन्यो वा को-

---

नाल्पे सुखमस्तीत्युक्तिरनुपपन्नेति चेन्न तेषां स्रगादीनां दुःखानुषंगेण विषसंपृक्तान्नवद्बहुदुःखरूपत्वस्य मुनिनाऽभिप्रेतत्वादित्याह सुखमिति ॥ २१ ॥ द्वैते सुखाभावमंगीकृत्य अद्वैतेऽपि तमाशंकते नन्विति तत्रानुपलब्धिं प्रमाणयति अस्ति चेदिति अद्वैते यदि सुखं विद्यते तर्हि विषयसुखादिवदुपलभ्येत यतो नोपलभ्यतेऽतो नास्तीत्यर्थः ननूपलभ्यते इत्याशंकमानं प्रत्याह तथेति अनुभवस्य अनुभवित्रनुभाव्यसापेक्षत्वाद् अद्वैतहानिरिति भावः ॥ २२ अद्वैतस्य सुखाधिकरणत्वनिषेधमंगीकरोति सिद्धांती मास्त्विति तत्र हेतुमाह किं त्विति हि यस्मात्कारणादद्वैतमेव सुखम् अतः सुखाधिकरणं न भवतीत्यर्थः अद्वैतं सुखमित्यत्र किं प्रमाणमित्याशंकानुवादपूर्वकं तस्य स्वप्रकाशत्वात्प्रमाणप्रश्न एवानुपपन्न इत्याह किं मानमिति ॥ २३ ॥ ननु स्वप्रकाशत्वेऽपि किं प्रमाणमित्याशंक्य त्वदीयमेव वचनं प्रमाणमित्याह स्वप्रभत्वे इति तदुपपादयति यस्मादिति यतः कारणाद्भवता प्रमाणैनरपेक्ष्येण अद्वैतमभ्युपेत्य सुखमेवाक्षिप्यते अतः स्वप्रभत्वमित्यर्थः २४ ॥ न मया द्वैतमभ्युपगम्यते किं तु त्वदुक्तमद्वैतमनूद्य दूष्यतेऽतो नोक्तसिद्धिरिति शंकते नाभ्युपैमीति विकल्पासहत्वादद्वैतानभ्युपगमोऽनुपपन्न इति मन्वानः पृच्छति तदेति ॥२५॥ किंशब्दसूचितं विकल्पं दर्शयति किमद्वैतमिति तृतीयं पक्षं निराकरोति अंतिम इति द्वैताद्वैतविलक्षणस्य रूपस्य लोकेऽदर्शनादिति भावः द्वि-

टिरंतिमः॥ अप्रसिद्धो न द्वितीयोऽनुत्पत्तेःशिष्यतेऽग्रिमः ॥ ॥२६॥ अद्वैतसिद्धिर्युक्त्यैव नानुभूत्यति चेद्वद ॥ निर्दृष्टांता सदृष्टांता वा कोट्यंतरमत्र नो॥ २७ ॥ नानुभूतिर्न दृष्टांत इति युक्तिस्तु शोभते ॥ सदृष्टांतत्वपक्षे तु दृष्टांतं वद मे मतम् ॥ २८ ॥ अद्वैतः प्रलयो द्वैतानुपलंभेन सुप्तिवत् ॥ इति चेत्सुप्तिरद्वैतेत्यत्र दृष्टांतमीरय ॥ २९ ॥ दृष्टांतः परसुप्तिश्चेदहो ते कौशलं महत् ॥ यः स्वसुप्तिं न वेत्यस्य

---

तीयं पक्षं निराकरोति न द्वितीय इति तत्र हेतुमाह अनुत्पत्तेरिति द्वैतस्य तदानीमनुत्पन्नत्वादिति भावः अतः प्रथमः पक्षः परिशिष्यत इत्याह शिष्यते इति ॥ २६ ॥ ननूक्तेन प्रकारेणाद्वैतं युक्त्यैव सिध्यति नानुभवेनेति चोदयति अद्वैतेति अद्वैतसिद्धिर्युक्त्यैवेत्युक्तं विकल्पासहत्वादनुपपन्नमिति मन्वानो युक्तिं विकल्पयति सिद्धांती वदेति विकल्पस्य न्यूनतां निराकरोति कोट्यंतरमिति ॥ २७ ॥ प्रथमं पक्षं सोपहासं निराकरोति नानुभूतिरिति अद्वैतसिद्धिर्युक्त्यैवेति वदता अनुभूतिस्तावन्नाभ्युपेयते युक्तिस्तु दृष्टांतप्रदर्शनमंतरेण न किंचित्साधयति अतो न दृष्टांत इत्युक्तिरयुक्तेति भावः द्वितीये विकल्पे उभयवादिसंप्रतिपन्नो दृष्टांतो वक्तव्य इत्याह सदृष्टांतेति ॥ २८ ॥ तर्हि दृष्टांतेनैवाद्वैतं साधयामीति शंकते पूर्ववादी अद्वैत इति प्रलयो द्वैतरहितो भवितुमर्हति द्वैतानुपलब्धिमत्त्वाद् यो यो द्वैतानुपलब्धिमान्स स द्वैतरहितः यथा स्वाप इति नन्वेवं साधयतस्तव स्वसुप्तिर्दृष्टांतः परसुप्तिर्वा आद्ये तस्याः परं प्रत्यसिद्धत्वेन तत्सिद्धये दृष्टांतांतरं वक्तव्यमित्याह सुप्तिरिति ॥ २९ ॥ ननु तस्याः परसुप्तिरेव दृष्टांत इति द्वितीयं विकल्पमाशंकते दृष्टांत इति परसुप्तेस्तवाप्रसिद्धत्वेन त्वया दृष्टांतीकरणमनुपपन्नमिति सोपहासमाह सिद्धांती अहो इति यो भवान् सुप्तेरनुभवगम्यत्वानंगीकारेण स्वसुप्तिमपि न वेत्ति अस्य तव परसुप्तौ का कथा परसुप्तिज्ञानं न भवतीति किमु वक्त-

परसुप्तौ तु का कथा ॥ ३० ॥ निश्चेष्टत्वात्परः सुप्तो यथाऽहमिति चेत्तदा ॥उदाहर्तुः सुषुप्तेस्ते स्वप्रभत्वं बलाद्भवेत् ॥ ३१ ॥ नेंद्रियाणि न दृष्टांतस्तथाऽप्यंगीकरोषि ताम् ॥ इदमेव स्वप्रभत्वं यद्भानं साधनैर्विना ॥ ३२ ॥ स्तामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ॥ शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ॥ ३३ ॥ अंधः सन्नप्यनंधः स्याद्विद्धोऽविद्धोथ रोग्यपि ॥ अरोगीति श्रुतिः प्राह तच्च

---

च्यमिति भावः ॥ ३० ॥ नन्वनुमानात्परसुप्तिसिद्धिरिति शंकते निश्चेष्टेति विमतः परः सुप्तो भवितुमर्हति प्राणादिमत्त्वे सति निश्चेष्टत्वान्मद्वदित्यनुमानादित्यर्थः एवं तर्हि तव सुप्तेः स्वप्रकाशत्वं परिशिष्यत इत्याह सिद्धांती तदेति तदा तर्हि मां प्रति सुषुप्तिमुदाहर्तुर्दृष्टांतीकर्तुस्ते तव सुप्तेः स्वप्रभत्वं स्वप्रकाशत्वं बलात्सुप्त्युदाहरणसामर्थ्यादेव भवेत् ॥ ३१ ॥ कथं बलाद्भवतीत्याशंक्याह नेंद्रियाणीति सुप्तिग्राहकाणींद्रियाणि न संति तेषां स्वकारणे विलीनत्वाद् दृष्टांतश्च संप्रतिपन्नो नास्ति परसुप्तेरप्रसिद्धत्वस्योक्तत्वात्तथापि तां सुप्तिमंगीकरोषि एवं च सति साधनैर्विना ज्ञानसाधनमंतरेणापि भानं प्रकाशनमिति यदिदमेव स्वप्रभत्वं सुषुप्त्या इत्यर्थः अत्रायं प्रयोगः विमता सुप्तिः स्वप्रकाशा असत्स्वपि ज्ञानसाधनेषु प्रकाशमानत्वात् सांख्याभिमतात्मवत्प्राभाकराभिमतसंवेदनवत् शाक्याभिमतस्वात्मवदित्यर्थः ॥ ३२ ॥ इत्थं प्रलयस्य दृष्टांतत्वेनोदाहृतायाः सुषुप्तेरद्वैतत्वं स्वप्रभत्वं च प्रसाध्य तत्र सुखप्रसाधनाय पूर्वपक्षिण आकांक्षामुत्थापयति स्तामिति सुखप्रतियोगिनो दुःखस्य तदानीमसत्त्वात्सुखमेव परिशिष्यत इत्याह शृण्विति सुखदुःखयोः प्रकाशतमसोरिव परस्परविरोधित्वाद् दुःखाभावे सुखमेवाभ्युपेयमिति भावः ॥ ३३ ॥ सुप्तौ दुःखाभावे किं मानमित्याकांक्षायां श्रुत्यनुभवावित्याह अंध इति तस्माद्वा एतं सेतुं तीर्त्वाऽधः सन्ननंधो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवति तद्यद्यपीदं भगवः

सर्वे जना विदुः ॥ ३४ ॥ न दुःखाभावमात्रेण सुखं लो-
ष्टशिलादिषु ॥ द्वयाभावस्य दृष्टत्वादिति चेद्विषमं वचः
॥३५॥ मुखदैन्यविकासाभ्यां परदुःखसुखोहनम् ॥ दैन्या-
द्यभावतो लोष्टे दुःखाद्यूहो न संभवेत् ॥३६॥ स्वकीये सुख-
दुखे तु नोहनीये ततस्तयोः ॥ भावो वेद्योनुभूत्यैव तद-
भावोपि नान्यतः ॥ ३७ ॥ तथा सति स्वसुप्तौ च दुःखा-
भावोनुभूतितः ॥ विरोधिदुःखराहित्यात्सुखं निर्विघ्नमिष्य-

---

शरीरमंधं भवत्यनंधः स भवतीत्यादिश्रुतिर्देहाभिमानप्रयुक्तानंधत्वादीन् दोषान् सुप्तौ निवारयति व्याध्यादिना पीड्यमानस्यापि सुप्तौ तद्दुःखानुभवो नास्तीत्येतत्सर्वजनप्रसिद्धं चेत्यर्थः ॥ ३४ ॥ ननु यत्र दुःखाभावस्तत्र सुखमित्यस्याः व्याप्तेर्लोष्टादौ व्यभिचार इति शंकते न दुःखेति दुःखाभावमात्रेण सुखं कल्पयितुं न शक्यते लोष्टशिलादिषु द्वयाभावस्य सुखदुःखयोरभावस्य दर्शनादित्यर्थः दृष्टांतदार्ष्टांतिकयोर्वैषम्यान्मैवमिति परिहरति विषममिति वचो दृष्टांतवचनं विषमं दार्ष्टांतिकाऽननुसारीत्यर्थः ॥३५॥ दृष्टांतस्याननुकूलत्वमेवोपपादयति मुखेति अन्यनिष्ठयोः सुखदुःखयोरूहनं यथाक्रमं मुखदैन्यविकासाभ्यां लिंगाभ्यां कर्तव्यम् अयं दुःखी विषण्णवदनत्वात्संप्रतिपन्नवत् अयं सुखी प्रसन्नवदनत्वात्संप्रतिपन्नवदित्यर्थः भवत्वेवं लोके प्रकृते किमायातामित्यत आह दैन्येति लोष्टादौ मुखदैन्यादिलिंगाभावात्सुखदुःखयोरूहनमेव न संभवति अतस्तत्र दुःखाभावोपि न निश्चेतुं शक्यत इत्यर्थः॥३६॥इदानीं परकीयसुखदुःखाभ्यां स्वकीयसुखदुःखयोर्वैषम्यं दर्शयति स्वकीय इति स्वनिष्ठयोस्तु सुखदुःखयोरनुभवसिद्धत्वाद् नानुमेयत्वं यतस्ततस्तयोः सुखदुःखयोर्भावः सद्भावो यथानुभूत्यैव वेद्यः प्रत्यक्षेणावगम्यते तथा तदभावोपि तयोः सुखदुःखयोरभावोपि अन्यतः अन्यस्मादनुमानादेर्नावगम्यते किं तु प्रत्यक्षेणैवेत्यर्थः ॥ ३७ ॥ फलितमाह तथेति तथा सति स्वकीयस्य सुखादेरनुभवगम्यत्वे सति स्वसुप्तौ स्वकीयसुषुप्तावपि विद्यमानो दुःखाभावोऽनुभवेनैव सिद्धः ततोपि किं

ताम् ॥ ३८ ॥ महत्तरप्रयासेन मृदुशय्यादिसाधनम् ॥
कुतः संपाद्यते सुप्तौ सुखं चेत्तत्र नो भवेत् ॥ ३९ ॥ दुः-
खनाशार्थमेवैतदिति चेद्रोगिणस्तथा ॥ भवत्वरोगिणस्त्वे-
तत्सुखायैवेति निश्चिनु ॥ ४० ॥ तर्हि साधनजन्यत्वात्सु-
खं वैषयिकं भवेत् ॥ भवत्वेवात्र निद्रायाः पूर्वं शय्यासना-
दिजम् ॥ ४१ ॥ निद्रायां तु सुखं यत्तज्जन्यते केन हे-
तुना ॥ सुखाभिमुखधीरादौ पश्चान्मज्जेत्परे सुखे ॥ ४२ ॥

---

तत्राह विरोधीति सुप्तौ सुखविरोधिनो दुःखस्याभावान्निर्विघ्नं बाधरहितं सुखमिष्यतामभ्युपेयताम् ॥ ३८ ॥ शय्यादिसुखसाधनसंपादनान्यथानुपपत्त्यापि सुप्तौ सुखमस्तीत्यवगम्यत इत्याह तत्र तस्यां सुप्तौ सुखं न भवेच्चेत् महत्तरप्रयासेन बहुविधवित्तव्ययशरीरपीडनादिना मृदुल शय्यादि कशिपुमंचादि साधनं सुखसाधनं कुतः कस्मात्कारणात्संपाद्यते न कुतोपीत्यर्थः ॥ ३९ ॥ अर्थापत्तेरन्यथोपपत्तिं शंकते दुःखेति एतच्छय्यादिसाधनसंपादनं दुःखनिवृत्तिफलकं न नियतमिति परिहरति रोगिण इति रोगादिदुःखे सति तन्निवृत्तये तद्भवतु तदभावे तु निवर्त्यदुःखाभावात्तत्संपादनं सुखायैवेत्यवगम्यत इत्यर्थः ॥ ४० ॥ ननु सौषुप्तसुखस्य शय्यादिसाधनजन्यत्वे आत्मस्वरूपत्वं व्याहन्येतेति शंकते तर्हीति किं निद्रागमनात्पूर्वकालीनस्य विषयजन्यत्वमुच्यते उत निद्राकालीनस्येति विकल्प्याद्यमंगीकरोति भवत्विति ॥ ४१ ॥ द्वितीयं निराकरोति निद्रायामिति सुषुप्तौ शय्याद्यनुसंधानाभावात्तज्जन्यत्वं तस्य न संभवतीति भावः ननु निद्रायामजन्यं सुखं यद्यस्ति तर्हि तद्विषयसुखवत्कुतो नानुभूयत इत्याशंक्यानुभवितुस्तदा तस्मिन् निमग्नत्वान्न विषयसुखवत्तदनुभव इत्यभिप्रायेणाह सुखेति आदौ निद्रायाः पूर्वस्मिन्काले जीवः सुखाभिमुखधीः शय्यादिजन्यसुखाभिमुखा धीर्बुद्धिर्यस्य स तथोक्तस्तथाविधो भवति पश्चान्निद्राकाले परे उत्कृष्टे सुखे स्वरूपसुखे मज्जेद्विलीनो भवेत् ॥ ४२ ॥ संक्षेपेणोक्तमर्थं श्लोकत्रयेण प्रपंचयति जाग्रद्व्यावृत्तिभिरित्या-

जाग्रद्व्यावृत्तिभिः शांतो विश्रम्याथ विरोधिनि ॥ अपनीते स्वस्थचित्तोऽनुभवेद्विषये सुखम् ॥ ४३ ॥ आत्माभिमुखधीवृत्तौ स्वानंदः प्रतिबिंबति ॥ अनुभूयैनमत्रापि त्रिपुट्या श्रांतिमाप्नुयात् ॥ ४४ ॥ तच्छ्रमस्यापनुत्त्यर्थं जीवो धावेत्परात्मनि ॥ तेनैक्यं प्राप्य तत्रत्यो ब्रह्मानंदः स्वयं भवेत् ॥ ४५ ॥ दृष्टांताः शकुनिः श्येनः कुमारश्च महानृपः ॥ महाब्राह्मण इत्येते सुप्त्यानंदे श्रुतीरिताः ॥ ४६ ॥ शकुनिः सूत्रबद्धः सन् दिक्षु व्यापत्यविश्रमम् ॥ अल-

---

दिना जीवो जाग्रद्व्यावृत्तिभिर्जागरणावस्थायां क्रियमाणैर्व्यापारविशेषैः श्रांतो विश्रम्य मृदुशय्यादौ शयनं कृत्वाऽथानंतरं विरोधिनि व्यापारजनिते दुःखेऽपनीते निवारिते सति स्वस्थचित्तोऽव्याकुलमना भूत्वा शय्यादौ विषये जायमानं सुखमनुभवेत्साक्षात् कुर्यात् ॥ ४३ ॥ विषयसुखं च कीदृशमित्याकांक्षायां तत्स्वरूपं दर्शयन् परे सुखे निमज्जननिमित्तत्वेन तदनुभवेपि श्रमं दर्शयति आत्मेति अनागतविषयसंपादनादिना दुःखमनुभूय तन्निवृत्तये मृदुशय्यादौ शयानस्य बुद्धिरंतर्मुखा भवति तस्यां च बुद्धिवृत्तौ स्वरूपभूत आनंदः स्वाभिमुखे दर्पणे मुखमिव प्रतिबिंबति एष हि विषयानंदः अत्राप्यस्यामपि वेलायामेनं विषयानंदमनुभूयानुभवित्रनुभवानुभाव्यलक्षणया त्रिपुट्या श्रमं प्राप्नुयात् ॥ ४४ ॥ ततः किं तत्राह तच्छ्रमस्येति तस्य त्रिपुटीदर्शनजनितस्य श्रमस्यापनोदाय स एव जीवः परमात्मन्यानंदरूपे ब्रह्मणि धावेत् शीघ्रं गच्छेद् गत्वा च तेन ब्रह्मणैक्यं तादात्म्यं गत्वा ‘सता सोम्य तदा संपन्नो भवतीति’ श्रुतेः स्वयमपि तत्रत्यस्तस्यां सुषुप्तौ स्थितो ब्रह्मानंदो भवेत् ॥ ४५ ॥ अस्मिन्नुपपादिते सौषुप्तआनंदे शकुन्यादयो बहवो दृष्टांताः श्रुत्युक्ता विद्यंत इत्याह दृष्टांता इति शकुन्यादिभिः पंचभिर्दृष्टांतैः सुप्तावानंदोपपादनेन तत्र सुखं नास्तीति मतं निराकृतम् ॥ ४६ ॥ तत्र तावत्स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बंधनमे-

ब्ध्वा बंधनस्थानं हस्तस्तंभाद्युपाश्रयेत् ॥ ४७ ॥ जीवो-पाधिमनस्तद्वद्धर्माधर्मफलाप्तये ॥ स्वप्ने जाग्रति च भ्रांत्वा क्षीणे कर्मणि लीयते ॥ ४८ ॥ श्येनो वेगेन नीडैकलंपटः शयितुं व्रजेत् ॥ जीवः सुप्त्यै तथा धावेद्ब्रह्मानंदैकलंपटः ॥ ४९ ॥ अतिबालः स्तनं पीत्वा मृदुशय्यागतो हसन् ॥

---

वोपाश्रयते एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते प्राणबंधनं हि सोम्य मन इत्यस्य दृष्टांतदार्ष्टांतिकप्रतिपादनपरस्य छांदोग्यश्रुतिवाक्यस्यार्थं संक्षेपेण दर्शयति श्लोकद्वयेन शकुनिरिति हस्तादौ क्व चिदाधारसूत्रेण बद्धः शकुनिः पक्षी आहारादिग्रहणाय दिक्षु प्राच्यादिषु व्यापारं कृत्वा तत्र विश्रमं विश्रम्यतेऽस्मिन्निति विश्रमः आधारः तमलब्ध्वा बंधनस्थानं हस्तादिकमेव यथाश्रयेत् ॥ ४७ ॥ तथा जीवोपाधिभूतं मनोपि पुण्यापुण्यफलयोः सुखदुःखयोरनुभवाय स्वप्नजाग्रदवस्थयोस्तत्र तत्र भ्रांत्वा भोगप्रदे कर्मणि क्षीणे सति स्वोपादानेऽज्ञाने विलीयते तल्लये च तदुपहितो जीवः परमात्मैव भवतीत्यर्थः ॥ ४८ ॥ इदानीं श्येनदृष्टांतप्रपंचनपरस्य तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रांतः संहत्य पक्षौ स्वालयायैव ध्रियतएवमेवायं पुरुष एतस्माआनंदाय धावति यत्र सुप्तो न कं चन कामं कामयते न कं चन स्वप्नं पश्यतीत्यस्य बृहदारण्यकवाक्यस्यार्थं संक्षिप्याह श्येन इति यथा आकाशे सर्वतः प्रचरन् श्येन एतन्नामा पक्षी गगने संचारनिमित्तश्रमपरिहाराय शयितुं शयनं कर्तुं नीडैकलंपटः कुलायैकाभिलाषवान् व्रजेत् शीघ्रं गच्छेत् तद्वदेव जीवो मनउपाधिकश्चिदाभासोपि ब्रह्मानंदैकाभिलाषवान् स्वापाय शीघ्रं गच्छेद् हृदयाकाशमितिशेषः ॥ ४९ ॥ स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानंदस्य गत्वा शयीतैवमेवैष एतच्छेत इति कुमारादिदृष्टांतत्रयप्रदर्शनपरं बालाकिब्राह्मणगतवाक्यं श्लोकत्रयेण व्याचष्टे अतिबाल इत्यादिना यथा स्तनंधयः शिशुः आगलं स्तनं पाययित्वा

रागद्वेषाद्यनुत्पत्तेरानंदैकस्वभावभाक् ॥ ५० ॥ महाराजः सार्वभौमः संतृप्तः सर्वभोगतः ॥ मानुषानंदसीमानं प्राप्यानंदैकमूर्तिभाक् ॥ ५१ ॥ महाविप्रो ब्रह्मवेदी कृतकृत्यत्वलक्षणाम् ॥ विद्यानंदस्य परमां काष्ठां प्राप्यावतिष्ठते ॥ ५२ ॥ मुग्धबुद्धातिबुद्धानां लोके सिद्धा सुखात्मता ॥ उदाहृतानामन्ये तु दुःखिनो न सुखात्मकाः ॥ ५३ ॥ कुमारादिवदेवायं ब्रह्मानंदैकतत्परः ॥ स्त्रीपरिष्वक्तवद्वेद न

---

मृदुत्वादिगुणयोगिनि तल्पे शायितः स्वकीयादिज्ञानशून्यत्वेन रागादिरहितः सन् सुखमूर्तिरेवावतिष्ठते ॥ ५० ॥ यथा वा सार्वभौमो राजाऽविशदबुद्धित्वेपि सर्वैर्मानुषानंदैर्युक्तत्वात्प्रार्थनीयाभावेन रागादिरहित आनंदमूर्तिरेवावतिष्ठते ॥ ५१ ॥ यथा वा महाविप्रो महाब्राह्मणः प्रत्यगभिन्नब्रह्मसाक्षात्कारवान् अहं कृतकृत्य इत्येवंरूपां विद्यानंदस्य परमां सीमां जीवन्मुक्ततां प्राप्तः परमानंदस्वरूप एवावतिष्ठते तथा सुप्तोप्यानंदरूपस्तिष्ठतीति शेषः ॥ ५२ ॥ नन्वेते कुमारादयस्त्रय एव किमिति दृष्टांतीकृता नान्यइत्याशंक्य दृष्टांतत्रयोदाहरणतात्पर्यमाह मुग्धेति विवेकशून्यानां मध्येऽतिबालः सुखी विवेकिषु सार्वभौमः अतिविवेकिष्वानंदात्मसाक्षात्कारवानेव इतरे तु सर्वदा रागादिमत्त्वादसुखिन इति दृष्टांतीकृता इत्यर्थः ॥ ५३ ॥ भवंत्वेते सुखिनः प्रकृते किमायातमित्याशंक्य दार्ष्टांतिकश्रुतिवाक्यस्य तात्पर्यमाह कुमारादीति कुमारादिवत्कुमारादयो यथाऽऽनंदभाजः एवमयमपि सुषुप्तः ब्रह्मानंदैकतत्परः ब्रह्मानंदैकभागित्यर्थः ब्रह्मानंदैकपरत्वे युक्तिप्रदर्शनपरं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किं चन वेद नांतरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं चन वेद नांतरमितिज्योतिर्ब्राह्मणगतं वाक्यमर्थतोनुक्रामति स्त्रीपरिष्वक्तेति यथा लोके प्रियया स्त्रिया आलिंगितः कामी बाह्याभ्यंतरविषयज्ञानशून्यत्वात्सुखमूर्तिर्भवति तथा सुषुप्तौ प्राज्ञेन परमात्मनैक्यं

बाह्यं नापि चांतरम् ॥ ५४ ॥ बाह्यं रथ्यादिकं वृत्तं गृहकृत्यं यथांतरम् ॥ तथा जागरणं बाह्यं नाडीस्थः स्वप्न आंतरः ॥ ५५ ॥ पितापि सुप्तावपितेत्यादौ जीवत्ववारणात् ॥ सुप्तौ ब्रह्मैव नो जीवः संसारित्वासमीक्षणात् ॥ ५६ ॥ पितृत्वाद्यभिमानो यः सुखदुःखाकरः स हि ॥ तस्मिन्नपगते तीर्णः सर्वान् शोकान् भवत्ययम् ॥ ५७ ॥ सुषुप्तिकाले सकले विलीने तमसाऽऽवृतः ॥ सुखरूपमुपैतीति ब्रूते ह्याथर्वणी श्रुतिः ॥ ५८ ॥ सुखमस्वाप्समत्राहं न वै किं चिदवेदिषम् ॥ इति सुप्ते सुखाज्ञाने

---

गतो जीवो बाह्यादिविषयज्ञानाभावादानंदरूप एव भवति ॥ ५४ ॥ अत्र दृष्टांतदार्ष्टांतिकवाक्यस्थयोर्बाह्याभ्यंतरशब्दयोर्विवक्षितमर्थं क्रमेण दर्शयति बाह्यमिति वृत्तं वृत्तांतः नाडीस्थः जाग्रद्वासनया नाडीमध्ये प्रतीयमानः प्रपंचः स्वप्न इत्युच्यते ॥ ५५ ॥ जीवः सुप्तौ ब्रह्मानंदरूपेणैवावतिष्ठत इत्यत्र युक्तिप्रदर्शनपराया अत्र पिताऽपिता भवतीत्यादिकायाः श्रुतेस्तात्पर्यमाह पितेति अत्र सुप्तावाध्यासिकानां पितृत्वादिजीवधर्माणां श्रुत्यैव निवारितत्वाज् जीवत्वाप्रतीतौ ब्रह्मतैवावशिष्यत इत्यर्थः ॥५६॥ ननु पितृत्वाद्यभिमानाभावेपि सुखित्वादिसंसारः किं न स्यादित्याशंक्य संसारस्य देहाभिमानमूलत्वात्तदभावेऽभाव इति मन्वानस्तत्प्रतिपादकं तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति समनंतरवाक्यं तात्पर्यतो व्याचष्टे पितृत्वादीति ॥ ५७ ॥ ननूदाहृताभिः श्रुतिभिर्न सुखप्राप्तिर्मुखतोभिधीयमानोपलभ्यऽइत्याशंक्य तत्राभिधानपरं कैवल्यश्रुतिवाक्यमर्थतः पठति सुषुप्तीति सकले जाग्रदादिलक्षणे प्रपंचे विलीने स्वोपादानभूतायां तमःप्रधानायां प्रकृतौ विलयं गते सति तमसा तया प्रकृत्या आवृत आच्छादितो जीवः सुखरूपं ब्रह्मोपैति इति तस्याः श्रुतेरर्थः ॥ ५८ ॥ न केवलमयं श्रुतिप्रसिद्धोर्थः किं तु सर्वानुभवसिद्धोपीत्याह सुखमिति सुषुप्तादुत्थितः पुरुषः एतावंतं कालं सुखमहमस्वा-

परामृशति चोत्थितः ॥ ५९ ॥ परामर्शोऽनुभूतेस्तीत्यासीदनुभवस्तदा ॥ चिदात्मत्वात्स्वतो भाति सुखमज्ञानधीस्ततः ॥ ६० ॥ ब्रह्म विज्ञानमानंदमिति वाजसनेयिनः ॥ पठंत्यतः स्वप्रकाशं सुखं ब्रह्मैव नेतरत् ॥ ६१ ॥ यदज्ञानं तत्र लीनौ तौ विज्ञानमनोमयौ ॥ तयोर्हि विलया-

---

प्सं न किंचिदवेदिषमित्येवं निद्राकालीने सुखाज्ञाने परामृशति स्मरति अतोपि सुप्तौ सुखमस्तीत्यवगम्यते ॥ ५९ ॥ ननु परामर्शस्याप्रमाणत्वात्कथं तद्बलात्सुखसिद्धिरित्याशंक्य तस्याप्रामाण्येऽपि तन्मूलभूतानुभवबलात्तत्सिद्धिरित्यभिप्रायेणाह परामर्श इति ॥ परामर्शः स्मरणज्ञानमनुभूतएवविषये भवति नाननुभूतविषयइत्यस्माद्धेतोस्तदा सुप्तौ अनुभव आसीदित्यवगम्यते ननु सुप्तौ मनःसहितानां ज्ञानकरणानां विलीनत्वात्कथमनुभवसिद्धिरित्याशंक्य किं सुखानुभवसाधनं नास्तीत्युच्यते अज्ञानानुभवसाधनं वा नाद्यः स्वप्रकाशचिद्रूपत्वेन सुखस्य करणानपेक्षत्वात् न द्वितीयः स्वप्रकाशसुखबलादेव तदावरकाज्ञानप्रतीतिसिद्धेरित्यभिप्रायेणाह चिदात्मेति ततः स्वप्रकाशसुखादज्ञानधीरज्ञानस्य प्रतीतिर्भवतीति ॥ ६० ॥ ननु सौषुप्तसुखस्य स्वप्रकाशसुखत्वेपि ब्रह्मानंदः स्वयं भवेदित्यत्रोक्तं ब्रह्मरूपत्वं न संभवति मानाभावादित्याशंक्य विज्ञानमानंदमित्यादि बृहदारण्यकवाक्यस्य सद्भावान्मैवमित्याह ब्रह्म विज्ञानमिति ॥ ६१ ॥ नन्वनुभवस्मरणयोरेकाधिकरणत्वनियमात्सुखमहमस्वाप्सं न किं चिदवेदिषमिति च सौषुप्तसुखाज्ञानयोर्विज्ञानमयशब्दवाच्येन जीवेन स्मर्यमाणत्वात् तस्यैव सुखाद्यनुभवितृत्वं वक्तव्यमित्याशंक्य तदुपाधेर्विज्ञानस्याज्ञानकार्यस्याज्ञाने विलीनत्वान्मैवमित्यभिप्रायेणाह यदज्ञानमिति न किं चिदवेदिषमितिस्मरणान्यथानुपपत्त्या गम्यमानं यदज्ञानमस्ति तत्र तस्मिन्नज्ञाने तौ प्रमातृप्रमाणत्वेन प्रसिद्धौ विज्ञानमनोमयौ विलीनौ विज्ञानत्वाद्याकारं परित्यज्य कारणरूपेणावस्थितौ अतस्तदुपाधिकस्य नानुभवितृत्वमिति भावः तत्रोपपत्तिमाह तयोरिति हि यस्मात्तयोर्विज्ञानमनोमययोर्विलयावस्था

वस्था निद्राऽज्ञानं च सैव हि ॥ ६२ ॥ विलीनघृतवत्प-श्चात्स्याद्विज्ञानमयो घनः ॥ विलीनावस्थ आनंदमयशब्देन कथ्यते ॥ ६३ ॥ सुप्तिपूर्वक्षणे बुद्धिवृत्तिर्या सुखबिंबिता ॥ सैव तद्बिंबसहिता लीनानंदमयस्ततः ॥ ६४ ॥ अंतर्मुखो य आनंदमयो ब्रह्मसुखं तदा ॥ भुंक्ते चिद्बिंबयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः ॥ ६५ ॥ अज्ञानवृत्तयः सूक्ष्मा विस्प-

---

निद्रेत्युच्यते विज्ञानविरतिः सुप्तिरित्यभिधानात् तर्हि निद्रायामेव विलीनाविति वक्तव्यमित्याशंक्याह अज्ञानमिति सैव निद्रा विद्द्भिरज्ञानमिति व्यवह्रियतइत्यर्थः ॥ ६२ ॥ ननु तर्हि सौषुप्तसुखाद्यनुभवकालेऽसतो विज्ञानमयस्य प्रबोधे कथं तत्स्मर्तृत्वमित्याशंक्य विलयावस्थायामपि तत्स्वरूपनाशाभावाद्विलयावस्थोपाधिमदानंदमयरूपेणानुभवितृत्वं विज्ञानशब्दवाच्यघनीभावोपाधिमत्त्वेन स्मर्तृत्वं चैकस्य घटतइत्यभिप्रायेणाह विलीनेति यथाग्निसंयोगादिना विलीनं घृतं पश्चाद्वाय्वादिसंबंधवशाद्धनीभवति एवं जाग्रदादिषु भोगप्रदस्य कर्मणः क्षयवशान्निद्रारूपेण विलीनमंतःकरणं पुनर्भोगप्रदकर्मवशात्प्रबोधे विज्ञानाकारेण घनीभवति अतस्तदुपाधिक आत्मापि विज्ञानमयो घनः स्यात्स एव पूर्वं विलयावस्थोपाधिकः सन्नानंदमय इत्युच्यते ॥ ६३ ॥ विलीनावस्थ आनंदमय इत्युक्तमेवार्थं स्पष्टीकरोति सुप्तीति सुप्तेः पूर्वस्मिन्नव्यवहिते क्षणे याऽतर्मुखा बुद्धिवृत्तिः स्वरूपभूतसुखप्रतिबिंबयुक्ता भवति ततः अनंतरं तत्प्रतिबिंबसहिता सैव वृत्तिर्निद्रारूपेण विलीना आनंदमय इत्यभिधीयते ॥ ६४ ॥ एवमानंदमयस्वरूपं प्रदर्श्य तस्यैव प्रबोधकाले विज्ञानमयरूपेण स्मर्तृत्वसिद्धये तदानीं सुखानुभवमुपपादयति अंतर्मुख इति सुखप्रतिबिंबसहितांतर्मुखधीवृत्तिजनितसंस्कारसहिताज्ञानोपाधिको य आनंदमयस्तदा सुषुप्तौ ब्रह्मसुखं स्वरूपभूतं सुखं चिदाभाससहिताभिरज्ञानादुत्पन्नाभिः सुखादिगोचराभिर्वृत्तिभिः सत्वपरिणामविशेषैर्भुंक्तेऽनुभवति ॥ ६५ ॥ ननु तर्हि जागरण इव तदानीं सुखमनुभवामीत्यभि-

ष्टा बुद्धिवृत्तयः ॥ इति वेदांतसिद्धांतपारगाः प्रवदंति हि ॥ ६६ ॥ मांडूक्यतापनीयादिश्रुतिष्वेतदतिस्फुटम् ॥ आनंदमयभोक्तृत्वं ब्रह्मानंदे च भोग्यता ॥ ६७ ॥ एकीभूतः सुषुप्तस्थः प्रज्ञानघनतां गतः ॥ आनंदमय आनंदभुक्चेतोमयवृत्तिभिः ॥ ६८ ॥ विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराधुना ॥ स लयेनैकतां प्राप्तो बहुतंदुलपिष्टवत् ॥ ६९ ॥ प्रज्ञानानि पुरा बुद्धिवृत्तयोथ घनोऽभवत् ॥ घनत्वं हि-

---

मानः कुतो न स्यादित्याशंक्याविद्यावृत्तीनां बुद्धिवृत्तिवत्स्पष्टत्वाभावादित्यभिप्रायेणाह अज्ञानवृत्तय इति इदं कुतोवगतमित्यत आह इतीति ॥ ६६ ॥ नन्वानंदमयो ब्रह्मानंदं सूक्ष्माभिरविद्यावृत्तिभिर्भुंक्त इत्यत्र किं प्रमाणमित्यत आह मांडूक्येति एतच्छब्दार्थमेवाह आनंदेति ॥ ६७ ॥ इदानीं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानंदमयो ह्यानंदभुक्चेतोमुख इति मांडूक्यादिश्रुतिगतं वाक्यमर्थतः पठति एकीभूत इति सुषुप्तं सुषुप्तिस्तत्र तिष्ठतीति सुषुप्तस्थः सुषुप्त्यभिमानीत्यर्थः आनंदमय आनंदप्रचुरः आनंदभुक् स्वरूपभूतमानंदं भुंक्त इत्यानंदभुक् चेतोमयवृत्तिभिरिति चेतश्चैतन्यं तन्मय्यस्तत्प्रचुराश्चित्प्रतिबिंबसहिता इत्यर्थः ताश्च ता वृत्तयश्च चेतोमयवृत्तयः ताभिरानंदभुगिति योजना ॥ ६८ ॥ तद्वाक्यगतस्यैकीभूत इतिपदस्यार्थमाह विज्ञानेति यः आत्मा पुरा जागरणावस्थायां विज्ञानमयमुख्यैः स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमयः आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमय इत्यादिश्रुत्युक्तै रूपैराकारविशेषैर्युक्तोऽभूत्स एवाधुना लयेन विज्ञानमनआद्युपाधिविलयेनैकतामेकाकारतां प्राप्तो गतो भवति तत्र दृष्टांतमाह बह्विति बहुतंदुलजनितपिष्टवदित्यर्थः ॥ ६९ ॥ अथ प्रज्ञानघनशब्दार्थमाह प्रज्ञानानीति पुरा पूर्वं जाग्रदादौ प्रज्ञानशब्दवाच्या घटादिगोचरा या बुद्धिवृत्तयोऽभवन् अथ सुषुप्तिकाले घटादिविषयाभावे

मबिंदूनामुदग्देशे यथा तथा ॥ ७० ॥ तद्धनत्वं साक्षिभावं दुःखाभावं प्रचक्षते ॥ लौकिकास्तार्किका यावद्दुःखवृत्तिविलोपनात् ॥ ७१ ॥ अज्ञानबिंबिता चित्स्यान्मुखमानंदभोजने ॥ भुक्तं ब्रह्मसुखं त्यक्त्वा बहिर्यात्यथकर्मणा ॥ ७२ ॥ कर्म जन्मांतरेभूद्यत्तद्योगाद्बुध्यते पुनः ॥ इति कैवल्यशाखायां कर्मजो बोध ईरितः ॥ ७३ ॥ कं चित्कालं प्रबुद्धस्य ब्रह्मानंदस्य वासना ॥ अनुगच्छेद्यत-

---

सति घनोऽभवत् चिद्रूपेणैकरूपोभूत् तत्र दृष्टांतमाह घनत्वमिति ॥ ७० ॥ इदानीं प्रज्ञानघनशब्दार्थनिरूपणप्रसंगादागतं किं चिदाह ॥ तद्धनत्वमिति ॥ यदिदं वेदांतेषु साक्षित्वेनाभिधीयमानं प्रज्ञानघनत्वमस्ति तदेव लौकिकाः शास्त्रसंस्काररहिताः तार्किका वैशेषिकादयः शास्त्रिणश्च दुःखाभावं प्रचक्षते दुःखाभाव इत्याहुः कुत इत्यत आह यावदिति यावत्यो दुःखवृत्तयस्तासां सर्वासां विलयादित्यर्थः ॥ ७१ ॥ पूर्वोदाह्तश्रुतिवाक्यगतचेतोमुखशब्दार्थमाह अज्ञानेति आनंदभोजने सौषुप्तब्रह्मानंदास्वादने मुखं साधनमज्ञानबिंबिता चित्स्याद् अज्ञानवृत्तौ प्रतिबिंबितं चैतन्यमेव भवेत् ननु सुषुप्तावानंदमयरूपेण जीवेन ब्रह्मसुखं चेद्भुज्यते तर्हि तत्परित्यज्याथ बहिः कुतो जागरणं दुःखालयमागच्छेद् इत्यत आह भुक्तमिति पुण्यापुण्यकर्मपाशबद्धत्वात्तेन प्रेरितो जीवः साक्षात्कृतमपि ब्रह्मानंदं परित्यज्याथ बहिर्याति जागरणादिकं गच्छतीत्यर्थः ॥ ७२ ॥ एतत्कुतोवगम्यत इत्याशंक्य पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्ध इति कैवल्यश्रुतिवाक्यादितिमन्वानस्तद्वाक्यमर्थतः पठंस्तदभिप्रायमाह कर्मेति ॥ ७३ ॥ सुप्तौ ब्रह्मानंदोनुभूत इत्यत्र लिंगं चाह कं चिदिति प्रबुद्धस्य जागरणं प्राप्तस्यापि कंचित्कालं स्वल्पकालपर्यंतं सुप्तावनुभूतस्य ब्रह्मानंदस्य वासनासंस्कारोनुगच्छेदनुगच्छति कुत एतदवगम्यत इत्यत आह यत इति यतः कारणात्प्रबोधादौ निर्विषयो विषयानुभवरहितोपि सुखी सन् तूष्णी-

स्तूष्णीमास्ते निर्विषयः सुखी ॥ ७४ ॥ कर्मभिः प्रेरितः पश्चान्नानादुःखानि भावयन् ॥ शनैर्विस्मरति ब्रह्मानंदमेषोखिलो जनः ॥ ७५ ॥ प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने ॥ ब्रह्मानंदे नृणां तेन प्राज्ञोस्मिन्विवदेत कः ॥ ७६ ॥ ननु तूष्णीं स्थितौ ब्रह्मानंदश्चेद्भाति लौकिकाः ॥ अलसाश्चरितार्थाः स्युः शास्त्रेण गुरुणात्र किम् ॥ ७७ ॥ बाढं ब्रह्मेति विद्युश्चेत्कृतार्थास्तावतैव ते ॥ गुरुशास्त्रे विनाऽत्यंतं गंभीरं ब्रह्म वेत्ति कः ॥ ७८ ॥ जानाम्यहं त्वदुक्त्याद्य कुतो मे न कृतार्थता ॥ शृण्वत्र त्वादृशो वृत्तं प्राज्ञंमन्यस्य कस्य चित् ॥ ७९ ॥ चतुर्वेद-

मास्तेऽतोवगम्यत इत्यर्थः ॥ ७४ ॥ तर्हि तूष्णीं कुतो नावतिष्ठतइत्यत आह कर्मभिरिति कर्मभिः पूर्वोक्तैर्नोदितः सर्वोपि प्राणी पश्चान्नानाविधानि दुःखान्यनुसंदधानः शनैर्ब्रह्मानंदं विस्मरति ॥ ७५ ॥ इतोपि ब्रह्मानंदेन विप्रतिपत्तिः कार्येत्याह प्रागिति प्रत्यहं मनुष्याणां निद्रायाः प्रागूर्ध्वमपि निद्रारंभे निद्रावसाने च ब्रह्मानंदे स्नेहोस्ति यतो निद्रादौ मृदुशय्यादि संपादयंति तदवसाने च तं परित्यक्तुमशक्तास्तूष्णीमासते तेन कारणेन अस्मिन्नानंदे को बुद्धिमान्विवदेत न कोपीत्यर्थः ॥ ७६ ॥ चोदयति नन्विति गुरुशुश्रूषादिलभ्यस्य ब्रह्मानंदानुभवस्य तूष्णीं स्थितिमात्रलभ्यत्वे गुरुशुश्रूषादिपूर्वकं श्रवणादिकं वृथा स्यादित्यर्थः ॥ ७७ ॥ अयं ब्रह्मानंद इति ज्ञाते सति कृतार्थता भवत्येव तदेव गुरुशुश्रूषादिकमंतरेण न संभवतीत्याह बाढमिति अत्यंतं गभीरं दुरवगाहमवाङ्मनसगम्यं सर्वज्ञं सर्वांतरं सर्वात्मरूपं ब्रह्म गुरुशास्त्रे विहायान्येन केनाप्युपायेन को जानीयान्न कोपीत्यर्थः ॥ ७८ ॥ ननुत्वद्वाक्यादेव ब्रह्मानंदं जानतो मम न कृतार्थता लभ्यतइत्याशंकानुवादपूर्वकं सोपहासमुत्तरमाह जानामीति ॥ ७९ ॥ तमेव वृत्तांतं दर्शयति चतुर्वेदेति कश्चिच्चतुर्वेदविदे कस्मै चिदिदं बहुधनं दातव्यमिति

विदे देयमितिशृण्वन्नवोचत ॥ वेदाश्चत्वार इत्येवं वेद्मि मे दीयतां धनम् ॥८०॥ संख्यामेवैष जानाति न तु वेदानशेषतः ॥ यदि तर्हि त्वमप्येवं नाशेषं ब्रह्म वेत्सि हि ॥८१॥ अखंडैकरसानंदे मायातत्कार्यवर्जिते ॥ अशेषत्वसशेषत्ववार्तावसर एव कः ॥ ८२ ॥ शब्दानेव पठस्याहो तेषामर्थं च पश्यसि ॥ शब्दपाठेऽर्थबोधस्ते संपाद्यत्वेन शिष्यते ॥८३॥ अर्थे व्याकरणाद्बुद्धे साक्षात्कारोवशिष्यते॥ स्यात्कृतार्थत्वधीर्यावत्तावद्गुरुमुपास्व भोः ॥ ८४ ॥ आस्तामेतद्यत्र यत्र सुखं स्याद्विषयैर्विना ॥ तत्र सर्वत्र

---

एवंविधं वाक्यं श्रुत्वा वेदाश्चत्वार इत्यस्मादेव वाक्यादहं वेद्मि अतो मे दीयतामिति वक्ति तद्वद्भवानपीत्यर्थः ॥ ८० ॥ ननु वेदाश्चत्वार इति यो वेद सवेदगतां संख्यामेव वेत्ति न तु वेदानां स्वरूपमिति चोदयति संख्यामिति साम्येन समाधत्ते तर्हीति एवं चतुर्वेदाभिज्ञंमन्य इव त्वमप्यशेषं संपूर्णं यथा भवति तथा ब्रह्म न वेत्सि नैव जानासि ॥८१॥ ननु संख्यातिरिक्तवेदस्वरूपभेद इव स्वगतादिभेदशून्ये आनंदरूपे ब्रह्मणि अज्ञायमानस्यांशस्याभावादसंपूर्णज्ञानित्वोपालंभो न घटते इति चोदयति अखंडैकेति ॥ ८२ ॥ ब्रह्मज्ञानेप्यशेषत्वादिकं दर्शयितुं ब्रह्मजानामीतिवदंतं विकल्प्य पृच्छति शब्दानिति किमखंडैकरसमद्वितीयसच्चिदानंदरूपमित्यादिशब्दानेव पठसि आहो अथ वा तेषां शब्दानामर्थं स्वगतादिभेदशून्यत्वादिकं च पश्यसि जानासि इति विकल्पार्थः आद्ये पक्षे सावशेषत्वं दर्शयति शब्दपाठ इति ॥ ८३ ॥ द्वितीयेपि तद्दर्शयति अर्थ इति व्याकरणादित्युपलक्षणं निगमादेः व्याकरणादिना परोक्षज्ञाने संपादितेऽपि संशयादिनिरासेनापरोक्षीकरणमवशिष्यते तर्हि कदा संपूर्णत्वं ज्ञानस्येत्याशंक्य तदवधिं दर्शयति ॥ स्यादिति ॥ यदा कृतार्थत्वबुद्धिरुत्पद्यते तदा ज्ञानस्य संपूर्णताऽवगंतव्येत्यर्थः ॥ ८४ ॥ एवं प्रासंगिकं परिसमाप्य प्रकृतमेवानुसरति आस्तामिति

विध्येतां ब्रह्मानंदस्य वासनाम् ॥ ८५ ॥ विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ॥ अंतर्मुखमनोवृत्तावानंदः प्रतिबिंबति ॥ ८६ ॥ ब्रह्मानंदो वासना च प्रतिबिंब इति

---

यत्र यत्र यस्मिन्यस्मिन्काले तूष्णींभावादौ विषयानुभवमंतरेण सुखं भवति तत्र तत्र सुखस्य विषयजन्यत्वाभावात्सामान्याहंकारावृतत्वाच्च वासनानंदत्वमवगंतव्यमित्यर्थः ॥ ८५ ॥ एवं ब्रह्मानंदवासनानंदौ दर्शयित्वा इदानीमानंदत्रैविध्यनियमनायात्माभिमुखधीवृत्तावित्यत्रोक्तमेव विषयानंदं पुनरनुवदति विषयेष्वपीति यदा यदा स्रगादिविषयलाभात्तत्तदिच्छोपरमो भवति तदा तदा मनस्यंतर्मुखे सति तस्मिन् यः स्वात्मानंदः प्रतिबिंबितो भवत्ययं विषयानंद इत्यर्थः ॥ ८६ ॥ फलितमाह ब्रह्मानंद इति उक्तप्रकारेण स्वप्रकाशतया सुषुप्तौ प्रतिभासमानो यो ब्रह्मानंदो यश्च तूष्णींस्थितौ विषयानुभवमंतरेण प्रतीयमानो वासनानंदो योप्यभीष्टविषयलाभादंतर्मुखे मनसि प्रतिबिंबितो विषयानंद एतत्त्रितयातिरेकेणास्मिन् जगति न कश्चिदानंदोस्ति नन्वानंदस्त्रिविधो ब्रह्मानंदो विद्यासुखं तथा विषयानंद इत्यनेन प्रकारेणानंदत्रैविध्यमुक्तमिदानीं तु ब्रह्मानंदो वासना च प्रतिबिंब इति त्रयमिति तद्विलक्षणमानंदस्य त्रैविध्यमुच्यते अतः पूर्वोत्तरविरोधः किं च यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः तावत्तावत्सूक्ष्मदृष्टेर्निजानंदोनुमीयतइति तादृक् पुमानुदासीनकालेप्यानंदवासनाम् उपेक्ष्य मुख्यमानंदं भावयत्येव तत्पर इति चोक्तप्रकारद्वयातिरिक्तौ निजानंदमुख्यानंदावभिधीयेते तथा द्वितीयाध्याये मंदप्रज्ञं तु जिज्ञासुमात्मानंदेन बोधयेदिति आत्मानंदस्ततोन्योभिधीयते योगानंदः पुरोक्तो य इत्यत्र योगानंदोपि कश्चिदवभासते ब्रह्मानंदाभिधे ग्रंथे तृतीयाध्याय ईरितः अद्वैतानंद एव स्यादित्यत्राद्वैतानंदं चान्यमवगच्छामः अतः अंतरेण जगत्यस्मिन्नानंदो नास्ति कश्चनेत्युक्तिर्विरुध्येतेति चेन्मैवम् विद्यानंदस्य विषयानंदवदंतःकरणवृत्तिविशेषत्वेन विषयानंदेंतर्भावस्य विषयानंदवद्विद्यानंदो धीवृत्तिरूपक इत्युत्तरत्र धीवृत्तिरूपत्वाभिधानेन विवक्षितत्वान्निजानंदमुख्यानंदात्मानंदयोगानंदा-

**त्रयम् ॥ अंतरेण जगत्यस्मिन्नानंदो नास्ति कश्चन ॥८७॥ तथा च विषयानंदो वासनानंद इत्यमू ॥ आनंदौ जनयन्ना-**

---

द्वैतानंदानां तु ब्रह्मानंदादनतिरिक्तत्वाच्च तथा हि यावद्यावदहंकार इत्यु- दाहृतश्लोके योगलक्षणोपायगम्यतया योगानंदत्वेन विवक्षितस्य निजानं- दस्यैव न द्वैतं भासते नापि निद्रा तत्रास्ति यत्सुखम्, स ब्रह्मानंद इ- त्याह भगवानर्जुनं प्रति इत्यस्मिन्नुत्तरश्लोकएव ब्रह्मानंदत्वाभिधाना- न्निजानंदो ब्रह्मानंदान्न भिद्यते तथा मुख्यानंदोपि ब्रह्मानंद एव तथा च विषयानंदो वासनानंद इत्यमू आनंदौ जनयन्नास्ते ब्रह्मानंदः स्वयंप्रभ इत्यत्र जन्यत्वेनामुख्यभूतयोर्विषयानंदवासनानंदयोर्जनकत्वेनाभिहितस्य ब्रह्मानंदस्यैव तादृक् पुमानुदासीनकालेपीत्युदाहृत एव श्लोके आनंद- वासनामुपेक्ष्य मुख्यमानंदं भावयत्येव तत्पर इति मुख्यानंदत्वाभिधा- नादात्मानंदाद्वैतानन्दयोस्तु ब्रह्मानंदत्वम्, योगानंदः पुरोक्तो यः स आत्मानंद इष्यतामिति तृतीयाध्यायादौ, प्रथमाध्याये योगानंदतया विव- क्षितस्य ब्रह्मानंदस्यैव योगानंदशब्देनानुवादपूर्वकमात्मानंदतामभिधा- य कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेदिति प्रश्नपूर्वकमाकाशादिशरीरांतमि- त्यादिनाऽद्वितीयस्य ब्रह्मत्वप्रतिपादनादवगंतव्यम् तस्माद्ब्रह्मानंदो वासना च प्रतिबिंब इत्युक्तं त्रैविध्यं सुस्थम् ननु तर्हि नन्वेवं वासनानंदाद् ब्रह्मानंदादपीतरम् वेत्तु योगी निजानंदमित्यत्र निजानंदस्य ब्रह्मानंद- वासनानंदाभ्यां भेदेन निर्देशो न युज्यतइति न शंकनीयम् एकस्यैव ब्रह्मानंदस्य जगत्कारणत्वोपाधिसाहित्यराहित्यभेदेन भेदव्यपदेशोपपत्तेः तथा हि ब्रह्मानंदनिरूपणावसरे आनंदाद्ध्येवेमानि भूतानि जायंत इत्यादिना जगत्कारणत्वाभिधानेन ब्रह्मानंदस्य समायत्वमवगम्यते नि- र्मायस्य जगत्कारणत्वानुपपत्तेः निजानंदनिरूपणकालेपि यावद्यावदहं- कार इत्यादिना सकारणस्याहंकारस्य विलयप्रतिपादनान्निजानंदस्य नि- र्मायत्वमिति सर्वमनवद्यम् ॥ ८७ ॥ नन्वस्मिन्नध्याये ब्रह्मानंदविवेचनस्यै- व प्रस्तुतत्वादितरानंदद्वयप्रतिपादनं प्रकृतासंगतमित्याशंक्य तयोर्ब्रह्मानंद- जन्यत्वेन तद्बोधोपयोगित्वान्न प्रकृतासंगतमित्यभिप्रायेणाह तथेति तथा

स्ते ब्रह्मानंदः स्वयंप्रभः ॥ ८८ ॥ श्रुतियुक्त्यनुभूतिभ्यः स्वप्रकाशचिदात्मके ॥ ब्रह्मानंदे सुप्तिकाले सिद्धे सत्यन्यदा शृणु ॥ ८९ ॥ य आनंदमयः सुप्तौ सविज्ञानमयात्मताम् ॥ गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ॥९०॥ नेत्रे जागरणं कंठे स्वप्नः सुप्तिर्हृदंबुजे ॥ आपादमस्तकं देहं व्याप्य जागर्ति चेतनः ॥ ९१ ॥ देहतादात्म्यमापन्नस्तप्तायःपिंडवत्ततः ॥ अहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते ॥ ९२ ॥ उदासीनः सुखी दुःखीत्यवस्थात्रयमे-

---

च एवमानंदत्रैविध्ये सति यः स्वयंप्रकाश आनंदो विषयानंदवासनानंदौ जनयति स ब्रह्मानंदो वेदितव्य इत्यर्थः ॥ ८८ ॥ वृत्तानुसंकीर्तनपूर्वकमुत्तरग्रंथमवतारयति श्रुतीति श्रुतिभिः सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेतीत्यादिभिरुदाहृताभिर्युक्तिभिः सुखमहमस्वाप्समित्यादिपरामर्शान्यथानुपपत्त्यादिभिरनुभूत्या च अर्थापत्तिकल्पितेन सुषुप्त्यनुभवेन च सुषुप्तिकाले स्वप्रकाशो ब्रह्मानंदः साधितः इतः परमन्यदा जागरणावस्थायामपि यो ब्रह्मानंदावगमोपायो वक्ष्यते तं शृणु इत्यर्थः ॥ ८९ ॥ प्रतिज्ञातमेव ब्रह्मानंदावगमोपायं दर्शयितुं तदुपोद्घातत्वेन सनिमित्तां जीवस्यावस्थाद्वयप्राप्तिं दर्शयति य इति सुप्तौ सुषुप्तिकाले विलीनावस्थ आनंदमयशब्देन कथ्यत इत्युक्तो य आनंदमयः स विज्ञानशब्दाभिधेयबुद्ध्युपाधिमत्त्वेन विज्ञानमयतां प्राप्य स्थानभेदतो वक्ष्यमाणस्थानविशेषयोगेन स्वप्नं जागरणं वा कर्मानुसारेण गच्छति ॥९०॥ इदानीं जाग्रदाद्यवस्थोपयोगीनि स्थानानि दर्शयति नेत्र इति नेत्रशब्दस्यकृत्स्नदेहोपलक्षणपरतामभिप्रेत्य नेत्रे जागरणमित्यंशस्यार्थमाह आपादेति चेतनो जीवः ॥ ९१ ॥ देहं व्याप्येत्यनेन विवक्षितमर्थं दृष्टांतप्रदर्शनेन स्पष्टयति देहतादात्म्यमिति तत्र प्रमाणमाह तत इति यतो मनुष्यत्वादिजातिमता देहेन तादात्म्यं प्राप्तस्ततः अहं मनुष्य इत्येवं निश्चित्य संशयादिरहितज्ञानेन गृहीत्वैवावतिष्ठते ॥ ९२ ॥ देहतादात्म्या-

त्यसौ ॥ सुखदुःखे कर्मकार्ये त्वौदासीन्यं स्वभावतः ॥ ९३ ॥ बाह्यभोगान्मनोराज्यात्सुखदुःखे द्विधा मते ॥ सुखदुःखांतरालेषु भवेत्तूष्णीमवस्थितिः ॥ ९४ ॥ न कापि चिंता मेऽस्त्यद्य सुखमासइति ब्रुवन् ॥ औदासीन्ये निजानंदभानं वक्त्यखिलो जनः ॥ ९५ ॥ अहमस्मीत्यहंकारसामान्याच्छादितत्वतः ॥ निजानंदो न मुख्योऽयं किं त्वसौ तस्य वासना ॥ ९६ ॥ नीरपूरितभांडस्य बाह्ये शैत्यं न तज्जलम् ॥ किं तु नीरगुणस्तेन नीरसत्ता-

---

भिमानहेतुकान्येवावस्थांतराणि दर्शयति उदासीन इति तत्र सुखित्वदुःखित्वयोः कर्मजन्यत्वज्ञानाय विशेषणभूतयोः सुखदुःखयोस्तद्धेतुकत्वं दर्शयति सुखेति ॥ ९३ ॥ तयोश्च सुखदुःखयोर्निमित्तभेदाद्द्वैविध्यमाह बाह्येति तद्यौदासीन्यं कदा स्यादित्यत आह सुखेति व्यक्तिभेदविवक्षया बहुवचनम् ॥ ९४ ॥ यदर्थं जाग्रदाद्युपन्यस्तं तदिदानीं दर्शयति न कापीति सर्वोऽपि जन इदानीं मम कापि चिंता गृहादिविषया नास्ति अतः सुखं यथा भवति तथा तिष्ठामीति वदन् औदासीन्यकाले स्वरूपानंदस्फूर्तिं ब्रूते अतो जागरणावस्थायामपि निजानंदभानमस्तीत्यवगंतव्यमित्यभिप्रायः ॥ ९५ ॥ नन्वौदासीन्येऽवभासमानस्य निजानंदत्वे तस्य ब्रह्मानंदत्वात्पूर्वोक्तावासनानंदता न स्यादित्याशंक्याहंकारसामान्यावृतत्वान्न ब्रह्मानंदतेति परिहरति अहमस्मीति देवदत्तोहमित्यादिविशेषशून्येनाहमस्मीत्येवंरूपेणाहंकारसामान्येनावृतत्वान्नायं मुख्य इत्यर्थः तर्हि तस्य किंरूपतेत्यत आह किं त्वसाविति ॥ ९६ ॥ मुख्यानंदातिरिक्तवासनानंदसद्भावे दृष्टांतः नीरेति जलपूर्णकुंभस्य बहिर्भागस्पर्शनेनोपलभ्यमानं यच्छैत्यमस्ति तत्तावज्जलं न भवति द्रवत्वानुपलंभात् किं तर्हि तदित्यत आह किं त्विति नीरगुणत्वं कथमवगम्यत इत्यत आह तेनेति विमतं घटे उपलभ्यमानं शैत्यं जलजन्यं भवितुमर्हति शैत्यत्वाज् जले उपलभ्यमानशैत्यवदिति ॥ ९७ ॥ भवत्वेवं नीरानुमा-

नुमीयते ॥ ९७ ॥ यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः ॥ तावत्तावत्सूक्ष्मदृष्टेर्निजानंदोनुमीयते ॥ ९८ ॥ सर्वात्मना विस्मृतः सन्सूक्ष्मतां परमां व्रजेत् ॥ अलीनत्वान्न निद्रैषा ततो देहोपि नो पतेत् ॥ ९९ ॥ न द्वैतं भासते नापि निद्रा तत्रास्ति यत्सुखम् ॥ स ब्रह्मानंद इत्याह भगवानर्जुनं प्रति ॥ १०० ॥ शनैः शनैरुपरमेद्बुध्द्या धृतिगृहीतया ॥ आत्मसंस्थं मनःकृत्वा न किंचिदपि चिं-

---

कत्वं शैत्यस्य प्रकृते किमायातमित्याशंक्य तद्द्वासनानंदस्यापि मुख्यानंदानुमापकत्वमायातामित्याह यावदिति अभ्यासयोगतः ज्ञानमात्मानि महति नियच्छेत्तद्यच्छेच्छांत आत्मनीति श्रुत्यभिहितनिरोधसमाध्यभ्यासयोगेन यावद्यावदहमादिवृत्तिविलयवशाच्चितस्य सूक्ष्मता जायते तावत्तावन्निजानंदाभिव्यक्तिर्भवतीति अनुमीयते अयमत्र प्रयोगः अहंकारसंकोचविशेषविशिष्टक्षणेषु द्वितीयादिक्षणः पक्षः स पूर्वस्मात् क्षणादधिकनिजानंदाविर्भाववान् अहंकारसंकोचविशेषयुक्तकालत्वादहंकारसंकोचयुक्ताद्यक्षणवदिति ॥ ९८ ॥ बुद्धिसौक्ष्म्यस्य कोऽवधिरित्याकांक्षायां साक्षात्कारोवधिरित्याह सर्वेति तर्हि सा निद्रैव स्यादित्यत आह अलीनेति सर्ववृत्तिविलयेप्यंतःकरणस्वरूपविलयाभावान्नेयं निद्रा बुद्धेः कारणात्मनावस्थानं सुषुप्तिरित्याचार्यैरुक्तत्वादित्यर्थः अंतःकरणस्वरूपविलयाभावे लिंगमाह तत इति यत्र सुषुप्त्यादावहंकारविलयस्तत्र देहपातो दृष्टः इह तु तदभावादविलीन इति गम्यते ॥ ९९ ॥ फलितमाह न द्वैतमिति यस्मिन्काले द्वैतभानं नास्ति निद्रापि नागच्छति तस्मिन्काले उपलभ्यमानं यत्सुखमस्ति स ब्रह्मानंद इत्यर्थः अयं ब्रह्मानंद इति कुतोवगतमित्याशंक्य कृष्णवाक्यादित्याह इतीति गीतायां षष्ठाध्यायइति शेषः ॥ १०० ॥ तत्र कैः श्लोकैरुक्तवानित्याशंक्य तान् श्लोकान् पठत्यर्थक्रमानुसारेण शनैरिति अयमर्थः धृतिगृहीतया धैर्ययुक्तया बुद्ध्या साधनभूतया शनैर्न सहसा उपरमेत् मन उपरतिं कुर्यात् कियत्पर्यंतमित्य-

तयेत् ॥ १ ॥ यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥ ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २ ॥ प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ॥ उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥ ३ ॥ यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥ यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ४ ॥ सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ॥ वेत्ति

---

त आह आत्मेति मन आत्मसंस्थं आत्मानि संस्था सम्यक् स्थितिरात्मैवेदं सर्वं न ततोन्यत्किंचिदस्तीत्येवंरूपा यस्य तदात्मसंस्थं तथा विधं कृत्वा किं चिदपि न चिंतयेदेष योगस्य परमोऽवधिः ॥ १ ॥ एतत्संपादने प्रवृत्तो योगी प्रथमं किं कुर्यादित्यत आह यत इति चंचलं स्वभावदोषादत एवास्थिरमेकत्र विषयेऽनियतमेवंविधं मनो यदा यदा यतो यतो यस्माद्यस्माच्छब्दादेर्निमित्तान्निश्चराति निर्गच्छति ततस्ततस्तस्मात्तस्माच्छब्दादेः सकाशान्नियम्य तेषां शब्दादीनां मिथ्यात्वादिदोषदर्शनेनाभासीकृत्य वैराग्यभावनापूर्वकं निरुध्यैतन्मन आत्मन्येव वशं नयेद् आत्मवश्यतामापादयेद् एवं योगमभ्यसतोभ्यासबलादात्मन्येव मनः प्रशाम्यति ॥ २ ॥ मनःप्रशांतौ किं भवतीत्यत आह प्रशांतेति शांतरजसं प्रक्षीणमोहादिक्लेशरजसमत एव प्रशांतमनसं प्रकर्षेण अत्यर्थं शांतं विक्षेपशून्यं मनो यस्य तं ब्रह्मभूतं ब्रह्मैवेदं सर्वमिति निश्चयवत्तया जीवन्मुक्तमकल्मषमधर्मादिवर्जितमेनं योगिन उत्तमं क्षयित्वसातिशयित्वादिदोषरहितं सुखमुपैति उपगच्छति ॥ ३ ॥ संगृहीतार्थप्रपंचनपरान् तदीयानेव श्लोकान् पठति यत्रेति चित्तं यत्र यस्मिन् काले योगसेवया योगानुष्ठानेन सर्वस्माद्विषयात् निवारितं सदुपरमते उपरतिं गच्छति किं च यत्र यस्मिन् काले आत्मना समाधिपरिशुद्धेनांतःकरणेनात्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभ्यमानः स्वस्मिन्नेव तुष्यति तुष्टिं भजते न विषयेष्वित्यर्थः ॥ ४ ॥ किं च यत्र यस्मिन् काले आत्मनि स्थितोऽयं योगी आत्यंतिकमत्यंतमेव भवतीत्यात्यंतिकमनं-

यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ ५ ॥ यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ॥ यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ ६ ॥ तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥ स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ ७ ॥ युंजन्नेवं सदात्मानं योगी विगतकल्मषः ॥ सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ ८ ॥ उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिंदुना ॥ मनसो निग्रहस्तद्व-

---

तं बुद्धिग्राह्यमिन्द्रियनिरपेक्षया बुध्या गृह्यमाणमतींद्रियमिन्द्रियगोचरातीतमविषयजनितं यत्तदीदृशं सुखं वेत्ति अनुभवति किं च आत्मनि स्थितोयं तत्त्वतस्तस्मादात्मस्वरूपान्न चलति न प्रच्यवते ॥ ५ ॥ किं च यमात्मानं लब्ध्वा प्राप्य परं लाभं लाभांतरं ततोधिकं न मन्यते आत्मलाभान्न परं विद्यत इति स्मृतेः किं च यस्मिन्नात्मतत्त्वे स्थितो गुरुणा महतापि दुःखेन शस्त्राभिघातादिलक्षणेन प्रन्हाद इव न विचाल्यते ॥ ६ ॥ इदानीमुपपादितं योगं निगमयति तं विद्यादिति शनैः शनैरित्यादिना यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो यो योग उक्तस्तं दुःखसंयोगावियोगं दुःखैः संयोगोदुःखसंयोगस्तेन वियोगस्तं विपरीतलक्षणया योगसंज्ञितं योग इत्येवं संज्ञा यस्येति तं योगसंज्ञितं विद्याज्जानीयात् एवंविधयोगानुष्ठाने किं चित्कर्तव्यताविशेषमाह स निश्चयेनेति स पूर्वोक्तो योगो निश्चयेनाध्यवसायेनानिर्विण्णचेतसा निर्वेदरहितेन चित्तेन योक्तव्योऽनुष्ठेयः ॥ ७ ॥ इदानीमुक्तमर्थमुपसंहरति युंजन्निति विगतकल्मषो विगतपापो योगांतरायवर्जितो योगी सदात्मानमेवं यथोक्तेन प्रकारेण युंजन्ननुसंदधानः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणासंस्पर्शो यस्य सुखस्य तद्ब्रह्मसंस्पर्शं ब्रह्मस्वरूपभूतामितियावद् अत्यंतमविनश्वरं निरतिशयं सुखमश्नुते प्राप्नोतीत्यर्थः ॥ ८ ॥ अनिर्वेदेन क्रियमाणो योगाभ्यासः फलपर्यंतो भवतीत्येतत्सदृष्टांतमाह उत्सेक इति कुशाग्रेणोत्धृतेनैकेन बिंदुना क्रियमाण उदधेरुत्सेकः उद्धृत्य बहिः सेचनं

द्भवेदपरिखेददतः ॥ ९ ॥ बृहद्रथस्य राजर्षेः शाकायन्यो मुनिः सुखम् ॥ प्राह मैत्राख्यशाखायां समाध्युक्तिपुरःसरम् ॥ १० ॥ यथा निरिंधनो वन्हिः स्वयोनावुपशाम्यति ॥ तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥११॥ स्वयोनावुपशांतस्य मनसः सत्यकामिनः ॥ इंद्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥ १२ ॥ चित्तमेव हि संसा-

---

परिखेदाभावे सति यद्वत्कालांतरे भवेदेव तद्वत्मनसो निग्रहोपि श्रमराहित्येन क्रियमाणः कालांतरे सिद्ध्येद् इदं च टिट्टिभोपाख्यानं मनसि निधायोक्तम् ॥ ९ ॥ न केवलमयमर्थो गीतायामभिहितः किं तु मैत्रायणीयशाखायामपीत्याह बृहद्रथस्येति मैत्रायणीयनामके यजुःशाखाभेदे शाकायन्यनामा कश्चिदृषिः स्वशिष्यत्वेनोपपन्नस्य बृहद्रथाख्यस्य राजर्षेः ब्रह्मसुखं समाध्यभिधानपूर्वकं यथा भवति तथोक्तवान् ॥ १० ॥ केन प्रकारेणोक्तवानित्याशंक्य तत्प्रतिपादकांस्तदीयान् मंत्रान् पठति यथेति निरिंधनो दग्धकाष्ठो वन्हिः स्वयोनौ स्वकारणे तेजोमात्रे उपशाम्यति ज्वालादिरूपं विशेषाकारं परित्यज्य तेजोमात्ररूपे यथावतिष्ठते तथा तेनैव प्रकारेण चित्तमंतःकरणमपि वृत्तिक्षयान्निरोधसमाध्यभ्यासेन राजसादिसकलवृत्तिनाशात्स्वकारणे सत्त्वमात्रे उपशाम्यति सत्वमात्रावशेषं भवतीत्यर्थः ॥ ११ ॥ ततः किमत आह स्वयोनाविति सत्ये आत्मनि विषये कामोस्यास्तीति सत्यकामी तस्यात एव स्वयोनावुपशांतस्य उपशांतत्वादेव इंद्रियार्थविमूढस्येंद्रियार्थेषु विषयेषु शब्दादिषु विमूढस्य विमुखस्य ज्ञानशून्यस्य मनसः कर्मवशमनुगच्छंतीति कर्मवशानुगाः ससाधनाः सुखादयः अनृता मायिकत्वज्ञानेन मिथ्याभूताः स्युरित्यर्थः ॥ १२ ॥ ननु चित्तोपशान्तौ जगन्मिथ्याभवतीत्येतदनुपपन्नं तदुपादानकत्वाभावात्तस्येत्याशंक्याह चित्तमेवेति यद्यपि स्वरूपेण चित्तोपादानकं जगन्न भवति तथापि तस्य भोग्यत्वं चित्तकारणमेव हि शब्देनात्र सर्वानुभवं प्रमाणयति सुषुप्त्यादौ चित्तविलये भोगादर्शनादितिभावः यत-

रस्तत्प्रयत्नेन शोधयेत् ॥ यच्चित्तस्तन्मयो मर्त्यो गुह्यमेतत्सनातनम् ॥ १३ ॥ चित्तस्य हि प्रसादेन हंति कर्म शुभाशुभम् ॥ प्रसन्नात्मात्मनि स्थित्वा सुखमक्षय्यमश्नुते ॥१४॥समासक्तं यथा चित्तं जंतोर्विषयगोचरे॥यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बंधनात् ॥ १५ ॥ मनो हि द्विवि-

श्चित्तात्मकः संसारः अतस्तच्चित्तमेव प्रयत्नेनाभ्यासवैराग्यादिलक्षणेन शोधयेद् रजस्तमोराहित्येनैकाग्रं कुर्यात् नन्वात्मनो विमुक्तये आत्मैव शोधनीयो न चित्तमित्याशंक्याह यच्चित्त इति मर्त्य इत्युपलक्षणं देहिमात्रस्य यो देही यच्चित्तो यस्मिन् पुत्रादौ विषये चित्तवान् भवति स तन्मयः तदात्मक एव तत्साकल्यवैकल्ययोरात्मन्येव समारोपणाद् एतत्सनातनमिदमनादिसिद्धं गुह्यं रहस्यम् एतदुक्तं भवति स्वभावतः शुद्धस्यात्मनो यतश्चित्तसंपर्कादेव संसारित्वं ध्यायतीव लेलायतीवेतिश्रुतेः अतश्चित्तस्य शोधनेनात्मनः संसारनिवृत्तिरिति ॥ १३ ॥ नन्वनादिभवपरंपरोपार्जितसुखदुःखप्रदपुण्यपापकर्मणोः सतोश्चित्तशोधनेनापि कथमात्मनः संसारनिवृत्तिर्भविष्यतीत्याशंक्य चित्तप्रसादोपलक्षितब्रह्मानुसंधानेन सकलकर्मक्षयोपपत्तेर्मैवमिति परिहरति चित्तस्येति हिशब्देन तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयंते उपपातकेषु सर्वेषु पातकेषु महत्सु च प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्, इत्यादिश्रुतिस्मृतिप्रसिद्धिं द्योतयति ततः किमित्यत आह प्रसन्नेति प्रसन्न आत्मा चेतो यस्य स तथोक्तः आत्मनि स्वस्वरूपभूते अद्वितीयानंदलक्षणे ब्रह्मणि स्थित्वा तदेवाहमितिनिश्चयेन दृश्यजातं परित्यज्य चिन्मात्ररूपेणावस्थायाक्षय्यमविनाशि यत्सुखं स्वरूपभूतं तदश्नुते ॥ १४ ॥ प्रसन्नात्मात्मनि स्थित्वेत्युक्तमेवार्थं दृष्टांतोक्तिपुरःसरं द्रढयति समासक्तमिति प्राणिनाश्चित्तं विषय एव गोचरः इंद्रियप्रचारभूमिस्तस्मिन्यथा स्वभावतः सम्यगासक्तं भवति तदेव चित्तं ब्रह्मणि प्रत्यगभिन्ने परमात्मनि यद्येवमासक्तं स्यात्तर्हि कः संसारान्न मुच्येत सर्वोपि मुच्येतैवेत्यर्थः ॥ १५ ॥ उक्तार्थदार्ढ्याय मनसोवांतरभेदमाह मन इति

धं प्रोक्तं शुद्धं चाशुद्धमेव च ॥ अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ॥ १६ ॥ मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ १७ ॥ समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ॥ न शक्यते वर्णयितुं गिरा तदा स्वयं तदंतःकरणेन गृह्यते ॥ १८ ॥ यद्यप्यसौ चिरं कालं समाधिर्दुर्लभो नृणाम् ॥ तथापि क्षणिको ब्रह्मानंदं निश्चाययत्यसौ ॥ १९ ॥ श्रद्धालुर्व्यसनी योऽत्र निश्चिनोत्येव सर्वथा ॥ निश्चिते तु सकृत्तस्मिन् विश्व-

---

तत्र कारणमाह अशुद्धमिति काम इत्युपलक्षणं क्रोधादेरपि ॥ १६ ॥ द्विविधस्य तस्यैव क्रमेण संसारमोक्षयोर्हेतुतां दर्शयति मन एवेति ॥१७॥ प्रसन्नात्माऽत्मनि स्थित्वा सुखमक्षय्यमश्नुत इत्युक्तमेवार्थं श्रुतिः स्वयमेव प्रपंचयति समाधीति आत्मनि प्रत्यक्स्वरूपे निवेशितस्य समाधिनिर्धूतमलस्य समाधिना प्रत्यग्ब्रह्मणोरैक्यगोचरप्रत्ययावृत्त्या निर्धूतमलस्य निःशेषेण निवारितरजस्तमोमलस्य चेतसस्तस्मिन् समाधौ यत्सुखमुत्पद्यते तदा समाधावुत्पन्नं तत्सुखं गिरा वाचा वर्णयितुं न शक्यते अलौकिकसुखत्वादित्यर्थः किं तु स्वयं तत्स्वरूपभूतं सुखमंतःकरणेनैव गृह्यते ॥ १८ ॥ नन्वस्यैव समाधेर्दुर्लभत्वात्कथमनेन ब्रह्मानंदनिश्चयसंभव इत्याशंक्याह यद्यपीति अस्य समाधेः संततस्यासंभवेऽपि क्षणिकस्य तस्य संभवात्तेनैवायमानंदो निश्चेतुं शक्यत इत्यर्थः ॥ १९ ॥ नन्वात्मदर्शनाय श्रवणादौ प्रवृत्ता अपि केचिदानंदनिश्चयशून्या बहिर्मुखा एव वर्तंत इत्याशंक्य श्रद्धादिरहितानां तथात्वेपि श्रद्धादिमतां तन्निश्चयो भवत्येवेत्याह श्रद्धालुरिति व्यसनं सर्वथा संपादयिष्यामीत्याग्रहः तद्वान् व्यसनी अत्र समाधौ सर्वथा अवश्यम्, ततः किमित्यत आह निश्चिते त्विति अस्मिन् ब्रह्मानंदे सकृदेकदा क्षणिकसमाधौ निश्चिते सति अयं सकृन्निश्चयवानन्यदापि इतरस्मिन्नपि काले विश्वसिति आनंदोऽस्ती-

सित्यन्यदाप्ययम् ॥ २० ॥ तादृक् पुमानुदासीनकालेप्यानंदवासनाम् ॥ उपेक्ष्य मुख्यमानंदं भावयत्येव तत्परः ॥ २१ ॥ परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ॥ तदेवास्वादयत्यंतः परसंगरसायनम् ॥ २२ ॥ एवं तत्त्वे परे शुद्धे धीरो विश्रांतिमागतः ॥ तदेवास्वादयत्यंतर्बहिर्व्यवहरन्नपि ॥ २३ ॥ धीरत्वमक्षप्राबल्येप्यानंदास्वादवांछया ॥ तिरस्कृत्याखिलाक्षाणि तच्चिंतायां प्रवर्तनम् ॥ २४ ॥ भारवाही शिरोभारं मुक्त्वास्ते विश्रमं गतः ॥ संसारव्यापृतित्यागे तादृक्बुद्धिस्तु विश्रमः ॥ २५ ॥ विश्रांतिं परमां प्राप्तस्त्वौदासीन्ये यथा तथा ॥ सुखदुः-

ति विश्वासं करोति ॥ २० ॥ ततोपि किं तत्राह तादृगिति तादृक् पुमान् श्रद्धादिपुरःसरं सकृन्निश्चयवान् पुरुष औदासीन्यदशायामपि उपलभ्यमानां पूर्वोक्तामानंदवासनामुपेक्ष्य तत्परो मुख्यानंदे तात्पर्यवान् भूत्वा तमेव भावयति ॥ २१ ॥ एवं व्यवहारकालेपि निजानंदं भावयतीत्यत्र दृष्टांतमाह परेति ॥ २२ ॥ दार्ष्टांतिके योजयति एवमिति ॥ २३ ॥ धीरशब्दार्थमाह धीरत्वमिति इंद्रियाणां विषयाभिमुख्येन पुरुषाकर्षणसामर्थ्येपि स्वरूपसुखानुसंधानेच्छया सर्वाणींद्रियाणि तिरस्कृत्यानंदानुसंधान एव प्रवर्तमानत्वं धीरत्वमित्यर्थः ॥ २४ ॥ विश्रांतिशब्दस्य विवक्षितमर्थं सदृष्टांतमाह भारवाहीति यथा लोके भारं वहन् पुरुषः श्रमहेतुं शिरसि स्थितं भारं परित्यज्य श्रमरहितो वर्तते तथा संसारव्यापारत्यागे सति श्रमरहित आसमिति जायमाना या बुद्धिः सा विश्रमशब्देनोच्यत इत्यर्थः ॥ २५ ॥ इदानीं फलितमर्थमाह विश्रांतिमिति परमां निरतिशयां विश्रांतिमुक्तलक्षणां प्राप्तः पुरुषः स्वस्य औदासीन्यऽदशायां यथा परमानंदास्वादने तात्पर्यवान् भवति एवं सुखदुःखहेतुप्राप्तिकालेपि तदनुसंधानं परित्यज्य निजानंदास्वादनएव तात्पर्यवान् भवतीत्यर्थः ॥ २६ ॥ ननु दुःखस्य प्रतिकूलत्वेन तदनुसंधानेच्छाभावेपि

खदशायां च तदानंदैकतत्परः ॥ २६ ॥ अग्निप्रवेशहेतौ धीः शृंगारे यादृशी तथा ॥ धीरस्योदेति विषयेऽनुसंधानविरोधिनि ॥ २७ ॥ अविरोधिसुखे बुद्धिः स्वानंदे च गमागमौ ॥ कुर्वत्यास्ते क्रमादेषा काकाक्षिवदितस्ततः ॥ २८ ॥ एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः ॥ यात्यायात्येवमानंदद्वये तत्त्वविदो मतिः ॥ २९ ॥ भुंजानो विषयानंदं ब्रह्मानंदं च तत्त्ववित् ॥ द्विभाषाभिज्ञवद्विद्यादुभौ लौकिकवैदिकौ ॥ ३० ॥ दुःखप्राप्तौ नचोद्वेगो यथापूर्वं यतो द्विदृक् ॥ गंगा-

---

वैषयिकसुखस्यानुकूलत्वेन पुरुषैरर्थ्यमानत्वात्तदनुसंधानेच्छा कुतो न भवेदित्याशंक्य तस्य विषयसंपादनादिद्वाराऽतीव बहिर्मुखत्वापादनेन निजानंदानुसंधानविरोधित्वात्तादिच्छापि विवेकिनो न जायत इति दृष्टांतप्रदर्शनपूर्वकमाह अग्नीति शीघ्रं देहविमोचनेच्छायां दृढतरायां सत्यां तद्विलंबकारणे अलंकारादौ यथा अग्निप्रवेष्टुर्वैरस्यबुद्धिरुत्पद्यते एवं वैराग्यादिसाधनसंपन्नस्य विवेकिनो ब्रह्मानुसंधानविरोधिनि विषयसुखेऽपीत्यर्थः ॥ २७ ॥ मा भूद्विरोधिविषये सुखेच्छा अप्रयत्नसौलभ्येनाबहिर्मुखत्वहेतौ विषये किं न भवतीत्यत आह अविरोधीति ॥ २८ ॥ दृष्टांतं विवृणोति एकैव दृष्टिरिति यथा काकस्य दृष्टिर्दृश्यतेनयेति दर्शनसाधनं चक्षुरिंद्रियमेकमेव वामदक्षिणनेत्रयोः गोलकयोः पर्यायेण गमनागमने करोति एवं विवेकिनो बुद्धिरप्यानंदद्वयइत्यर्थः ॥ २९ ॥ दार्ष्टांतिकं प्रपंचयति भुंजान इति तत्त्वविद्वि विषयान् भुंजानस्तज्जन्यं विषयानंदमुपानिषद्वाक्यादवगतं ब्रह्मानंदं च लौकिकवैदिकावुभौ विषयानंदब्रह्मानंदौ भाषाद्वयवेदिवज्जानीयादित्यर्थः ॥ ३० ॥ ननु दुःखानुभवदशायामुद्वेगे सति कथं निजानंदानुभव इत्याशंक्याह दुःखेति यतो यस्मात्कारणाद्विवेकी द्विदृक् लौकिकवैदिकव्यवहारयोरुभयोरपि वेत्ता अतो दुःखप्राप्तावपि पूर्ववदज्ञानदशायामिव न तस्योद्वेगः विवेकेन तदा तदा बोध्यमानत्वादतो दुःखानुभवकालेपि निजानंदानुसंधानं न

मग्नार्द्धकायस्य पुंसः शीतोष्णधीर्यथा ॥ ३१ ॥ इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा ॥ भाति तद्वासनाजन्ये स्वप्ने तद्भासते तथा ॥ ३२ ॥ अविद्यावासनाप्यस्तीत्यतस्तद्वासनोत्थिते ॥ स्वप्ने मूर्खवदेवैष सुखं दुःखं च वीक्षते ॥ ३३ ॥ ब्रह्मानंदाभिधे ग्रंथे ब्रह्मानंदप्रकाशकम् ॥ योगिप्रत्यक्षमध्याये प्रथमेऽस्मिन्नुदीरितम् ॥ ३४ ॥ इति ब्रह्मानंदे योगानंदो नाम प्रथमोऽध्यायः १ ॥ ११ ॥ ५

---

विरुद्ध्यत इत्यर्थः युगपदुभयानुसंधाने दृष्टांतमाह गंगेति ॥ ३१ ॥ फलितमाह इत्थमिति सदा सुखदुःखानुभवदशायां तूष्णींस्थितौ चेत्यर्थः न केवलं जागरण एव तद्भानं किं तु स्वप्नावस्थायामपीत्याह तद्वासनेति हेतुगर्भं विशेषणं जाग्रद्वासनाजन्यत्वात्स्वप्नस्य तत्रापि तद्ब्रह्मसुखं तथाजाग्रदवस्थायामिव भासत इत्यर्थः ॥ ३२ ॥ ननुस्वप्नस्यानंदानुभववासनाजन्यत्वे सति आनंद एव भासत इत्याशंक्याह अविद्येति न केवलमानंदवासनाबलादेव स्वप्नो जायते किं तु अविद्यावासनाबलादपि अतस्तद्वासनाजन्यत्वात्तत्राज्ञस्येव सुखाद्यनुभवो भवतीत्यर्थः ॥ ३३ ॥ एतावता ग्रंथसंदर्भेणोक्तमर्थं निगमयति ब्रह्मानंदेति ब्रह्मानंदनामके अध्यायपंचात्मके ग्रंथेऽस्मिन् प्रथमेऽध्याये सुषुप्त्यवस्थायामौदासीन्यकालेपि समाध्यवस्थायां सुखदुःखदशायां च स्वप्रकाशचिद्रूपब्रह्मानंदस्य प्रकाशकं योग्यनुभवरूपं प्रत्यक्षमुक्तमित्यर्थः इदं चोपलक्षणमागमादीनां तेषामप्यत्र दर्शितत्वात् ॥ १३४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचिते ब्रह्मानंदे योगानंदो नाम प्रथमोऽध्यायः ॥ १ ॥ ५ ५ ५ ५ ५

## ॥ इति ब्रह्मानन्दे योगानन्दः ॥

---

ब्रह्मानन्दे आत्मानंदः प्रकरणं १२.

श्रीगणेशाय नमः ॥ अथात्मानंदः ॥ नन्वेवं वासनानंदाद्ब्रह्मानंदादपीतरम् ॥ वेत्तु योगी निजानंदं मूढस्यात्रास्ति का गतिः ॥ १ ॥ धर्माधर्मवशादेष जायतां म्रियतामपि ॥ पुनः पुनर्देहलक्षैः किन्नो दाक्षिण्यतो वद ॥ २ ॥ अस्ति वोनुजिघृक्षुत्वाद्दाक्षिण्येन प्रयोजनम् ॥ तर्हि ब्रूहि स मूढः किं जिज्ञासुर्वा पराङ्मुखः ॥ ३ ॥ उपास्तिं कर्म

श्रीगणेशाय नमः अथात्मानंदव्याख्या अथ ब्रह्मानंदांतर्गतमात्मानंदनामकद्वितीयाध्यायमारभते तदेवं प्रथमाध्याये विवेकिनो योगेन निजानंदानुभवप्रकारं प्रदर्श्य मूढस्य जिज्ञासोरात्मानंदशब्दवाच्यत्वं पदार्थविवेचनमुखेन ब्रह्मानंदानुभवप्रकारप्रदर्शनाय शिष्यप्रश्नमवतारयति नन्वेवमिति ॥ १ ॥ शिष्येणैवंपृष्टो गुरुरतिमूढस्य विद्याधिकार एव नास्तीत्याह धर्मेति एषोऽतिमूढोऽनादौ संसारेऽतीतेषु जन्मसु अनुष्ठितसुकृतदुष्कृतवशान्नानाविधदेहस्वीकारेण पुनः पुनर्जायतां म्रियतां चेत्यर्थः ॥ २ ॥ सर्वानुग्राहकत्वादाचार्येण तस्याऽपि का चन गतिर्वक्तव्येतिशिष्य आह अस्तीति वो युष्माकमनुजिघृक्षुत्वादनुग्रहीतुमिच्छवोनुजिघृक्षवस्तेषां भावस्तत्त्वं तस्माच्छिष्योद्धरणेच्छायुक्तत्वाद्दाक्षिण्यतस्तदुद्धरणलक्षणं प्रयोजनमस्तीत्यर्थः एवं शिष्यवचनमाकर्ण्य गुरुस्तं विकल्प्य पृच्छति तर्हीति यदि मूढस्य का चन गतिर्वक्तव्या तर्हि मूढः किं रागी विरक्तो वा वदेति ॥ ३ ॥ रागी चेत्तद्रागानुसारेण कर्म वोपासनं वा वक्तव्यमिति प्रथमे परिहारमाह उपास्तिमिति विमुखाय तत्त्वज्ञानविमुखाय बहिर्मुखायेत्यर्थः यथोचितं यथायोग्यं ब्रह्मलोकादिकामश्चेदुपास्तिं ब्रूयात् स्वर्गादिकामश्चेत्कर्म ब्रूयादित्यर्थः जिज्ञासुत्वेपि सोतिविवेकी मंदप्रज्ञो वेति विकल्प्यातिविवेकिनः पूर्वाध्यायोक्तप्रकारेण योगेन ब्रह्मसाक्षात्कारमभि-

वा ब्रूयाद्विमुखाय यथोचितम् ॥ मंदप्रज्ञं तु जिज्ञासुमात्मानंदेन बोधयेत् ॥ ४ ॥ बोधयामास मैत्रेयीं याज्ञवल्क्यो निजप्रियाम् ॥ न वा अरे पत्युरर्थे पतिः प्रिय इतीरयन् ॥ ५ ॥ पतिर्जाया पुत्रवित्ते पशुब्राह्मणबाहुजाः ॥ लोका देवा वेदभूते सर्वं चात्मार्थतः प्रियम् ॥६॥ पत्याविच्छा यदा पत्न्यास्तदा प्रीतिं करोति सा ॥ क्षुदनुष्ठानरोगाद्यैस्तदा नेच्छति तत्पतिः ॥ ७ ॥ न पत्यु-

---

प्रेत्य मंदप्रज्ञस्य तद्दर्शनोपायमाह मंदेति यो मंदप्रज्ञः मंदा जडा प्रज्ञा बुद्धिर्यस्य समंदप्रज्ञः तं मंदप्रज्ञं ज्ञातुमिच्छुः जिज्ञासुः तमात्मानंदेन आत्मानंदविवेचनमुखेन बोधयेत् ॥ ४ ॥ एवं केन को बोधित इत्यत आह बोधयामासेति याज्ञवल्क्य एतन्नामको यजुःशाखाविशेषप्रवर्तकः कश्चिदृषिः मैत्रेयीमेतन्नामिकां निजप्रियां स्वभार्यां न वा अरे पत्युरर्थे पतिः प्रिय इति न वा अरे पत्युः कामाय पतिः प्रियो भवति इत्यादिप्रकारेण ईरयन् ब्रुवन् बोधयामास बोधितवानित्यर्थः ॥ ५ ॥ उत्तरत्र परप्रेमास्पदत्वेन परमानंद इष्यतामितिवाक्येन परप्रेमास्पदत्वेन हेतुनात्मनः परमानंदरूपतां सिसाधयिषुः आदौ परप्रेमास्पदत्वहेतुसमर्थनाय तावदुदाहृतवाक्यस्योपलक्षणपरतामभिप्रेत्य तत्प्रकरणस्थसकलपर्यायवाक्यतात्पर्यमाह पतिरिति पतिजायादिकं भोग्यजातं भोक्तुः शेषत्वाद् भोक्तुः संबंधेनैव प्रियं न स्वरूपेणेत्यभिप्रायः ॥ ६ ॥ इदानीं पूर्वोदाहृतस्य न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवतीत्यस्य वाक्यस्य तात्पर्यार्थं विभज्य दर्शयति पत्याविति यदा यस्मिन्काले पत्न्याः जायायाः पत्यौ भर्तरि विषये इच्छा कामो भवति तदा सा पत्नी पत्यौ प्रीतिं स्नेहं करोति यदा तत्पतिः क्षुधादिना इच्छाभावहेतुना युक्तो भवति चेत्तदा तं नेच्छति न कामयते ॥ ७ ॥ एवं च सति किं फलितमित्यत आह न पत्युरिति जायया क्रियमाणा या प्रीतिः सा पत्युरर्थे पत्युः प्रयोजनाय न

रर्थे सा प्रीतिः स्वार्थ एव करोति ताम् ॥ पतिश्चात्मन एवार्थे न जायार्थे कदा चन ॥ ८ ॥ अन्योन्यप्रेरणेप्येवं स्वेच्छयैव प्रवर्तनम् ॥ ९ ॥ श्मश्रुकंटकवेधेन बाले रुदति तत्पिता ॥ चुंबत्येव न सा प्रीतिर्बालार्थे स्वार्थ एव सा ॥ १० ॥ निरिच्छमपि रत्नादिवित्तं यत्नेन पालयन् ॥ प्रीतिं करोति स स्वार्थे वित्तार्थत्वं न शंकितम् ॥ ११ ॥ अनिच्छति बलीवर्दे विवाहयिषते बलात् ॥ प्रीतिः सा

---

किं तु जाया तां पत्यौ प्रीतिं स्वार्थ एव स्वप्रयोजनायैव करोति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जायाप्रिया भवतीत्यादि न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यंतानां वाक्यानां तात्पर्यं क्रमेण विभज्य दर्शयति पतिश्चेत्यादिना पतिश्च भर्तापि स्वप्रयोजनायैव जायायां प्रीतिं करोति न जायाप्रीतय इत्यर्थः ॥ ८ ॥ नन्वेकैककामनया प्रवृत्तौ प्रीतिः स्वार्था भवतु युगपदुभयेच्छया प्रवृत्तौ तु प्रीतेरुभयार्थता स्यादित्याशंक्याह अन्योन्येति एवमुक्तेन प्रकारेण स्वेच्छयैव स्वकामनापूरणेच्छयैव प्रवर्तनमुभयोरपीतिशेषः ॥ ९ ॥ स्वेच्छया प्रवर्तनमेव दर्शयति श्मश्रुकंटकेति पित्रा क्रियमाणं पुत्रमुखादिचुंबनं न पुत्रप्रीत्यर्थं तस्य श्मश्रुकंटकवेधेन रोदनकर्तृत्वादतस्तत्पितुः स्वतुष्ट्यर्थमेवेत्यवगंतव्यमित्यर्थः ॥ १० ॥ चेतनेषु पतिजायापुत्रेषु क्रियमाणायाः प्रीतेः स्वार्थत्वपरार्थत्वसंदेहसंभवादचेतनत्वेनेच्छामात्ररहितस्य वित्तविषयस्य तच्छंकैव नास्तीत्यभिप्रेत्य न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवतीत्यस्य वाक्यस्य तात्पर्यमाह निरिच्छमपीति ॥ ११ ॥ चेतनत्वेपि वहनादीच्छारहितपशुविषयस्य न वा अरे पशूनामित्यस्य वाक्यस्य तात्पर्यमाह अनिच्छतीति बलीवर्दे अनडुहि अनिच्छति भारं वोढुमिच्छामकुर्वत्यपि बलाद्विवाहयिषते वाहयितुं कामयते तत्र वहनादिविषयायाः प्रीतेः वणिगर्थतैव न बलीवर्दार्थतेत्यर्थः

वणिगर्थैव बलीवर्दार्थता कुतः ॥ १२ ॥ ब्राह्मण्यं मेस्ति पूज्योहमिति तुष्यति पूजया ॥ अचेतनाया जातेर्नो संतुष्टिः पुंस एव सा ॥ १३ ॥ क्षत्रियोहं तेन राज्यं करोमीत्यत्र राजता ॥ न जातेर्वैश्यजात्यादौ योजनायेदमीरितम् ॥ १४ ॥ स्वर्गलोकब्रह्मलोकौ स्तां ममेत्यभिवांछनम् ॥ लोकयोर्नोपकाराय स्वभोगायैव केवलम् ॥ १५ ॥ ईशविष्ण्वादयो देवाः पूज्यंते पापनष्टये ॥ न तन्निष्पापदेवार्थं तत्तु स्वार्थं प्रयुज्यते ॥ १६ ॥ ऋगादयो ह्यधीयंते दुर्ब्राह्मण्यानवाप्तये ॥ न तत्प्रसक्तं वेदेषु मनुष्येषु प्रसज्जते ॥ १७ ॥ भूम्यादिपंचभूतानि स्थानतृट्पाकशोषणैः ॥

---

॥ १२ ॥ न वा अरे ब्रह्मणः कामायेतिवाक्यस्य तात्पर्यमाह ब्राह्मण्यमिति ब्राह्मण्यनिमित्तया पूजया ब्राह्मणोहमस्मीत्यभिमानवानेव तुष्यति न जडा जातिरित्यर्थः ॥ १३ ॥ न वा अरे क्षत्रस्येत्यादिवाक्यस्य तात्पर्यमाह क्षत्रिय इति राज्योपभोगनिमित्तं सुखं क्षत्रियत्वजातिमत एव न क्षत्रियत्वजातेरित्यर्थः इदं क्षत्रियोदाहरणं वैश्याद्युपलक्षणार्थमित्याह वैश्यजात्यादाविति ॥ १४ ॥ न वा अरे लोकानां कामायेत्यादिवाक्यस्य तात्पर्यमाह स्वर्गलोक इति लोकद्वयोपादानं कर्मोपासनालक्षणसाधनद्वयसंपाद्यसकललोकोपलक्षणार्थम् ॥ १५ ॥ किं च ईशविष्ण्वादय इति पापनष्टये पापनिवृत्तय इत्यर्थः तत्पूजनं न निष्पापदेवार्थं स्वतः पापरहितानां देवानां प्रयोजनाय किं तु स्वार्थं पूजाकर्तुः प्रयोजनाय ॥ १६ ॥ किं च ऋगादय इति दुर्ब्राह्मण्यं व्रात्यत्वं तच्च दुर्ब्राह्मण्यं मनुष्येषु मनुष्यत्वावांतरजातिरूपं तद्रहितेषु वेदेषु न प्रसज्जत इत्यर्थः ॥ १७ ॥ किं च भूम्यादीति सर्वे प्राणिनः स्थानप्रदानतृट्निवारणपाककरणार्द्रशोषणावकाशप्रदानाख्यैर्हेतुभिर्निमित्तैः पृथिव्यादीनि पंचभूतानि वांछति अपेक्षंते एषां पृथिव्यादीनां तु हेतवः स्थानवांछनादीनि निमित्तानि न संति अतो

हेतुभिश्चावकाशेन वांछंत्येषां न हेतवः ॥ १८ ॥ स्वामिभृत्यादिकं सर्वं स्वोपकाराय वांछति ॥ तत्तत्कृतोपकारस्तु तस्य तस्य न विद्यते ॥ १९ ॥ सर्वव्यवहृतिष्वेवमनुसंधातुमीदृशम् ॥ उदाहरणबाहुल्यं तेन स्वां वासयेन्मतिम् ॥ २० ॥ अथ केयं भवेत्प्रीतिः श्रूयते या निजात्मनि ॥ रागो वध्वादिविषये श्रद्धा यागादिकर्मणि ॥ भक्तिः स्याद्गुरुदेवादाविच्छा त्वप्राप्तवस्तुनि ॥ २१ ॥ तर्ह्यस्तु सात्विकी वृत्तिः सुखमात्रानुवर्तिनी ॥ प्राप्ते नष्टेपि

---

न स्वयमाकांक्षंत इत्यर्थः ॥ १८ ॥ इदानीं न वा अरे सर्वस्य कामायेत्यस्य वाक्यस्य तात्पर्यमाह स्वामीति भृत्यादिसर्वो जनः स्वाम्यादिकं सर्वं स्वोपकाराय स्वप्रयोजनाय वांछति एवं स्वाम्यादिरपि ॥ १९ ॥ ननु श्रुतावेवं बहूदाहरणदर्शनं किमर्थं कृतमित्याशंक्याह सर्वव्यवहृतिष्विति इच्छापूर्वकेषु सर्वेष्वपि भोजनादिव्यवहारेषु एवमात्मनस्तु कामाय सर्वं प्रियं भवतीत्युक्तेन प्रकारेणानुसंधातुमनुसंधानाय ईदृशं पतिजायादिषु प्रीतिदर्शनरूपमुदाहरणबाहुल्यमुक्तमितिशेषः तेन कारणेन स्वां स्वसंबंधिनीं मतिं बुद्धिं वासयेत् सर्वस्यापि स्वशेषत्वावगमेन स्वात्मनःप्रियतमत्वानुसंधानवतीं कुर्यादित्यर्थः ॥ २० ॥ नन्वात्मशेषत्वेन सर्वस्य प्रियत्वोक्तेरात्मनः प्रियतमत्वमुक्तमनुपपन्नं प्रीतिविकल्पे क्रियमाणे प्रीतेरेव दुर्निरूपत्वादित्यभिप्रायेण प्रीतिस्वरूपं पृच्छति अथेति अथशब्दः प्रश्नार्थः या निजात्मनि प्रीतिः श्रूयते इयं का किं रागरूपा किं वा श्रद्धारूपा उत भक्तिरूपा यद्वेच्छारूपेति किं शब्दार्थः चतुर्ष्वपि पक्षेषु प्रीतेः सर्वविषयत्वं न संभवतीत्याह राग इति रागश्चेद्वध्वादिष्वेव स्यान्न यागादिषु श्रद्धाचेद्यागादिष्वेव स्यान्न वध्वादिषु भक्तिश्चेद् गुर्वादिष्वेव स्यान्नेतरेषु इच्छाचेदप्राप्तवस्तुविषयैव स्यान्नेतरविषया अतो न सर्वविषयत्वं प्रीतेरित्यर्थः ॥ २१ ॥ उक्तप्रकारचतुष्टयातिरिक्तं पक्षमादायोत्तरमाह तर्ह्यस्त्विति तर्हि प्रीतेः रागादिरूपत्वासंभवे सति

सद्भावादिच्छातो व्यतिरिच्यते ॥ २२ ॥ सुखसाधनतो-पाधेरन्नपानादयः प्रियाः ॥ २३ ॥ आत्मानुकूल्यादन्नादि-समश्चेदमुनात्र कः ॥ अनुकूलयितव्यः स्यान्नैकस्मिन्कर्म-कर्तृता ॥ २४ ॥ सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रि-यः ॥ सुखे व्यभिचरत्येषा नात्मनि व्यभिचारिणी ॥२५॥

सुखमात्रानुवर्तिनी सुखमेव सुखमात्रमनुसृत्य वर्तत इति सुखमात्रानु-वर्तिनी सुखैकगोचरेत्यर्थः सात्विकी सत्वगुणपरिणामरूपा वृत्तिरंतःक-रणवृत्तिः प्रीतिरस्तु ननु तर्हि सा प्रीतिरिच्छैवेत्याशंक्य परिहरति प्राप्त इति इच्छा तावदप्राप्तसुखादिमात्रविषया इयं तु सर्वविषया प्राप्ते लब्धे सुखादौ नष्टेपि तस्मिन्विषये विद्यमानत्वाद् अत इच्छातः इच्छाया व्यतिरि-च्यते भिद्यते ॥ २२ ॥ इदानीं सुखसाधनभूतेष्वन्नादिष्विवात्मन्यपि प्रीति-दर्शनादात्मनोप्यन्नादिवत्सुखसाधनत्वं स्यादिति शंकते सुखेति अन्नपानादयः सुखसाधनत्वोपाधिना यथा प्रियाः दृष्टा आत्माप्यानुकूल्यात्प्रियत्वादन्नादिस-मोऽन्नपानादिवत्सुखसाधनं स्यादित्यर्थः ॥ २३ ॥ अत्रेदमनुमानं सूचि-तम् विमत आत्मा सुखसाधनं भवितुमर्हति प्रियत्वादन्नादिवदिति अन्न-पानादिषु भोग्यत्वमुपाधिरित्यभिप्रायेण परिहरति अमुनेति अत्र लोके अमुना सुखसाधनतयानुकूलेनानुकूलयितव्यः कः स्यान्न कोपि स्या-दात्मातिरिक्तस्य भोक्तुरभावादित्यर्थः ननु स्वयमेवानुकूलयितव्यः स्या-दित्यत आह नैकस्मिन्निति एकस्यैवात्मनो युगपदुपकार्यत्वमुपकारकत्वं च इति धर्मद्वयं विरुध्यत इत्यर्थः ॥ २४ ॥ नन्वन्नादिवत्सुखसाधनत्वा-भावेपि सुखवद्भोक्तृशेषता स्यादित्याशंक्य आत्मनो निरतिशयप्रेमास्पद-त्वान्नैवमिति परिहरति सुख इति वैषयिके विषयजन्ये सुखे प्रीतिमात्रं प्रीतिरेव न निरतिशया आत्मा त्वतिप्रियो निरतिशयप्रेमविषयः अतो न विषयजन्यसुखतुल्य इत्यर्थः तत्रोभयत्रोपपत्तिमाह सुखे व्यभिचरतीति सुखे वैषयिके सुखे जायमाना एषा प्रीतिर्व्यभिचरति कदा चित्सुखांतरं ग-च्छति न तस्मिन्नेव नियतावतिष्ठते आत्मनि तु विद्यमाना प्रीतिर्न व्य-भिचारिणी विषयांतरगामिनी न भवति अतो निरतिशया सेत्यर्थः ॥२५॥

एकं त्यक्त्वाऽन्यदादत्ते सुखं वैषयिकं सदा ॥ नात्मा त्याज्यो न चादेयस्तस्मिन्व्यभिचरेत्कथम् ॥ २६ ॥ हानादानविहीनेस्मिन्नुपेक्षा चेत्तृणादिवत् ॥ उपेक्षितुः स्वरूपत्वान्नोपेक्ष्यत्वं निजात्मनः ॥ २७ ॥ रोगक्रोधाभिभूतानां मुमूर्षा वीक्ष्यते क चित् ॥ ततो द्वेषाद्भवेत्त्याज्य आत्मेति यदि तन्न हि ॥ २८ ॥ त्यक्तुं योग्यस्य देहस्य नात्मता त्यक्तुरेव सा ॥ न त्यक्तर्य्यस्ति स द्वेषस्त्याज्ये द्वेषे तु का क्षतिः ॥ २९ ॥ आत्मार्थत्वेन सर्वस्य प्रीतेश्चात्मा

---

सुखगोचरायाः प्रीतेर्व्यभिचारं दर्शयति एकमिति आत्मनि तु तदभावं दर्शयति नात्मेति अयोग्यत्वादित्यर्थः फलितमाह तस्मिन्निति ॥ २६ ॥ हानादिविषयत्वाभावेप्यात्मनस्तृणादिवदुपेक्षाविषयत्वं किं न स्यादिति शंकते हानेति हानं परित्यागः आदानं स्वीकारः उपेक्षा औदासीन्यम् आत्मनो हानाद्यविषयत्ववदुपेक्षाविषयत्वमपि न संभवत्ययोग्यत्वादित्यभिप्रायेण परिहरति उपेक्षितुरिति उपेक्षितुः उपेक्षाकर्तुः यो निजात्मा अविनाशिस्वरूपमस्ति तस्य स्वस्वरूपत्वादेव स्वव्यतिरिक्ततृणादिवदुपेक्ष्यत्वमुपेक्षाविषयत्वं न विद्यतइति शेषः ॥ २७ ॥ ननु हानविषयत्वमात्मनो नास्तीत्युक्तमनुपपन्नं द्वेषात्त्याज्यत्वदर्शनादिति शंकते रोगेति यतो मुमूर्षा दृश्यते तत आत्मनि द्वेषसंभवाद् वृश्चिकादिवदात्मापि त्याज्य इति यद्युच्येतेति शेषः तत्त्यागस्यात्मव्यतिरिक्तदेहविषयत्वान्मैवमिति परिहरति तन्न हीति ॥ २८ ॥ त्यक्तुमिति त्यक्तुमुत्स्रष्टुं योग्यस्योचितस्य देहस्यात्मता नास्ति कस्य तर्हि सेत्यत आह त्यक्तुरिति त्यक्तुर्देहत्यागकारिणो देहातिरिक्तस्य जीवस्य सा आत्मतेत्यर्थः भवतु त्यक्तुरात्मत्वं प्रकृते किमायातमित्यत आह न त्यक्तरीति अतो नात्मनस्त्याज्यत्वमित्यभिप्रायः मा भूदात्मनि विद्वेषः देहे तूपलभ्यत एवेत्याशंक्याह त्याज्येति त्याज्ये देहगोचरे द्वेषे सत्यपि का क्षतिरात्मनस्त्यागाभाववादिनो ममेति शेषः ॥२९॥ तदेवं न वा अरे पत्युः कामायेत्यारभ्यात्मनस्तु कामाय सर्वं प्रियं भवती-

ह्यतिप्रियः ॥ सिद्धो यथा पुत्रमित्रात्पुत्रः प्रियतरस्तथा ॥ ३० ॥ मा न भूवमहं किं तु भूयासं सर्वदेत्यसौ ॥ आशीः सर्वस्य दृष्टेति प्रत्यक्षा प्रीतिरात्मनि ॥ ३१ ॥ इत्यादिभिस्त्रिभिः प्रीतौ सिद्धायामेवमात्मनि ॥ पुत्रभार्यादिशेषत्वमात्मनः कैश्चिदीरितम् ॥ ३२ ॥ एतद्विवक्षया पुत्रे मुख्यात्मत्वं श्रुतीरितम् ॥ आत्मा वै पुत्रनामे-

---

त्यंतायाः श्रुतेस्तात्पर्यपर्यालोचनया आत्मनः प्रियतमत्वं प्रदर्श्य युक्तितोपि तद्दर्शयाति आत्मेति सर्वस्य सुखसहितस्य तत्साधनजातस्य पतिजायादेरात्मार्थत्वेन स्वस्योपकारकत्वेन प्रीतेश्च प्रियत्वादप्यात्मा उपकार्यः स्वयमतिशयेन प्रियः सिद्धो हि एतदेव दृष्टांतप्रदर्शनेन स्पष्टयति यथेति लोके यथा पुत्रमित्रात्पुत्रस्य मित्रभूतात् पुत्द्वारा प्रीतिविषयाद् यज्ञदत्तादेः सकाशात् पुत्रो देवदत्तादिरव्यवधानेन प्रीतिविषयत्वात्तस्मादतिशयेन प्रियो भवति पितुर्विष्णुदत्तादेस्तथा तद्वत्स्वसंबंधित्वेन प्रीतिविषयात् सर्वस्मात्स्वयमतिशयेन प्रियो भवतीत्यर्थः ॥ ३० ॥ एवमात्मनि श्रुतियुक्तिभ्यामुपपादितां निरतिशयां प्रीतिं स्वानुभवप्रदर्शनेन द्रढयति मा न भूवमिति अहं मा भूवमिति न न कापि ममात्मसत्त्वमस्तु किं तु सर्वदा भूयासं सदा मम सत्ताऽस्तु इत्येवंरूपा आशीः प्रार्थना सर्वस्य प्राणिजातस्य संबंधिनी दृष्टा सर्वोप्येवमेव प्रार्थयत इत्यर्थः फलितमाह प्रत्यक्षेति यत एवं सर्वैः प्रार्थ्यते अत आत्मनि निरतिशया प्रीतिः प्रत्यक्षसिद्धेत्यर्थः ॥ ३१ ॥ वृत्तानुकीर्तनपुरःसरं मतांतरं दूषयितुमनुभाषते इत्यादिभिरिति इति शब्देनानुभवः परामृश्यते आदिशब्देन युक्तिश्रुती इत्यादिभिरनुभवयुक्तिश्रुतिलक्षणैः त्रिभिः प्रमाणैरेवमुक्तेन प्रकारेणात्मनि प्रीतौ सिद्धायामपि कैश्चित् श्रुत्यादितात्पर्यानभिज्ञैरात्मनः पुत्रभार्यादिशेषत्वं पुत्रादीन्प्रति स्वस्योपसर्जनत्वमीरितमभिहितम्॥ ३२॥ इदं कुतोवगतमित्यत आह एतदिति एतद्विवक्षया एवं कैश्चिदीर्यत इत्येतदभिव्यक्तीकरणाभिप्रायेण आत्मा वै पुत्रनामासीत्यादिकया श्रुत्या पु-

ति तच्चोपनिषदि स्फुटम् ॥ ३३ ॥ सोस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते ॥ अथास्येतर आत्मायं कृतकृत्यः प्रमीयते ॥ ३४ ॥ सत्यप्यात्मनि लोकोस्ति नापुत्रस्यात एव हि ॥ अनुशिष्टं पुत्रमेव लोक्यमाहुर्मनीषिणः ॥ ३५ ॥ मनुष्यलोको जय्यः स्यात्पुत्रेणैवेतरेण

---

त्रस्य मुख्यात्मत्वमीरितमित्यर्थः किं च तत्पुत्रस्य मुख्यात्मत्वमुपनिषदि ऐतरेयोपनिषदादौ स्फुटं व्यक्तमभिहितमिति शेषः ॥३३॥ केन वाक्येनेत्याकांक्षायां तद्वाक्यमर्थतः पठति सोस्येति अस्य पितुः सः पुरुषे ह्वा अयमादितो गर्भो भवतीतिप्रकरणादौ पुरुषे देहे गर्भत्वेनोक्तः अयं सोग्र एव कुमारं जन्मनोग्रेऽधिभावयतीत्यत्रातिशयेन पालनीयतयोक्तः पुत्ररूप आत्मा पुण्येभ्यः कर्मभ्यः पुण्यकर्मानुष्ठानाय प्रतिधीयते प्रतिनिधित्वेनावस्थाप्यते पित्रेति शेषः अथानंतरमस्य पितुरयं प्रत्यक्षेण परिदृश्यमान इतरः पुत्रादन्यो जरसा ग्रस्तः पितृरूप आत्मा स्वयं कृतकृत्योऽनुष्ठितकृत्यजातः सन् प्रमीयते म्रियत इत्यर्थः ॥ ३४ ॥ उक्तार्थस्य दृढीकरणाय पुत्ररहितस्य परलोकाभावप्रदर्शनपरस्य नापुत्रस्य लोकोस्तीतिवाक्यस्यार्थमाह सत्यपीति यतः पुत्रस्य मुख्यमात्मत्वमस्त्यत एवात्मनि स्वस्मिन्सत्यपि स्थितेप्यपुत्रस्य पुत्ररहितस्य पितुर्लोकः परलोको नास्ति हि इदं पुराणादिषु प्रसिद्धमित्यर्थः व्यतिरेकमुखेनोक्तस्यार्थस्यान्वयमुखेन प्रतिपादकस्यानुशिष्टं पुत्रं लोक्यमाहुरितिवाक्यस्यार्थमाह अनुशिष्टमिति मनीषिणः शास्त्रार्थाभिज्ञाः अनुशिष्टं वक्ष्यमाणैस्त्वं ब्रह्मेत्यादिभिर्मंत्रैः शिक्षितमेव पुत्रं लोक्यं लोकायहितं परलोकसाधनमाहुरित्यर्थः ॥ ३५ ॥ इदानीमैहिकसुखस्यापि पुत्रहेतुकत्वप्रतिपादनपरं सोयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणेतिश्रुतिवाक्यमर्थतः पठति मनुष्यलोक इति मनुष्यलोकसुखं पुत्रेणैव जय्यं स्यात्संपाद्यं स्यादितरेण कर्मादिना साधनांतरेण नो नैव भवति पुत्रशून्यस्य सुखसाधनमपि धनादिकं निर्वेदजनकं भवतीति भावः अनुशिष्टं पुत्रं लोक्यमित्यत्र पुत्रानुशासनमुक्तमिदा-

नो ॥ मुमूर्षुर्मंत्रयेत्पुत्रं त्वं ब्रह्मेत्यादिमंत्रकैः ॥ ३६ ॥ इत्यादिश्रुतयः प्राहुः पुत्रभार्यादिशेषताम् ॥ लौकिका अपि पुत्रस्य प्राधान्यमनुमन्वते ॥ ३७ ॥ स्वस्मिन्मृतेपि पुत्रादिर्जीवेद्वित्तादिना यथा ॥ तथैव यत्नं कुरुते मुख्याः पुत्रादयस्ततः ॥ ३८ ॥ बाढमेतावता नात्मा शेषो भवति कस्य चित् ॥ गौणमिथ्यामुख्यभेदैरात्मायं भवति त्रिधा ॥ ३९ ॥ देवदत्तस्तु सिंहोयमित्यैक्यं गौणमेतयोः ॥ भेदस्य भासमानत्वात्पुत्रादेरात्मता तथा ॥ ४० ॥ भेदो-

---

र्नीं तस्यावसरं तन्मंत्रांश्च दर्शयति मुमूर्षुरिति आदिशब्देन त्वं यज्ञस्त्वं लोक इतिमंत्रौ गृह्येते एभिस्त्वं ब्रह्मेत्यादिभिः त्रिभिर्मंत्रैः मुमूर्षुः पिता मरणावसरे पुत्रं मंत्रयेत् पुत्रस्यानुशासनं कुर्यादित्यर्थः ॥ ३६ ॥ उक्तमर्थं निगमयति इत्यादीति न केवलमयं श्रुतिसिद्धोर्थः किं तु लोकप्रसिद्धोपीत्याह लौकिका इति ॥ ३७ ॥ तदेवोपपादयति स्वस्मिन्निति स्वस्मिन्पित्रादौ एकेनादिशब्देन भार्यादयो गृह्यंते द्वितीयेन क्षेत्रादयः फलितमाह मुख्या इति यस्मात्स्वप्रयासं सोढ्वाऽपि पुत्रादिजीवनोपायं संपादयति ततस्तस्मात्पुत्रादयो मुख्याः प्रधानभूता इत्यर्थः ॥ ३८ ॥ एवं लोकप्रसिद्धिभ्यां प्रदर्शितं पुत्रादिप्राधान्यमंगीकरोति बाढमिति तर्ह्यात्मनः शेषित्वोपपादनं व्याकुप्येदित्याशंक्याह एतावतेति एतावता पुत्रादेः क्वचित्प्राधान्यमस्तीत्येतावता न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशंक्य यत्र यत्र व्यवहारे यस्य यस्य आत्मत्वं विवक्ष्यते तस्य तस्यात्मनः तत्र तत्र प्राधान्यदर्शनायोपोद्घातत्वेनात्मत्रैविध्यमाह गौणेति गौणात्मा मिथ्यात्मा मुख्यात्मा चेत्ययमात्मा त्रिधा भवति ॥ ३९ ॥ तत्र पुत्रादेर्गौणात्मत्वप्रदर्शनाय लोके गौणप्रयोगमुदाहरति देवदत्त इति अयं देवदत्तः सिंह इति यद्देवदत्तसिंहयोरैक्यं तद्गौणमौपचारिकं तत्र हेतुमाह एतयोरिति दार्ष्टांतिके योजयति पुत्रादेरिति ॥ ४० ॥ अनंतरं मिथ्यात्मानं दर्शयति भेद इति पंचकोशेष्वानंदमयाद्यन्नमयांतेषु पंचसु कोशेषु सा-

स्ति पंचकोशेषु साक्षिणो न तु भात्यसौ ॥ मिथ्यात्मताऽतः कोशानां स्थाणोश्चोरात्मता यथा ॥ ४१ ॥ न भाति भेदो नाप्यस्ति साक्षिणोऽप्रतियोगिनः ॥ सर्वांतरत्वात्तस्यैव मुख्यमात्मत्वमिष्यते ॥ ४२ ॥ सत्येवं व्यवहारेषु येषु यस्यात्मतोचिता ॥ तेषु तस्यैव शेषित्वं सर्वस्यान्यस्य शेषता ॥ ४३ ॥ मुमूर्षोर्गृहरक्षादौ गौणात्मैवोपयुज्य-

---

क्षिणः सकाशाद्विद्यमानोपि भेदो नावभासते अतस्तेषां मिथ्यात्मत्वमित्यर्थः मिथ्यात्मत्वे दृष्टांतमाह स्थाणोरिति वस्तुतश्चोराद्भिन्नस्य स्थाणोश्चोररूपत्वं यथा मिथ्या तद्वदित्यर्थः ॥ ४१ ॥ एवं गौणमिथ्यात्मानावुपपाद्येदानीं साक्षिणो मुख्यात्मत्वमुपपादयति न भातीति साक्षिणः साक्षिरूपस्यात्मनो गौणात्मनः पुत्रादेरिव कस्मादपि भेदो न भाति मिथ्यात्मनो देहादेरिव भेदो नास्त्यपि तत्रोभयत्र हेतुः अप्रतियोगिन इति हेतुगर्भितं विशेषणमप्रतियोगित्वाद्यथा पुत्रादेर्देहादेरपि स्वयं प्रतियोगी विद्यते नैवं स्वस्य वस्तुभूतः कश्चित्प्रतियोग्यस्ति देहादेः सर्वस्यारोपितत्वादिति भावः ननु भेदाभावेन साक्षिणो गौणमिथ्यात्वे मा भूतां मुख्यात्मत्वं तु कुत इत्यत आह सर्वेति सर्वस्माद्देहपुत्रादेरांतरत्वात्सर्वसाक्षिणः प्रतीचः सर्वांतरत्वेन प्रतीयमानत्वात्तस्यैव साक्षिण एव आत्मत्वं मुख्यमनौपचारिकमिष्यते अभ्युपगम्यत इत्यर्थः अत्रेदमनुमानं सूचितं विमतः साक्षी मुख्यात्मा भवितुमर्हति सर्वांतरत्वाद् यो मुख्यात्मा न भवति स सर्वांतरोपि न भवति यथाहंकारादिरिति केवलव्यतिरेकी ॥ ४२ ॥ भवत्वात्मत्रैविध्यं पुत्रादेः शेषित्वाभिधाने किमायातमित्यत आह सत्येवमिति एवमात्मत्रैविध्ये सत्यपि येषु लौकिकवैदिकलक्षणेषु पालनपोषणब्रह्मात्मत्वानुसंधानादिषु व्यवहारविशेषेषु यस्य पुत्रादेर्देहादेः साक्षिणो वा आत्मत्वमुचितं भवति तेषु तस्य पुत्रादेर्देहादेः साक्षिणो वा शेषित्वं प्रधानत्वमन्यस्य तद्व्यतिरिक्तस्य सर्वस्य शेषता उपसर्जनत्वं भवतीति शेषः ॥ ४३ ॥ एतदेव प्रपंचयति मुमूर्षोरित्यादिना श्लोक-

ते॥ न मुख्यात्मा न मिथ्यात्मा पुत्रः शेषी भवत्यतः ॥४४॥ अध्येता वन्हिरित्यत्र सन्नप्यग्निर्न गृह्यते ॥ अयोग्यत्वेन योग्यत्वाद्बटुरेवात्र गृह्यते ॥ ४५ ॥ कृशोहं पुष्टिमाप्स्यामीत्यादौ देहात्मतोचिता ॥ न पुत्रं विनियुंक्तेत्र पुष्टिहेत्वन्नभक्षणे ॥ ४६ ॥ तपसा स्वर्गमेष्यामीत्यादौ कर्त्रात्मतोचिता ॥ अनपेक्ष्य वपुर्भोगं चरेत्कृच्छ्रादिकं ततः ॥४७॥ मोक्ष्येहमित्यत्र युक्तं चिदात्मत्वं तदा पुमान् ॥ तद्वेत्ति गु-

---

पंचकेन गृहरक्षादौ कर्मविशेषे गौणात्मैव पुत्रभार्यादिरूप एवोपयुज्यते उपयुक्तो भवति उत्तरत्र जिजीविषुत्वादित्यर्थः मुख्यात्मा साक्षी नोपयुज्यते अविकारित्वान्नापि मिथ्यात्मा तस्य मरणोन्मुखत्वादिति भावः फलितमाह पुत्र इति स्पष्टम् ॥ ४४ ॥ उक्ते गृहरक्षादिव्यवहारे सत्यपि स्वस्मिन्पुत्रादिस्वीकारे दृष्टांतमाह अध्येतेति अयमध्येता वन्हिरित्यस्मिन्प्रयोगे स्वरूपेण विद्यमानोप्यग्निर्नाग्निशब्दार्थत्वेन गृह्यते तस्य अध्येतृत्वायोगात् किं तु अध्येतृत्वे योग्यो बटुर्माणवक एव अत्रास्मिन्प्रयोगे अग्निशब्दार्थत्वेन गृह्यते योग्यत्वादित्यर्थः ॥ ४५ ॥ एवं गौणात्मप्राधान्यस्थलमुदाहृत्य मिथ्यात्मप्राधान्यस्थलमुदाहरति कृश इति अहं कृशो जात अतोऽन्नभक्षणादिना पुष्टिं संपादयिष्यामीत्यादौ लोकव्यवहारेऽन्नभक्षणयोग्यस्य देहस्यैवात्मत्वं गृहीतुमुचितमुक्तमर्थं लोकव्यवहारप्रदर्शनेन द्रढयति न पुत्रमिति ॥ ४६ ॥ किं च तपसेति यदा तु तपः कृत्वा स्वर्गं संपादयिष्यामीत्यादिव्यवहारं करोति तदा कर्तृशब्दवाच्यविज्ञानमयस्यैवात्मत्वमुचितं न देहादेरित्यर्थः तदेवोपपादयति अनपेक्ष्येति यतो न देहस्यात्मत्वमुचितं ततो देहभोगपरित्यागपूर्वकं कर्तुरुपकारकं कृच्छ्रचांद्रायणादिकं चरतीत्यर्थः ॥४७॥ किं च मोक्ष्येहमिति यदा पुमान् शमादीन् संपाद्य मुक्तिं प्राप्स्यामीति मतिं करोति तदा गुरुशास्त्राभ्यामाचार्योपदेशवाक्यार्थविचारजन्यापरोक्षज्ञानेन नाहं कर्त्राद्यात्मा सच्चिदानंदब्रह्माहमस्मीतिचिदात्मानमवगच्छति तस्य चिदात्मत्वमेवोचितं

रुशास्त्राभ्यां न तु किं चिच्चिकीर्षति ॥ ४८ ॥ विप्रक्षत्त्रविद्यो यद्वद् बृहस्पतिसवादिषु ॥ व्यवस्थितास्तथा गौणमिथ्यामुख्या यथोचितम् ॥ ४९ ॥ तत्र तत्रोचिते प्रीतिरात्मन्येवातिशायिनी ॥ अनात्मनि तु तच्छेषे प्रीतिरन्यत्र नोभयम् ॥ ५० ॥ उपेक्ष्यं द्वेष्यमित्यन्यद् द्वेधा मार्गतृणादिकम् ॥ उपेक्ष्यं व्याघ्रसर्पादि द्वेष्यमेवं चतुर्विधम् ॥ ५१ ॥ आत्मा शेष उपेक्ष्यं च द्वेष्यं चेति चतुर्ष्वपि ॥

---

न तु तत्र कर्त्राद्यात्मत्वमित्यर्थः सत्यं ज्ञानमनंतं ब्रह्म विज्ञानमानंदं ब्रह्म अनंतरो बाह्यः कृत्स्नः प्रज्ञानघन एव इत्यादिश्रुतेः ॥ ४८ ॥ उदाहृतानां त्रिविधानामात्मनां व्यवहारविशेषेषु व्यवस्थया प्राधान्ये दृष्टांतमाह विप्रेति यथा ब्राह्मणो बृहस्पतिसवेन यजेतेत्यत्र ब्राह्मणस्यैवाधिकारो न क्षत्रियवैश्ययोः राजा राजसूयेन यजेतेत्यत्र राज्ञ एवाधिकारो न ब्राह्मणवैश्ययोः वैश्यो वैश्यस्तोमेन यजेतेत्यत्र वैश्यस्यैवाधिकारो नेतरयोः एवं गौणमिथ्यामुख्यभेदानामात्मनां यथायोग्यं स्वोचितव्यवहारेषु प्राधान्यमिति भावः ॥४९॥ फलितमाह तत्र तत्रेति यस्मिन् व्यवहारे यो य आत्मा उचितो भवति तत्र तत्र तस्मिंस्तस्मिन् व्यवहारे उचिते उपयोगितया प्रधानभूते आत्मन्येव प्रीतिरतिशायिनी अतिशयवती तच्छेषे तस्यात्मनः शेषे शेषभूतेऽनात्मनि आत्मव्यतिरिक्ते वस्तुनि प्रीतिमात्रं न निरतिशयं प्रेमेत्यर्थः अन्यत्र आत्मतच्छेषाभ्यामन्यस्मिन्वस्तुनि नोभयमुभयविधमपि प्रेम नास्तीत्यर्थः ॥ ५० ॥ अन्यत्र नोभयमित्यत्राभिहितस्यान्यशब्दार्थस्यावांतरभेदमाह उपेक्ष्यमिति अन्यदन्यदित्युच्यमानं वस्तु उपेक्ष्यमुपेक्षाविषयः द्वेष्यं द्वेषविषयश्चेति द्विधा द्विप्रकारं भवति तदुभयमुदाहरति मार्गेति मार्गगतं तृणलोष्टादिकमुपेक्ष्यं स्वस्योपद्रवहेतुर्व्याघ्रादिकं द्वेष्यमित्यर्थः फलितमाह एवमिति ॥५१॥ चातुर्विध्यमेव दर्शयति आत्मेति नन्वात्मादीनां चतुर्णामपि प्रियतमत्वादिकं किं नियतं नेत्याह चतुर्ष्वपीति अयमेव प्रियतमोऽयमेव प्रियः

न व्यक्तिनियमः किंतु तत्तत्कार्यात्तथा तथा ॥५२॥ स्याद्व्याघ्रः संमुखो द्वेष्यो ह्युपेक्ष्यस्तु पराङ्मुखः ॥ लालनादनुकूलश्चेद्विनोदायेतिशेषताम् ॥५३॥ व्यक्तीनां नियमो मा भूल्लक्षणात्तु व्यवस्थितिः ॥ आनुकूल्यं प्रातिकूल्यं द्वयाभावश्च लक्षणम् ॥५४॥ आत्मा प्रेयान् प्रियः शेषो द्वेषोपेक्षे तदन्ययोः ॥ इति व्यवस्थितो लोको याज्ञवल्क्यमतं च तत् ॥५५॥

---

इदमेवोपेक्ष्यमिदमेव द्वेष्यं नान्यदिति नियमो नास्तीत्यर्थः किं तर्हीत्यत आह किं त्विति तस्मात्तस्मात्कार्यविशेषादुपकारादिरूपात्तथा तथा प्रियादिरूपतेत्यर्थः ॥ ५२ ॥ सर्वत्राप्यनियमयोजनाय प्रसिद्धे द्वेष्यव्याघ्रे तदभावं दर्शयति स्यादिति यदा व्याघ्रः स्वभक्षणाय संमुख आगच्छति तदा द्वेष्यो भवति स एव पराङ्मुखो गच्छति चेदुपेक्ष्यो भवति स एव यदि लालनात् स्वानुकूलो भवति तदा विनोदायेति विनोदसाधनं भवतीतिशेषतां स्वस्योपकारकत्वेन प्रियत्वं भजत इत्यभिप्रायः॥५३॥ नन्वेकस्यैव वस्तुनः प्रियत्वादिधर्मत्रयांगीकारे व्यवहारव्यवस्था न स्यादित्याशंक्याह व्यक्तीनामिति व्यक्तिनियमाभावेपि लक्षणवशाद्व्यवस्था भविष्यतीत्यर्थः किं लक्षणमित्याकांक्षायां तल्लक्षणमाह आनुकूल्यमिति अनुकूलत्वं प्रियस्य लक्षणं व्यावर्तको धर्मः प्रतिकूलत्वं द्वेष्यस्य लक्षणमुपेक्ष्यस्य आनुकूल्यप्रातिकूल्यरूपद्वयाभावश्च लक्षणमित्यर्थः॥५४॥ एतावता ग्रंथसंदर्भेणोपपादितमर्थं बुद्धिसौकर्याय संक्षिप्य कथयति आत्मेति आत्मा प्रत्यगानंदः प्रेयानतिशयेन प्रियः शेषः स्वोपसर्जनभूतः पदार्थः प्रियः तदन्ययोस्ताभ्यामात्मनस्तच्छेषाच्चान्ययोः व्याघ्रपथि गततृणादिरूपयोर्द्वेषोपेक्षे यथाक्रमं भवत इति एवं चातुर्विध्येन लोको व्यवस्थितः व्यवस्थां प्राप्तः उक्तप्रकारचतुष्टयातिरिक्तं न किंचिद्विद्यत इत्यभिप्रायः अयमर्थः श्रुत्यभिमतोपीत्याह याज्ञवल्क्येति आत्मादीनां प्रियतमत्वादिकं यत्तद्याज्ञवल्क्यमतं च याज्ञवल्क्यस्यापि संमतमित्यर्थः ॥५५॥

अन्यत्रापि श्रुतिः प्राह पुत्राद्वित्तात्तथान्यतः ॥ सर्वस्मादांतरं तत्त्वं तदेतत्प्रेय इष्यताम् ॥ ५६ ॥ श्रौत्या विचारदृष्ट्यायं साक्ष्येवात्मा न चेतरः ॥ कोशान्पंच विविच्यांतर्वस्तुदृष्टिर्विचारणा ॥५७॥ जागरस्वप्नसुप्तीनामागमापायभासनम् ॥ यतो भवत्यसावात्मा स्वप्रकाशचिदात्मकः ॥ ५८ ॥ शेषाः प्राणादिवित्तांता आसन्नास्तारतम्यतः ॥ प्रीतिस्तथा तारतम्यात्तेषु सर्वेषु वीक्ष्यते ॥ ५९ ॥ वित्तात्पुत्रः प्रियः पुत्रात्पिंडः पिंडात्तथेंद्रियम् ॥ इंद्रियाच्च प्रियः प्राणः प्राणादात्मा

---

न केवलं मैत्रयीब्राह्मण एवात्मनः प्रियतमत्वमुक्तं किं तु पुरुषविधब्राह्मणेऽपीत्यभिप्रायेण तद्वाक्यार्थं संगृह्णाति अन्यत्रापीति तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मेत्यनेन वाक्येन पुत्रवित्तादेः सर्वस्मादांतरस्यात्मतत्त्वस्य प्रियतमत्वमीरितमित्यर्थः ॥ ५६ ॥ भवत्वेवं श्रुतावभिधानं प्रकृते किमायातमित्यत आह श्रौत्येति श्रुत्यर्थपर्यालोचनरूपया विचारदृष्ट्या साक्षिण एव मुख्यमात्मत्वं नेतरस्य पुत्रादेरित्यर्थः विचारदृष्ट्येत्यभिहितस्य स्वरूपमाह कोशानिति अन्नमयादीन्पंचकोशांस्तैत्तिरीयश्रुत्युक्तप्रकारेणात्मनः पृथक्कृत्यांतःस्थितस्यात्मनोनुभवो विचारणेत्यर्थः ॥ ५७ ॥ अंतःस्थितस्य वस्तुनो दर्शनप्रकारमेवाह जागरेत्यादिना जाग्रदाद्यवस्थानां मध्ये उत्तरोत्तरावस्थागमस्य पूर्वपूर्वावस्थानिवृत्तेश्चावभासनं यतो नित्यचैतन्यरूपात्साक्षिणो भवति स स्वप्रकाशचिद्रूप आत्मेत्यर्थः ॥ ५८ ॥ संग्रहेणोक्तं श्रुत्यर्थं प्रपंचयति शेषा इति साक्षिव्यतिरिक्ताः प्राणादिवित्तांता वक्ष्यमाणाः पदार्थास्तारतम्येनात्मन आसन्नाः समीपवर्तिनो भवंति तत्रोपपत्तिमाह प्रीतिरिति यथा तारतम्येनांतरत्वं तद्वदेव तेषु प्राणादिषु तारतम्यात् प्रीतिर्वीक्ष्यते सर्वैरपीतिशेषः ॥ ५९ ॥ प्रीतेस्तारतम्येनानुभवमेव विशदयति वित्तादिति पिंडोन्नमयो देहः अयं भावः सर्वैः प्राणिभिः पुत्रादिविपत्परिहाराय वित्तव्ययः क्रियते स्वदेहरक्षणाय कदा चित्पुत्रादिरपि दीयते इं-

प्रियः परः ॥ ६० ॥ एवं स्थिते विवादोत्र प्रतिबुद्धविमूढयोः ॥ श्रुत्योदाहारि तत्रात्मा प्रेयानित्येव निर्णयः ॥ ६१ ॥ साक्ष्येव दृश्यादन्यस्मात्प्रेयानित्याह तत्त्ववित् ॥ प्रेयान्पुत्रादिरेवेमं भोक्तुं साक्षीति मूढधीः ॥ ६२ ॥ आत्मनोन्यं प्रियं ब्रूते शिष्यश्च प्रतिवाद्यपि ॥ तस्योत्तरं वचो बोधशापौ कुर्यात्तयोः क्रमात् ॥ ६३ ॥ प्रियं त्वां रोत्स्यतीत्येवमुत्तरं वक्ति तत्त्ववित् ॥ स्वोक्तप्रियस्य दुष्टत्वं शि-

---

द्रियनाशपरिहाराय ताडनादिना देहपीडाप्यंगीक्रियते मरणप्रसक्तौ तत्परिहारायेंद्रियवैकल्यमप्यंगीक्रियते अतएवोत्तरोत्तरमतिशयेन प्रियत्वं सर्वानुभवसिद्धम् आत्मनस्तु निरतिशयप्रेमास्पदत्वं विद्वदनुभवसिद्धमिति ॥ ६० ॥ एवमात्मनः प्रियतमत्वे प्रमाणसिद्धेपि ज्ञान्यज्ञानिनोर्विप्रतिपत्तिनिरसनाय श्रुत्या तद्विप्रतिपत्तिर्दर्शितेत्याह एवं स्थित इति तत्र निर्णयमाह तत्रात्मेति आत्मनः प्रियतमत्वस्योपपादितत्वादित्यर्थः ॥ ६१ ॥ तामेव विप्रतिपत्तिमाह साक्षीति ॥ ६२ ॥ आत्मातिरिक्तस्य प्रियत्ववादिनो विभज्योत्तराभिधानाय तमेव वादिनं विभज्य कथयति आत्मन इति उत्तराभिधानप्रकारमाह तस्योत्तरमिति तयोः शिष्यप्रतिवादिनोः संबंधिनस्तस्य वचनस्योत्तरं वचः प्रत्युत्तररूपं वाक्यं क्रमेण बोधशापौ बोधरूपं शापरूपं च कुर्यादित्यर्थः ॥ ६३ ॥ प्रतिवचनप्रदानरूपं स योन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीति समनंतरश्रुतिवाक्यमर्थतः पठति प्रियं त्वामिति तत्त्ववित् शिष्यप्रतिवादिनावुभावपि प्रति हे शिष्य हे प्रतिवादिन् प्रियं त्वदभिप्रेतं पुत्रादिरूपं स्वनाशेन त्वां शिष्यं प्रतिवादिनं वा रोत्स्यति रोदयिष्यति इत्येवमुक्तप्रकारेणोत्तरं प्रतिवचनं वक्ति ब्रवीति इदमेकमेव वचनं शिष्यप्रतिवादिनोरुभयोः कथमुत्तरं जातमित्याशंक्य शिष्यं प्रत्युत्तरं तावद् द्योतयति स्वोक्तप्रियस्येत्यादिना वीक्षते तमहर्निशमित्यंतेन सार्द्धश्लोकचतुष्टयेन स्वोक्तप्रियस्येति शिष्यः स्वोक्तप्रियस्य स्वेनाभिहितस्य पुत्रादि-

ष्यो वेत्ति विवेकतः ॥ ६४ ॥ अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ॥ लब्धोपि गर्भपातेन प्रसवेन च बाधते॥६५॥ जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता ॥ उपनीतेप्यविद्यत्वमनुद्वाहश्च पंडिते ॥ ६६ यूनश्च परदारादि दारिद्र्यं च कुटुंबिनः ॥ पित्रोर्दुःखस्य नास्त्यंतो धनी चेन्म्रियते तदा ॥ ६७॥ एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि ॥ निश्चित्य परमां प्रीतिं वीक्षते तमहर्निशम् ॥ ६८ ॥ आग्रहाद्ब्रह्मविद्वेषादपि पक्षममुंचतः ॥ वादिनो नरकः प्रोक्तो दोषश्च बहुयोनिषु ॥ ६९ ॥ ब्रह्मविद्ब्रह्मरूपत्वादीश्वरस्तेन वर्णितम् ॥ यद्यत्तत्तथैव स्यात्तच्छिष्यप्रति-

---

रूपस्य प्रीतिविषयस्य विवेकतः वक्ष्यमाणदोषविचारेण दुष्टत्वं वेत्ति अवगच्छति ॥ ६४ ॥ दोषविचारप्रकारमेव दर्शयति अलभ्यमान इति श्लोकत्रयेण ॥ ६५ ॥ ६६ ॥ ६७ ॥ एवं पुत्रगतदोषकीर्तनं दारादिसर्वविषयदोषोपलक्षणार्थम् एवं विविच्येति एवमुक्तेन प्रकारेण पुत्रादौ विषयजाते विविच्य विद्यमानान् दोषान्विभज्य ज्ञात्वा तस्मिन्प्रीतिं परित्यज्य निजात्मनि प्रत्यग्रूपे साक्षिणि परमां निरतिशयां प्रीतिं निश्चित्य तं प्रत्यगात्मानमहर्निशं सर्वदा वीक्षते अनुसंधत्त इत्यर्थः ॥ ६८ ॥ प्रियं त्वां रोत्स्यतीत्यस्यैव वाक्यस्य प्रतिवादिनं प्रतिशापरूपत्वम् प्रकटयति आग्रहादिति आग्रहादुक्तं पुत्रादिप्रियत्वं सर्वथा न त्यजामीत्येवंरूपाद् ब्रह्मविद्वेषादनेनोक्तं विघटयिष्यामीत्येवंरूपाच्च पक्षं पुत्रादीनामेव प्रियत्वाभिधानरूपमपरित्यजतः प्रतिवादिनो नरकप्राप्तिस्तथा बहुयोनिषु तिर्यगादिष्वनेकेषु जन्मसु दोषः पुत्रभार्यादीष्टवियोगानिष्टप्राप्तिरूपः प्रोक्तः प्रियं त्वां रोत्स्यतीतिवदता ज्ञानिनेतिशेषः ॥ ६९ ॥ ननु ज्ञानिनोक्तस्यैकवाक्यस्य शिष्यं प्रत्युपदेशरूपत्वं वादिनं प्रति शापरूपत्वं चेति विरुद्धं रूपद्वयं कथं घटत इत्याशंक्योत्तरप्रदातुरीश्वररूपत्वात्तस्याभिप्रायानुसारेणोभयं भविष्यतीति मत्वा तदुपपादकस्येश्वरो ह

वादिनोः ॥ ७० ॥ यस्तु साक्षिणमात्मानं सेवते प्रियमुत्तमम् ॥ तस्य प्रेयानसावात्मा न नश्यति कदा चन ॥७१॥ परप्रेमास्पदत्वेन परमानंदरूपता॥ सुखवृद्धिः प्रीतिवृद्धौ सार्वभौमादिषु श्रुता ॥७२॥ चैतन्यवत्सुखं चास्य स्वभावश्चेच्चिदात्मनः ॥ धीवृत्तिष्वनुवर्तेत सर्वास्वपि चितिर्यथा॥७३॥

---

तथैव स्यादिति समनंतरवाक्यस्य तात्पर्यमाह ब्रह्मविदिति यतो ब्रह्मविदः स्वस्य ब्रह्मत्वानुभवादीश्वरत्वमस्त्यतस्तेन यं शिष्यादिकं प्रति यद्यदिष्टमनिष्टं वा भिधीयते तत्तत् तच्छिष्यप्रतिवादिनोस्तस्य ज्ञानिनो यः शिष्यः यश्च प्रतिवादी तयोस्तथैव स्यादिष्टमनिष्टं वाऽवश्यं भवेदित्यर्थः ॥७०॥ व्यतिरेकमुखेनोक्तस्यार्थस्यान्वयमुखेन प्रतिपादकमात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते नेहास्य प्रियं प्रमायुकं भवतीतिसमनंतरवाक्यमर्थतः पठति यस्त्विति तु शब्द उक्तवैलक्षण्यद्योतनार्थः अनात्मप्रियत्ववादिनोन्यो यः शिष्यः आत्मानमेवोत्तमं प्रियं निरतिशयं प्रेमगोचरं सेवते सदात्मानं स्मरति तस्य शिष्यादेः प्रेयान् प्रियतमत्वेनाभिमतोसावात्मा प्रतिवाद्यभिमतं प्रियमिव न कदा चिद्विनश्यति किंतु सदानंदरूपः सन् अवभासत इत्यर्थः ॥ ७१ ॥ इत्थमात्मनः परप्रेमास्पदत्वहेतुं प्रसाध्येदानीं फलितमाह परप्रेमेति अत्रायं प्रयोगः आत्मा परमानंदरूपः निरतिशयप्रेमविषयत्वाद्यः परमानंदरूपो न भवति स निरतिशयप्रेमाविषयो न भवति यथा घटादिरिति केवलव्यतिरेकी परप्रेमास्पदत्वहेतोरात्मनः परमानंदरूपतासाधने सामर्थ्यद्योतनाय प्रीतिवृद्धौ सुखवृद्धिमुदाहरति सुखवृद्धिरिति यतः सार्वभौमादिहैरण्यगर्भांतेषु पदविशेषेषु यत्र यत्र प्रीतिर्वर्धते तत्र तत्र सुखाभिवृद्धिरस्तीति तैत्तिरीयबृहदारण्यकश्रुत्योरभिहितमतः प्रीतेर्निरतिशयत्वे सत्यानंदस्यापि निरतिशयत्वमवगंतुं शक्यत इति भावः ॥ ७२ ॥ नन्वात्मनः परमानंदरूपत्वमनुपपन्नं तथात्वे चैतन्यस्येव तत्स्वरूपभूतस्यानंदस्यापि सर्वासु धीवृत्तिष्वनुवृत्तिः प्रसज्येतेति शंकते चैतन्यवदिति ॥ ७३ ॥ चिदानंद-

मैवमुष्णप्रकाशात्मा दीपस्तस्य प्रभा गृहे ॥ व्याप्नोति नोष्णता तद्वच्चितेरेवानुवर्तनम् ॥ ७४ ॥ गंधरूपरसस्पर्शेष्वपि सत्सु यथा पृथक् ॥ एकाक्षेणैक एवार्थो गृह्यते नेतरस्तथा ॥७५॥ चिदानंदौ नैव भिन्नौ गंधाद्यास्तु विलक्षणाः॥ इति चेत्तदभेदोपि साक्षिण्यन्यत्र वा वद ॥ ७६ ॥ आद्ये गंधादयोप्येवमभिन्नाः पुष्पवर्तिनः ॥ अक्षभेदेन तद्भेदे वृत्तिभेदात्तयोर्भिदा ॥ ७७ ॥ सत्त्ववृत्तौ चित्सुखैक्यं तद्वृत्तेर्निर्मलत्वतः ॥ रजोवृत्तेस्तु मालिन्यात्सुखांशोत्र तिर-

---

योरुभयोरप्यात्मस्वरूपत्वेपि वृत्तिषु चित एवानुवृत्तिर्नानंदस्येति दृष्टांतावष्टंभेन परिहरति मैवमिति यथोष्णप्रकाशात्मकस्य दीपस्य प्रकाश एव गृहादावनुगच्छति नोष्णता एवं चैतन्यस्यैवानुवृत्तिर्नानंदस्येत्यर्थः ॥ ७४ ॥ ननु चिदानंदयोरभेदे चिदभिव्यंजकधीवृत्तावेवानंदाभिव्यक्तिरपि स्यादित्याशंक्य तथा नियमाभावे दृष्टांतमाह गंधेति यथैकद्रव्यवर्तिनां गंधादीनां चतुर्णां मध्ये घ्राणादिना एकेनेंद्रियेण गंधादिरेक एव गुणो गृह्यते नेतरस्तथा चिदानंदयोर्मध्ये चित एवावभासनमित्यर्थः ॥ ७५ ॥ दृष्टांतदार्ष्टांतिकयोर्वैषम्यं शंकते चिदानंदाविति विलक्षणा भिन्ना इत्यर्थः उक्तवैषम्यं परिहर्तुं दार्ष्टांतिके चिदानंदयोरभेदः किं स्वाभाविक उत औपाधिक इति विकल्पयति तदभेद इति तदभेदस्तयोश्चिदानंदयोरभेद ऐक्यं साक्षिण्यात्मस्वरूपे वाऽन्यत्र तदुपाधिभूतासु वृत्तिषु वेत्यर्थः ॥ ७६ ॥ प्रथमे पक्षे दृष्टांतदार्ष्टांतिकयोः साम्यमाह आद्य इति आद्ये चिदानंदयोः साक्षिणि भेदाभावपक्षे पुष्पवर्तिनो गंधादयोपि एवं चिदानंदवदेवाभिन्नाः परस्परं भेदरहिता इतरपरिहारेणैकस्यानेतुमशक्यत्वादिति भावः द्वितीये पक्षेऽपि साम्यमाह अक्षेति अक्षाणां गंधादिग्राहकाणां घ्राणादींद्रियाणां भेदेन तद्भेदे तेषां गंधादीनां भेदाभ्युपगमे तद्वदेव वृत्तिभेदाच्चिदानंदाभिव्यक्तिहेतूनां राजससात्त्विकवृत्तीनां भेदात्तयोश्चिदानंदयोर्भिदा भेदो भविष्यतीत्यर्थः ॥ ७७ ॥ ननु तर्हि चिदानंदयो-

स्कृतः ॥ ७८ ॥ तिंतिणीफलमत्यम्लं लवणेन युतं यदा ॥ तदाम्लस्य तिरस्कारादीषदम्लं यथा तथा ॥ ७९ ॥ ननु प्रियतमत्वेन परमानंदतात्मनि ॥ विवेक्तुं शक्यतामेवं विना योगेन किं भवेत् ॥८०॥ यद्योगेन तदेवेति वदामो ज्ञानसिद्धये ॥ योगः प्रोक्तो विवेकेन ज्ञानं किं नोपजायते ॥८१॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥ इति स्मृतं फलैकत्वं योगिनां च विवेकिनाम् ॥८२॥ असाध्यः कस्य चि-

---

रैक्यं कुत्रोपलभ्यत इत्याशंक्याह सत्त्ववृत्ताविति सत्त्ववृत्तौ शुभकर्मोपस्थापितायां सत्त्वगुणपरिणामरूपायां बुद्धिवृत्तौ चित्सुखैक्यं चिदानंदयोरैक्यं भासत इति शेषः तत्रोपपत्तिमाह तद्वृत्तेरिति कुतस्तर्हि भेदोवभासत इत्यत आह रजोवृत्तेरिति ॥ ७८ ॥ विद्यमानस्यापि सुखांशस्य तिरस्कारे दृष्टांतमाह तिंतिणीति यथा तिंतिणीफले लवणयोगादत्यम्लत्वं तिरोहितं तद्वद्रजोवृत्तावानंदस्य तिरोभाव इत्यर्थः ॥ ७९ ॥ गूढाभिसंधिं शंकते नन्विति ननूक्तेन प्रकारेणात्मनः परमानंदरूपत्वं परप्रेमास्पदत्वहेतुना गौणमिथ्यात्मरूपेभ्यः प्रियोपेक्ष्यद्वेष्येभ्यो विवेक्तुं विविच्य ज्ञातुं शक्यतां नाम तथापि नायं विवेको मुक्तिसाधनमपरोक्षज्ञानद्वारा मुक्तिहेतोर्योगस्याभिधानादिति गूढोऽभिसंधिः ॥ ८० ॥ गूढाभिसंधिरेवोत्तरमाह यद्योगेनेति यथा योगस्यापरोक्षज्ञानहेतुत्वमस्ति एवं विवेकस्यापीत्यत्रापि गूढोऽभिसंधिः इदानीं चोद्यपरिहारयोरुभयोरभिसंधिं प्रकटयति ज्ञानेति यथा परोक्षज्ञानसाधनत्वेन योगोऽभिहितः पूर्वस्मिन्नध्याये एवमस्मिन्नध्यायेऽभिहितेन गौणाद्यात्मत्वाविवेकद्वारा कोशपंचकविवेकेनापि ज्ञानमुत्पद्यत एवेत्यर्थः ॥ ८१ ॥ तत्र किं प्रमाणमित्याशंक्याह यत्सांख्यैरिति सांख्यैरात्मानात्मविवेकिभिर्यत्स्थानं मोक्षरूपं प्राप्यते गम्यते तद्योगैर्योगिभिरपि गम्यते प्राप्यत इत्यनेन योगिनां विवेकिनां च फलैकत्वं ज्ञानद्वारा मोक्षलक्षणफलस्यैकत्वमुक्तमित्यर्थः ॥ ८२ ॥ ननु विवेकयोगयोरेकमेव चेत्फलं तर्ह्यनयोरन्यतरस्यैव युक्तं शास्त्रेषु प्रतिपा-

द्योगः कस्य चिज्ज्ञाननिश्चयः ॥ इत्थं विचार्य मार्गौ द्वौ जगाद परमेश्वरः ॥ ८३ ॥ योगे कोतिशयस्तेऽत्र ज्ञानमुक्तं समं द्वयोः ॥ रागद्वेषाद्यभावश्च तुल्यो योगिविवेकिनोः ॥ ८४ ॥ न प्रीतिर्विषयेष्वस्ति प्रेयानात्मेति जानतः ॥ कुतो रागः कुतो द्वेषः प्रातिकूल्यमपश्यतः ॥ ८५ ॥ देहादेः प्रतिकूलेषु द्वेषस्तुल्यो द्वयोरपि ॥ द्वेषं कुर्वन्न योगी चेदविवेक्यपि तादृशः ॥ ८६ ॥ द्वैतस्य प्रतिभानं तु व्यव-

---

दनं नोभयोरित्याशंक्याधिकारिवैचित्र्याद् युक्तमुभयोः प्रतिपादनमित्यभिप्रायेणाह असाध्य इति ॥ ८३ ॥ नन्वत्यंतायाससाध्यस्य योगस्य निरायाससुलभाद्विवेकादतिशयो वक्तव्य इत्याशंक्य सोतिशयः किमपरोक्षज्ञानजनकत्वादुच्यते उत रागद्वेषादिनिवृत्तिहेतुत्वाद् अथ वा द्वैतानुपलब्धिकारणत्वादिति विकल्प्य प्रथमपक्षे फलसाम्यमित्याह योग इति द्वयोर्विवेकयोगयोरुभयोरापि ज्ञानलक्षणं फलं सममुक्तं यत्सांख्यैरित्यादिना अतस्तव योगे कोतिशयः न कोपीत्यर्थः द्वितीयं प्रत्याह रागद्वेषेति ॥ ८४ ॥ विवेकिनो रागाद्यभावमुपपादयति न प्रीतिरिति आत्मा प्रेयानिति आत्मा प्रियतम इति जानतः पुरुषस्य न तावद्विषयेषु प्रीतिरस्ति अतो न तेषु रागो जायते रागहेतोरानुकूल्यज्ञानस्याभावात् नापि द्वेषः तद्धेतोः प्रातिकूल्यज्ञानस्याभावादित्यर्थः ॥ ८५ ॥ ननु विवेकिनो व्यवहारदशायां देहाद्युपद्रवकारिषु द्वेषो दृश्यत इत्याशंक्य तदा योगिविवेकिनोः स तुल्य इति परिहरति देहादेरिति प्रतिकूलेषु वृश्चिकादिषु द्वेषकर्तुस्तदा योगित्वमेव नाभ्युपगम्यते चेद् भवता तर्हि तादृशस्य विवेकित्वमपि नाभ्युपगच्छाम इत्याह द्वेषमिति तादृशो द्वेषकर्ता चेदविवेक्यपि विवेकवानापि न भवतीत्यर्थः ॥ ८६ ॥ ननु विवेकिनो द्वैतदर्शनमस्ति योगिनस्तु तन्नास्तीति तृतीये विकल्पे योगिनोतिशयो भविष्यतीत्याशंक्य विवेकिनस्तद्द्वैतदर्शनं किं व्यवहारदशायामुच्यते उतान्यदेति विकल्प्याद्ये तद्योगिनोपि समानमित्याह द्वैतस्ये-

हारे द्वयोः समम् ॥ समाधौ नेति चेत्तद्वन्नाद्वैतत्वविवेकिनः ॥ ८७ ॥ विवक्ष्यते तदस्माभिरद्वैतानंदनामके ॥ अध्याये हि तृतीयेतः सर्वमप्यतिमंगलम् ॥ ८८ ॥ सदा पश्यन्निजानंदमपश्यन्निखिलं जगत् ॥ अर्थाद्योगीति चेत्तर्हि संतुष्टो वर्द्धतां भवान् ॥ ८९ ॥ ब्रह्मानंदाभिधे ग्रंथे मंदानुग्रहसिद्धये ॥ द्वितीयाध्याय एतस्मिन्नात्मानंदोविवेचितः ९० ॥ इति श्री० ब्रह्मानंदे आत्मानंदः ॥ १२ ॥ ७

---

ति द्वितीयमाशंकते समाधाविति योगिनः समाधिकाले द्वैतदर्शनं नास्तीत्युच्यते चेदित्यध्याहारः तर्हि विवेकिनोपि विवेकदशायां द्वैतादर्शनं तुल्यमिति परिहरति तद्वदिति योगिनः समाधिदशायामिवाद्वैततत्वाविवेकिनः अद्वैतं तत्त्वमितिश्रुतियुक्तिभ्यां विवेचनं कुर्वतोपि तस्मिन्काले द्वैतदर्शनं नास्तीत्यर्थः ॥ ८७ ॥ कथं तदभाव इत्याशंक्योपरितनेऽध्याये तदुपपादयिष्यत इत्याह विवक्ष्यत इति उक्तमर्थं निगमयति सर्वमपीति ॥ ८८ ॥ ननु द्वैतादर्शनसहितात्मदर्शनवतो योगित्वमेव भवष्यतीति शंकते सदा पश्यन्निति इष्टापत्त्या परिहरति तर्हीति ॥ ८९ ॥ अध्यायतात्पर्यं संक्षिप्य दर्शयति ब्रह्मानंदेति ॥ ९० ॥ इति श्रीमत्परमहंसप० भारतीतीर्थविद्यारण्यमुनिकिंकरेण रामकृष्णाख्यविदुषा विरचितात्मानंदव्याख्या ॥ १२ ॥ ७ ७ ७ ७ ७ ७ ७

॥ इति ब्रह्मानन्दे आत्मानन्दः ॥

---

श्रीगणेशाय नमः ॥ अथाद्वैतानंदः ॥ योगानंदः पुरोक्तो यः स आत्मानंद इष्यताम् ॥ कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेच्छृणु ॥ १ ॥ आकाशादिस्वदेहांतं तैत्तिरीयश्रुतीरितम् ॥ जगन्नास्त्यन्यदानंदादद्वैतब्रह्मता ततः ॥ २ ॥ आनंदादेव तज्जातं तिष्ठत्यानंद एव तत् ॥ आनंद एव

---

श्रीगणेशाय नमः ॥ अथाद्वैतानंदव्याख्या ॥ ननु आनंदस्त्रिविधो ब्रह्मानंदो विद्यासुखं तथा विषयानंद इति प्रथमाध्याये आनंदत्रयमेव प्रतिज्ञाय द्वितीयाध्याये तदतिरिक्तात्मानंदनिरूपणात्तद्विरोधो जायत इत्याशंक्याह योगानंद इति यथा प्रतिज्ञातस्यैव ब्रह्मानंदस्य योगजन्यसाक्षात्कारविषयत्वेन योगानंदत्वं निरुपाधिकत्वेन निजानंदत्वं च व्यवहृतं तथा तस्यैव गौणमिथ्यामुख्यात्मविवेचनेनावगम्यत्वविवक्षयात्मानंदत्वमभिहितमिति भावः ननु सजातीयाद्गौणात्मनः पुत्रभार्यादेः मिथ्यात्मनो देहादेर्विजातीयादाकाशादेश्च विभिन्नस्य सद्वयस्यात्मानंदस्य प्रथमाध्यायोक्ता द्वितीययोगानंदरूपता न संभवतीति शंकते कथमिति सजातीयत्वेनाभिमतस्य गौणात्मनः पुत्रादेर्मिथ्यात्मनो देहादेश्च तैत्तिरीयश्रुत्यभिहितजगदंतःपातित्वादाकाशादेश्च जगत आत्मानंदातिरेकेणासत्त्वाच्चाद्वितीयब्रह्मरूपता तस्य घटत इति सबहुमानमुत्तरमाह शृण्विति ॥ ॥ १ ॥ आकाशादीति तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादिकया तैत्तिरीयश्रुत्याभिहितं जगत्स्वकारणभूतादात्मानंदाद्यतः अन्यत्पृथक् नास्ति अतः कारणात्तस्यात्मानंदस्याद्वितीयत्वमित्यभिप्रायः ॥२॥ ननूदाहृतश्रुतिवाक्ये आत्मनः कारणत्वं श्रूयते नानंदस्येत्याशंक्य तत्प्रतिपादकं तदीयमेवानंदाद्ध्येव खल्विमानि भूतानि जायंत इत्यादिवाक्यमर्थतः पठति आनंदादेवेति व्याख्यातम् फलितमाह इत्युक्तेति

लीनं चेत्युक्तानंदात्कथं पृथक् ॥ ३ ॥ कुलालाद्घट उत्पन्नो भिन्नश्चेति न शंक्यताम् ॥ मृद्वदेष उपादानं निमित्तं न कुलालवत् ॥ ४ ॥ स्थितिर्लयश्च कुंभस्य कुलाले स्तो न हि क चित् ॥ दृष्टौ तौ मृदि तद्वत्स्यादुपादानं तयोः श्रुतेः ॥ ५ ॥ उपादानं त्रिधा भिन्नं विवर्ति परिणामि च ॥ आरंभकं च तत्रांत्यौ न निरंशेऽवकाशिनौ ॥ ६ ॥ आरंभ-

---

अत्रेदमनुमानं सूचितं विमतं जगदानंदान्न भिद्यते तत्कार्यत्वाद् यद्यत्कार्यं तत्ततो न भिद्यते यथा मृत्कार्यं घटादि मृदो न भिद्यत इति ॥ ३ ॥ कुलालादुत्पन्नस्य घटस्य ततो भेददर्शनादनैकांतिकता हेतोरित्याशंक्य कुलालस्य निमित्तकारणत्वादिह चानंदस्योपादानत्वसमर्थनान्नैवमित्याह कुलालादिति एष आत्मानंदः मृद्वत् मृद्घटस्येव उपादानं कारणं कुलालवत् कुलाल इव निमित्तकारणं न भवति ॥ ४ ॥ ननु कुतो नोपादानत्वं कुलालस्यापीत्याशंक्य स्थितिलयाधारत्वरूपोपादानत्वलक्षणाभावादित्याह स्थितिरिति हि यस्मात्कारणाद् घटस्य स्थितिलयौ कुलालाधारौ न भवतोऽतो नोपादानत्वमिति शेषः कुत्र तर्हि तावित्यत आह दृष्टाविति तौ घटस्य स्थितिलयौ तदुपादानभूतायां मृद्येव दृष्टौ प्रत्यक्षेणोपलब्धौ भवत्वेवं तत्र प्रकृते किमायतमित्यत आह तद्वदिति यद्वद् घटस्य मृदुपादानं तद्वज्जगतोप्यानंद उपादनं स्यात् तत्र हेतुः तयोरिति तयोर्जगस्थितिलययोः श्रुतेः आनंदाध्द्येवेत्यादिवाक्ये आनंदहेतुकत्वश्रवणादित्यर्थः ॥ ५ ॥ आनंदस्य स्वाभिमतं जगदुपादानत्वं वक्तुं तदवांतरभेदमाह उपादानमिति तत्र विवर्तं परिशेषयितुमितरौ पक्षौ दूषयति तत्रेति अंत्यौ आरंभपरिणामपक्षौ निरंशे निरवयवे वस्तुनि नावकाशिनौ अवकाशवंतौ न भवतः ॥ ६ ॥ तयोरनवकाशत्वमेव दर्शयितुं तावदारंभकवादिनो मतमनुवदति आरंभेति आरंभवादिनो वैशेषिकादयः अन्यस्मात्कार्यापेक्षयाऽन्यस्मात्कारणादन्यस्य कारणापेक्षयान्यस्य कार्यस्योत्पत्तिमूचिरे उक्तवंतः कुत एवं वदंतीत्यत आह ततो-

वादिनोन्यस्मादन्यस्योत्पत्तिमूचिरे ॥ तंतोः पटस्य निष्पत्तेर्भिन्नौ तंतुपटौ खलु ॥ ७ ॥ अवस्थांतरतापत्तिरेकस्य परिणामिता ॥ स्यात्क्षीरं दधि मृत्कुंभः सुवर्णं कुंडलं यथा ॥ ८ ॥ अवस्थांतरभानं तु विवर्त्तो रज्जुसर्पवत् ॥ निरंशेप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात् ॥ ९ ॥ ततो निरंश आनंदे विवर्तो जगदिष्यताम् ॥ मायाशक्तिः कल्पिका स्यादैंद्रजालिकशक्तिवत् ॥ १० ॥ शक्तिः श-

---

रिति निष्पत्तेरुत्पत्तेर्दर्शनादिति शेषः एतावता कथं कार्यकारणभेदसिद्धिरित्यत आह भिन्नाविति विरुद्धपरिणामत्वाद्विरुद्धार्थक्रियावत्त्वाच्चेति भावः ॥ ७ ॥ इदानीं परिणामस्वरूपमाह अवस्थेति एकस्यैव वस्तुनः पूर्वावस्थात्यागपुरःसरमवस्थांतरप्राप्तिः परिणाम इत्यर्थः तमुदाहरति स्यादिति यथा क्षिरमृत्सुवर्णादीनां क्षीरादिव्यवहारयोग्यतां परित्यज्य दध्यादिव्यवहारयोग्यतापत्तिः ॥ ८ ॥ इदानीं विवर्तलक्षणमाह अवस्थांतरेति तुशब्दोऽस्य पूर्वास्मात्पक्षद्वयाद्वैलक्षण्यद्योतनार्थः पूर्वावस्थामपरित्यज्यैवावस्थांतरभानं विवर्तः तमुदाहरति राज्जिवति यथा रज्ज्वात्मनाऽवस्थितस्यैव द्रव्यस्य सर्पात्मनावभासनं विवर्तः ननु विवर्तमानस्य रज्ज्वादेः सांशत्वदर्शनान्निरंशे सोपि न घटत इत्याशंक्य निरवयवे गगनादावपि तद्दर्शनान्मैवमित्याह निरंशेपीति असौ विवर्तः व्योम्नि तलत्वमधोमुखेंद्रनीलकटाहतुल्यत्वं मालिन्यं नीलवर्णता तयोः कल्पनादाकाशस्वरूपानभिज्ञैरारोप्यमाणत्वादित्यर्थः ॥ ९ ॥ फलितमाह तत इति ततो निरंशेपि विवर्तसंभवाज्जगन्निरंशे आनंदे विवर्तः कल्पित इत्यंगीकार्यमित्यर्थः नन्वद्वितीये आनंदे जगत्कल्पनमनुपपन्नं कल्पनाहेतोरभावादित्याशंक्याह मायेति शक्तेः कल्पकत्वं क्व दृष्टमित्यत आह ऐंद्रजालिकेति यथैंद्रजालिकनिष्ठायाः मणिमंत्रादिरूपायाः मायायाः शक्तेर्गंधर्वनगरादिकल्पकत्वं तथेत्यर्थः ॥ १० ॥ नन्वानंदात्मातिरिक्तायाःमायायाः अभ्युपगमे द्वैतापत्तिरित्याशंक्य तस्या अनिर्वचनीयत्वेना-

क्तात्पृथक् नास्ति तद्वद्दृष्टेर्न चाभिदा ॥ प्रतिबंधस्य दृष्टत्वाच्छक्त्यभावे तु कस्य सः ॥ ११ ॥ शक्तेः कार्यानुमेयत्वादकार्ये प्रतिबंधनम् ॥ ज्वलतोग्नेरदाहे स्यान्मंत्रादिप्रतिबंधता ॥ १२ ॥ देवात्मशक्तिं स्वगुणैर्निगूढां मुनयोऽ-

---

नृतत्वं वक्तुमुत्तरत्र वक्ष्यमाणायाः लौकिक्या अग्न्यादिशक्तेस्तावद्भेदेनाभेदेन वा निर्वक्तुमशक्यत्वं दर्शयति शक्तिरिति शक्तिरग्न्यादिनिष्ठा स्फोटादिजनिका शक्तादग्न्यादिस्वरूपात्पृथग् भेदेन नास्ति कुत इत्यत आह तद्वदिति तद्वत्तथात्वस्य भेदेनासत्त्वस्य दृष्टेर्दर्शनादग्न्यादिस्वरूपातिरेकेणानुपलभ्यमानत्वादित्यर्थः नाप्यग्न्यादिस्वरूपमेव शक्तिरित्याह नचेति अभिदा अभेदोपि न च नैव तत्रापि हेतुमाह प्रतिबंधस्येति मणिमंत्रादिभिः शक्तिकार्यस्य स्फोटादेः प्रतिबंधदर्शनात्स्वरूपातिरिक्ता शक्तिर्द्रष्टव्येत्यभिप्रायः भवतु प्रतिबंधदर्शनं शक्तेर्भेदोपि मा भूत्को दोषस्तत्राह शक्त्यभाव इति प्रत्यक्षसिद्धस्याग्न्यादिस्वरूपस्य प्रतिबंधासंभवात्तद्व्यतिरिक्तशक्त्यनभ्युपगमे सति प्रतिबंधोपि निर्विषयः स्यादित्यभिप्रायः ॥ ११ ॥ नन्वतींद्रियायाः शक्तेः कथं प्रतिबंधोवगंतुं शक्यत इत्याशंक्याह शक्तेरिति अतींद्रियापि शक्तिर्यतः कार्यलिंगगम्या अतः अकार्ये सत्यपि कारणे कार्यानुत्पत्तौ सत्यां प्रतिबंधनं प्रतिबंधः अवगम्यत इति शेषः उक्तमर्थं दृष्टांतप्रदर्शनेन स्पष्टयति ज्वलत इति लोके स्वरूपेण ज्वलतोग्नेःसकाशाद्दाहादिलक्षणे कार्ये अनुत्पद्यमाने सति मंत्रादिप्रतिबंधता मंत्रादीनां शक्तिप्रतिबंधकत्वं स्यादित्यर्थः ॥ १२ ॥ इत्थं लौकिकशक्तिं स्वरूपतः प्रमाणतश्चोपन्यस्येदानीं मायाशक्तिसद्भावे ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामितिश्वेताश्वतरोपनिषद्वाक्यमर्थतः पठति देवात्मेति मुनयः कालस्वभावादिकारणवादेषु दोषदर्शनवंतः जगत्कारणजिज्ञासया ध्यानयोगमास्थिताः अधिकारिणः देवात्मशक्तिं देवस्य द्योतमानस्य स्वप्रकाशचिदात्मनः प्रत्यगभिन्नस्य ब्रह्मणः शक्तिं मायारूपां स्वगुणैः स्वकार्यभूतैः स्थूलसूक्ष्मशरीरैर्निगूढां नितरां गूढामावृतामविदन्साक्षात्कृतवंत इत्यर्थः तस्यामेवोपनिषादि स्थितं परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-

विदन् ॥ परास्य शक्तिर्विविधा क्रिया ज्ञानबलात्मिका ॥ १३ ॥ इतिवेदवचः प्राह वसिष्ठश्च तथाऽब्रवीत् ॥ सर्वशक्ति परं ब्रह्म नित्यमापूर्णमद्वयम् ॥ १४ ॥ ययोल्लसति शक्त्यासौ प्रकाशमधिगच्छति ॥ चिच्छक्तिर्ब्रह्मणो राम शरीरेषूपलभ्यते ॥ १५ ॥ स्पंदशक्तिश्च वातेषु दार्ढ्यशक्तिस्तथोपले ॥ द्रवशक्तिस्तथांभःसु दाहशक्तिस्तथानले ॥ १६ ॥ शून्यशक्तिस्तथाकाशे नाशशक्तिर्विनाशिनि ॥ यथांडेंतर्महासर्पो जगदस्ति तथात्मनि ॥ १७ ॥ फलपत्रलतापुष्पशाखाविटपमूलवान् ॥ ननु बीजे यथा वृक्षस्त-

---

बलक्रिया चेतिवाक्यांतरमर्थतः पठति परास्येति अस्य ब्रह्मणः परा उत्कृष्टा जगत्कारणभूता शक्तिर्विविधा श्रूयत इति वाक्यशेषः विविधत्वमेवाह क्रियेति क्रियाज्ञाने प्रसिद्धे बलमिच्छाशक्तिर्ज्ञानक्रियाशक्तिसाहचर्यात् क्रियादिशक्तयः आत्मा स्वरूपं यस्याः सा क्रिया ज्ञानबलात्मिका ॥ १३ इदं वाक्यद्वयं कुत्रत्यमित्यत आह इतीति न केवलं मायाशक्तिः श्रुतिप्रसिद्धा किं तु स्मृतिप्रसिद्धापीत्याह वसिष्ठ इति यथा श्रुतिर्विचित्रां मायाशक्तिमुक्तवती वसिष्ठोपि तां तथोक्तवान् वासिष्ठाभिधे ग्रंथ इतिशेषः मायाप्रतिपादकान् वासिष्ठश्लोकानेव पठति सर्वेति नित्यमापूर्णमद्वयमिति ब्रह्मणः पारमार्थिकं रूपमुक्तं सर्वशक्तीति तस्यैव सोपाधिकं रूपम् ॥ १४ ॥ तत्परं ब्रह्म यदा यया मायाशक्त्योल्लसति विकसति विवर्तत इत्यर्थः तदा तदाऽसावसौ शक्तिः प्रकाशमधिगच्छति अभिव्यक्तिं प्राप्नोति इदानीं तामेवाभिव्यक्तिं प्रपंचयति चिच्छक्तिरितिद्वाभ्यां शरीरेषु देवतिर्यङ्मनुष्यादिलक्षणेषु चिच्छक्तिश्चेतनत्वव्यवहारहेतुभूतोपलभ्यते दृश्यते ॥ १५ ॥ स्पंदशक्तिश्चलनहेतुभूता प्रकाशमधिगच्छतीत्युक्त्याऽनभिव्यक्तदशायामपि ब्रह्मणि जगत्सत्ता दर्शिता ॥ १६ ॥ अनभिव्यक्तस्यापि सत्त्वे दृष्टांतमाह यथांड इति ॥१७॥

थेदं ब्रह्मणि स्थितम् ॥ १८ ॥ क चित्काश्चित्कदा चिच्च तस्मादुद्यंति शक्तयः ॥ देशकालविचित्रत्वात्क्ष्मातलादिव शालयः ॥ १९ ॥ स आत्मा सर्वगो राम नित्योदितमहावपुः ॥ यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते॥२०॥ आदौ मनस्तदनुबंधविमोक्षदृष्टी पश्चात्प्रपंचरचना भुवनाभिधाना ॥ इत्यादिका स्थितिरियं हि गता प्रतिष्ठामाख्यायिका सुभगबालजनोदितेव ॥ २१ ॥ बालस्य हि विनोदाय धात्री वक्ति शुभां कथाम् ॥ क चित्संति महा-

---

विचित्रस्यापि तस्य सत्त्वे दृष्टांतमाह फलेति ॥ १८ ॥ ननु सर्वासामपि शक्तीनां युगपदेवाभिव्यक्तिः कुतो न स्यादित्याशंक्याह क चिदिति क चिद्देशविशेषे कदा चित्कालविशेषे काश्चिच्छक्त्यादयस्तासामयुगपदभिव्यक्तौ दृष्टांतमाह क्ष्मातलादिति यथा भूमिगतानां सर्वेषां बीजानां मध्ये देशविशेषे कालविशेषे च केषां चिदेव बीजानामंकुरोत्पत्तिर्न सर्वेषां तद्वदित्यर्थः ॥ १९ ॥ इदानीं जगतः कल्पनामात्ररूपतां दर्शयितुं तत्कल्पकस्य मनसो रूपं तावद्दर्शयति स इति नित्योदितमहावपुः नित्यं सदा उदितं प्रकाशमानं महद्देशकालादिपरिच्छेदरहितं वपुः स्वरूपं यस्य स तथा यद्यस्मिन्काले मनाग् ईषन्मननीं स्वपरावबोधनरूपां शक्तिं मायापरिणामरूपां धत्ते धारयति तत्तदा मन इत्युच्यते ॥ २० ॥ इदानीं कल्पनाप्रकारमाह आदाविति आदौ प्रथमं मननशक्त्युल्लासेन मनो भवति तदनु तदनंतरं बंधविमोक्षदृष्टी बंधविमोक्षकल्पने भवतः पश्चादनंतरं बंधदृष्टावेव भुवनाभिधाना भुवनमित्यभिधानं यस्याः सा भुवनाभिधाना प्रपंचरचना प्रपंचस्य गिरिनगरीसरित्समुद्रादे रचना कल्पनं भवति इत्यादिका एवंप्रकारा इयं जगतः स्थितिः प्रतिष्ठां स्थैर्यं गता प्राप्ता कल्पितस्यापि वास्तवत्वप्रतीतौ दृष्टांतमाह आख्यायिकेति बालजनायोदिता उक्ता आख्यायिका कथा यथा वास्तवत्वबुद्धिं गता तथेदं जगदित्यर्थः ॥ २१ ॥ तामेव वासिष्ठस्थां कथां कथयति बाल

बाहो राजपुत्रास्त्रयः शुभाः ॥ २२ ॥ द्वौ न जातौ तथैक-स्तु गर्भ एव न च स्थितः ॥ वसंति ते धर्मयुक्ता अत्यंता सति पत्तने ॥ २३ ॥ स्वकीयाच्छून्यनगरान्निर्गत्य विम-लाशयाः ॥ गच्छंतो गगने वृक्षान् ददृशुः फलशालिनः ॥ २४ ॥ भविष्यन्नगरे तत्र राजपुत्रास्त्रयोपि ते ॥ सु-खमद्य स्थिताः पुत्र मृगयाव्यवहारिणः ॥ २५ ॥ धात्र्ये-तिकथिता राम बालकाख्यायिका शुभा ॥ निश्चयं स ययौ बालो निर्विचारणया धिया ॥ २६ ॥ इयं संसा-ररचना विचारोज्झितचेतसाम् ॥ बालकाख्यायिके वेत्थम-वस्थितिमुपागता ॥ २७ ॥ इत्यादिभिरुपाख्यानैर्माया-शक्तेश्च विस्तरम् ॥ वसिष्ठः कथयामास सैव शक्तिर्निरू-प्यते ॥ २८ कार्यादाश्रयतश्चैषा भवेच्छक्तिर्विलक्षणा ॥ स्फोटांगारौ दृश्यमानौ शक्तिस्तत्रानुमीयते ॥ २९ ॥ पृ-थुबुध्नोदराकारो घटः कार्योत्र मृत्तिका ॥ शब्दादिभिः पं-

---

स्येत्यादिना ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति इयमिति ॥ २७ ॥ वसिष्ठोक्तमुपसंहरति इत्यादि-भिरिति एवं मायासद्भावे प्रमाणमुपन्यस्य तस्याः अनिर्वचनीयत्वं वक्तुं प्रतिजानीते सैव शक्तिरिति ॥ २८ ॥ कार्यादिति एषा मायाशक्तिः का-र्यात्स्वकार्यभूताज्जगत आश्रयतः स्वाश्रयाद्ब्रह्मणश्च विलक्षणा विप-रीतस्वभावा भवेत् माया शक्तेः कार्यादाश्रयतो वैलक्षण्यं दृष्टांतेन स्प-ष्टयति स्फोटांगाराविति वह्निगतशक्तेः कार्यरूपः स्फोटः आश्रयरू-पोंगारश्च प्रत्यक्षगम्यौ शक्तिस्तु कार्यानुमेया अतस्ताभ्यां सा विलक्षणे-त्यर्थः ॥ २९ ॥ उक्तन्यायं मृच्छक्तावपि योजयति पृथुबुध्नेति यः पृथु-बुध्नोदराकारः पृथु स्थूलं बुध्नं वर्तुलमुदरं यस्य सः पृथुबुध्नोदरः तथावि-ध आकारो यस्य सः पृथुबुध्नोदराकारः तादृक् घटः कार्यः शब्दस्पर्श-

चगुणैर्युक्ता शक्तिस्त्वतद्द्विधा ॥ ३० ॥ न पृथ्वादिर्न शब्दादिः शक्तावस्तु यथा तथा ॥ अत एव त्वचिंत्यैषा न निर्वचनमर्हति ॥ ३१ ॥ कार्योत्पत्तेः पुरा शक्तिर्निगूढा मृद्यवस्थिता ॥ कुलालादिसहायेन विकाराकारतां व्रजेत् ॥ ३२ ॥ पृथुत्वादिविकारांतं स्पर्शादिं चापि मृत्तिकाम् ॥ एकीकृत्य घटं प्राहुर्विचारविकला जनाः ॥ ३३ ॥ कुला-

---

रूपरसगंधाख्यपंचगुणोपेता मृत्तिका आश्रयः शक्तिस्त्वतद्द्विधा उभयविलक्षणेत्यर्थः ॥ ३० ॥ वैलक्षण्यमेवाह न पृथ्वादिरिति शक्तौ पृथुत्वादिकार्यधर्मो नास्ति शब्दादिकः आश्रयधर्मोऽपि न विद्यते अतो विलक्षणेत्यर्थः तर्हि सा कीदृशीत्यत आह अस्त्विति यथातथेत्युक्तमेवार्थं स्पष्टयति अत एवेति यतः कार्यादाश्रयतश्च विलक्षणा अत एवैषा अचिंत्या चिंतितुमशक्या ननु तर्हि अचिंत्यत्वमेव तस्याः स्वरूपं स्यादित्याशंक्याह न निर्वचनमिति भेदेनाभेदेनाचिंत्यत्वादिना वा येन केनापि रूपेण निर्वचनं नार्हतीत्यर्थः ॥ ३१ ॥ ननु कारणस्वरूपातिरिक्ता शक्तिर्यद्यस्ति तर्हि कारणस्वरूपमिव सा कुतो नावभासत इत्याशंक्याह कार्योत्पत्तेरिति मृच्छक्तिर्घटादिकार्योत्पत्तेः पूर्वं मृदि निगूढाऽवतिष्ठते अतो नावभासत इत्यर्थः निगूढत्वे उपरिष्टादपि न तस्या अभिव्यक्तिः स्यादित्याशंक्यानभिव्यक्तस्यापि नवनीतादेर्मथनादिनेव कुलालादिव्यापारेण तस्या अभिव्यक्तिः स्यादित्याह कुलालादीति आदिशब्देन दंडचक्रादयो गृह्यंते ॥ ३२ ॥ ननु कारणातिरिक्तस्य शक्तिकार्यस्य सत्त्वे कार्यकारणयोर्भेदो न कुतोऽवभासत इत्याशंक्य भेदप्रतीतिहेतोर्विचारस्याभावादित्याह पृथुत्वादीति अविवेकिनो जनाः पृथुबुध्नत्वादिरूपं कार्यं शब्दस्पर्शादिगुणरूपां कारणभूतां मृत्तिकां चाविचारत एकीकृत्य घट इत्याचक्षते ॥ ३३ ॥ उक्तस्य घटव्यवहारस्याविचारमूलत्वं कुत इत्याशंक्याह कुलालेति कुलालव्यापारात्पूर्वभाविनो मृदंशस्याऽघटस्य घटत्वेन व्यवहारादविचारमूलत्वं तस्येति भावः कस्य तर्हि घटत्वमित्यत

लव्यापृतेः पूर्वो यावानंशः स नो घटः ॥ पश्चात्तु पृथुबुध्नादिमत्त्वे युक्ता हि कुंभता ॥३४॥ स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात् ॥ नाप्यभिन्नः पुरा पिंडदशायामनवेक्षणात् ॥ ३५ ॥ अतोऽनिर्वचनीयोयं शक्तिवत्तेन शक्तिजः ॥ अव्यक्तत्वे शक्तिरुक्ता व्यक्तत्वे घटनामभृत् ॥ ३६ ॥ ऐंद्रजालिकनिष्ठापि माया न व्यज्यते पुरा ॥ पश्चाद्गंधर्वसेनादिरूपेण व्यक्तिमाप्नुयात् ॥ ३७ ॥ एवं मायामयत्वेन विकारस्यानृतात्मताम् ॥ विकाराधारमृद्वस्तु सत्यत्वं चाब्रवीच्छ्रुतिः ॥ ३८॥ वाङ्निष्पाद्यं नाममा-

---

आह पश्चात्त्विति कुलालव्यापारानंतरं भाविनः पृथुबुध्नोदराकारस्यैव घटशब्दवाच्यत्वमुचितं तदुत्पत्त्यनंतरमेव घटशब्दप्रयोगदर्शनादिति भावः ॥ ३४ ॥ ननु पारमार्थिकस्य घटस्यानिर्वचनीयशक्तिकार्यत्वमयुक्तमित्याशंक्य घटस्यापि पारमार्थिकत्वमसिद्धमित्याह स घट इति घटो मृदः पृथक्कृत्य द्रष्टुमशक्यत्वान्न मृदो भिद्यते नापि मृदेव पिंडावस्थायामनुपलभ्यमानत्वात् ॥ ३५ ॥ अतः शक्तिवदनिर्वचनीय एव घटः फलितमाह तेनेति ननु शक्तिकार्ययोरुभयोरप्यनिर्वचनीयत्वे शक्तिः कार्यं चेतिभेदव्यवहारः कुत इत्यत आह अव्यक्तत्व इति ॥ ३६ ॥ पूर्वमनभिव्यक्ता मायाशक्तिः पश्चादभिव्यज्यत इत्येतन्न प्रसिद्धं मायास्वरूपं लभ्यत इत्याशंक्याह ऐंद्रजालिकेति पुरा मणिमंत्रादिप्रयोगात्पूर्वम् ॥३७॥ शक्तिकार्यस्य घटादेरनृतत्वं शक्त्याधारस्य मृदादेः सत्यत्वमित्येतच्छांदोग्यश्रुतावप्यभिहितमित्याह एवमिति मायामयत्वेन मायाकार्यत्वेन विकारस्य कार्यरूपस्य घटादेरनृतात्मतां मिथ्यात्वं विकाराणां घटादीनामाधारभूतायाः मृदः सत्यत्वं वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिरुक्तवतीत्यर्थः ॥ ३८ ॥ इदानीं वाचारंभणमित्याद्युदाहृतं वाक्यमर्थतः पठति वाङ्निष्पाद्यमिति वागिंद्रियेणोच्चार्यं नाममात्रं नामैवास्य घटादेर्न सत्यता न नामातिरेकेण पारमार्थिकं रूप-

त्वं विकारो नास्य सत्यता ॥ स्पर्शादिगुणयुक्ता तु सत्या केवल मृत्तिका ॥ ३९ ॥ व्यक्ताव्यक्ते तदाधार इति त्रिष्वाद्ययोर्द्वयोः॥ पर्यायः कालभेदेन तृतीयस्त्वनुगच्छति ॥ ४० निस्तत्त्वं भासमानं च व्यक्तमुत्पत्तिनाशभाक् ॥ तदुत्पत्तौ तस्य नाम वाचा निष्पाद्यते नृभिः॥ ४१ व्यक्ते नष्टे पि नामैतन्नृवक्त्रेष्वनुवर्तते ॥ तेन नाम्ना निरूप्यत्वाद्व्यक्तं तद्रूपमुच्यते ॥ ४२ ॥ निस्तत्त्वत्वाद्विनाशित्वाद्वाचारं-

---

मस्ति किं तु तदाधारभूता मृदेव सत्येत्यर्थः ॥ ३९ ॥ शक्तितत्कार्ययोरनृतत्वे तदाधारस्य सत्यत्वे च कारणमाह व्यक्तेति व्यक्तो घटादिलक्षणः कार्यः अव्यक्ता तत्कारणभूता शक्तिः ते व्यक्ताव्यक्ते तदाधारस्तयोराधारभूता मृत्तिकेत्येतेषु त्रिषु मध्ये आद्ययोः प्रथमोद्दिष्टयोर्द्वयोः कार्यशक्त्योः संबंधिनौ यौ कालौ तयोर्भेदेन भेदस्य विद्यमानत्वात्पर्यायः क्रमेण भवनं तृतीयस्तदुभयाधारस्तु मृदादिरनुगच्छति उभयत्रानुवर्तते अयं भावः शक्तिकार्ययोः कादाचित्कत्वादनृतत्वमाधारस्य तु कालत्रयानुगामित्वात्सत्यत्वमिति ॥ ४० ॥ इदानीं विकारस्यैवासत्यत्वे हेतुत्रयमाह निस्तत्त्वमिति व्यक्तं व्यक्तशब्दवाच्यं घटादिकार्यं स्वरूपेणासदेवावभासते तथोत्पत्तिविनाशवदुपलभ्यते उत्पत्त्यनंतरं वागिंद्रियजन्यनामात्मकत्वेन व्यवह्रियते च ॥४१॥ किं च, व्यक्तइति व्यक्ते कार्यस्वरूपे नष्टेपि एतत्कार्यादभिन्नं नाम नृवक्त्रेषु नृणां शब्दप्रयोक्तॄणां मनुष्याणां वदनेष्वनुवर्तते ततः किं तत्राह तेनेति व्यक्तं कार्यं तेन वाचा व्यवह्रियमाणेन नाम्ना शब्देन निरूप्यत्वाद्व्यवह्रियमाणत्वात्तद्रूपं तस्य नाम्नो रूपमेव रूपं यस्य तत्तथा नामात्मकमुच्यत इत्यर्थः अयं भावः विमतो घटः घटशब्दात्मको भवितुमर्हति घटशब्देन व्यवह्रियमाणत्वाद् घटशब्दवदिति ॥ ४२ ॥ एवं हेतुत्रयं प्रसाध्येदानीमनुमानरचनाप्रकारं सूचयति निस्तत्त्वत्वादिति व्यक्तस्य घटादिरूपस्य कार्यस्य यत्पृथुबुध्नोदराकारं रूपमस्ति तत्किं चित्किमपि सत्यं न भवति निस्तत्त्वत्वान्निर्गतं

भणनामतः ॥ व्यक्तस्य न तु तद्रूपं सत्यं किं चिन्मृदादिवत् ॥ ४३ ॥ व्यक्तकाले ततः पूर्वमूर्ध्वमप्येकरूपभाक् ॥ सतत्त्वमविनाशं च सत्यं मृद्वस्तु कथ्यते ॥ ४४ ॥ व्यक्तं घटो विकारश्चेत्येतैर्नामभिरीरितः ॥ अर्थश्चेदनृतः कस्मान्न मृद्बोधे निवर्तते ॥ ४५ ॥ निवृत्त एव यस्मात्ते तत्सत्यत्वमतिर्गता ॥ ईदृङ्निवृत्तिरेवात्र बोधजानत्वभास-

---

तत्त्वं वास्तवरूपं यस्मात्तन्निस्तत्त्वं तस्य भावो निस्तत्त्वत्वं तस्मात्तथा विनाशित्वान्मृदि सत्यामेव विनाशप्रतियोगित्वाद् वाचारंभणनामतः वागिंद्रियजन्यशब्दमात्रात्मकत्वात्त्रिष्वपि हेतुषु मृद्वदिति वैधर्म्यदृष्टांतः अत्रैवं प्रयोगः घटादिरूपः कार्यः असत्यो भवितुमर्हति निस्तत्त्वत्वाद्यदसत्यं न भवति न तन्निस्तत्त्वं यथा घटाद्युपादानं मृदिति केवलव्यतिरेकी एवमितरहेतुद्वयेपि योजनीयम् ॥ ४३ ॥ एवं विकारस्यासत्यत्वमुपपाद्येदानीं तदधिष्ठानरूपायाः मृदः सत्यत्वमुपपादयति व्यक्तेति व्यक्तकाले स्थितिकाले ततः पूर्वं व्यक्तोत्पत्तेः पूर्वस्मिन्काले ऊर्ध्वमपि व्यक्तविनाशोत्तरकालेपि एकरूपभाग् एकाकारं सतत्त्वं तत्त्वेन वास्तवरूपेण सह वर्तत इति सतत्त्वमविनाशं विकारेण सह नाशरहितं यन्मृद्वस्तु तत्सत्यमिति कथ्यते अत्रेदमनुमानं विमतं मृद्वस्तु सत्यं भवितुमर्हति सतत्त्वत्वाद् आत्मवदित्यादि योज्यम् ॥ ४४ ॥ ननु घटादेः कार्यजातस्यासत्यत्वे तस्यारोपितरजतादेरिवाधिष्ठानज्ञानेन निवर्त्यता स्यादिति शंकते व्यक्तमिति व्यक्तमित्यादिभिस्त्रिभिः शब्दैरभिधीयमानो योर्थः कार्यरूपस्तस्य कारणारेकेणासत्त्वेंगीक्रियमाणे मृल्लक्षणकारणस्य ज्ञाने किं न तन्निवृत्तिः स्यादित्यर्थः ॥ ४५ ॥ इष्टापत्तिरिति परिहरति निवृत्त इति तत्रोपपत्तिमाह यस्मादिति यस्मात्कारणात्तव घटादिविषयसत्यत्वबुद्धिर्नष्टाऽतः स निवृत्त एवेत्यर्थः नन्वारोपितरजतादिरूपस्यैवाप्रतीतिरुपलभ्यते न सत्यत्वबुद्ध्यपगम इत्याशंक्य तस्य निरुपाधिकभ्रमत्वादस्तु तथात्वमिह तु सोपाधिकभ्रमे सत्यत्वबुद्ध्यपगम एव निवृतिः स्यादित्यभिप्रायेणाह ईदृ-

नम् ॥ ४६ ॥ पुमानधोमुखो नीरे भातोप्यास्ति न वस्तुतः ॥ तटस्थमर्त्यवत्तस्मिन्नैवास्था कस्य चित्कचित् ॥ ४७ ॥ ईदृग्बोधे पुमर्थत्वं मतमद्वैतवादिनाम् ॥ मृद्रूपस्यापरित्यागाद्विवर्तत्वं घटे स्थितम् ॥ ४८ ॥ परिणामे पूर्वरूपं त्यजेत्तत्क्षीररूपवत् ॥ मृत्सुवर्णे निवर्तेते घटकुंडलयोर्न हि ॥ ४९ घटे भग्ने न मृद्भावः कपालानामवेक्षणात् ॥ मैवं चूर्णे स्ति मृद्रूपं स्वर्णरूपं त्वतिस्फुटम् ॥५०॥ क्षीरादौ परि-

---

गिति अत्र सोपाधिकभ्रमस्थले ईदृगेव सत्यत्वबुद्ध्यपगमरूपैव बोधजा अधिष्ठानयाथात्म्यज्ञानजन्या निवृत्तिरभ्युपेया न त्वभासनं न स्वरूपाप्रतीतिरूपेत्यर्थः ॥ ४६ ॥ एवं क्व दृष्टमित्यत आह पुमानिति जलेऽधोमुखत्वेन प्रतिभासमानोपि पुमान् परमार्थतो नास्ति तत्रोपपत्तिमाह तटस्थेति कस्य चिद्विवेकिनोऽविवेकिनो वा तस्मिन्नधोमुखे पुरुषे तीरस्थपुरुष इव सत्यत्वाभिमानः क्व चिद्देशे काले वा नैवास्तीति ॥ ४७ ॥ नन्वारोपितस्यासत्यत्वज्ञानमात्रान्न पुरुषार्थसिद्धिरित्याशंक्याह ईदृगिति अद्वैतवादे आत्मानंदातिरिक्तस्य सर्वस्य मिथ्यात्वनिश्चये सत्यद्वितीयानंदाभिव्यक्तिलक्षणः पुरुषार्थः सिद्ध्यतीत्यभिप्रायः ननु घटस्य मृद्विवर्तत्वे सिद्धे तज्ज्ञानाद्घटसत्यत्वबुद्धिर्निवर्तते न चैतदिदानीं सिद्धमित्याशंक्याह मृद्रूपस्येति ॥४८॥ घटे मृद्रूपपरित्यागाभावेपि मृत्परिणामता घटस्य किं न स्यादित्याशंक्याह परिणाम इति यत्र क्षीरादौ परिणामोऽभ्युपगम्यते तत्र क्षीरादिभावस्य पूर्वरूपस्य त्याग उपलभ्यत इत्यर्थः ननु विवर्ते पूर्वरूपापरित्यागः क्व दृष्टः इत्याशंक्य मृत्सुवर्णयोर्दृश्यत इत्याह मृत्सुवर्णेति मृत्सुवर्णविवर्तयोर्घटकुंडलयोर्निष्पन्नयोरपि तत्कारणभूतमृत्सुवर्णरूपे न निवर्त्तेते इति हि प्रसिद्धमित्यर्थः ॥४९॥ ननु घटस्य मृद्विवर्तत्वमनुपपन्नं घटनाशे पुनर्मृद्भावादर्शनादिति शंकते घट इति मृद्भावाभावे कारणमाह कपालानामिति कपालानामपि नाशे मृद्भावोपलब्धिः स्यादिति परिहरति मैवमिति सुवर्णे त्वेतच्चोद्यमेवानवकाशमित्याह स्वर्णेति ॥५०॥ ननु परिणामे दृष्टांतत्वे-

णामोस्तु पुनस्तद्भाववर्जनात्॥एतावता मृदादीनां दृष्टांतत्वं-न हीयते ॥ ५१ ॥ आरंभवादिनः कार्ये मृदो द्वैगुण्य-मापतेत् ॥ रूपस्पर्शादयः प्रोक्ताः कार्यकारणयोः पृथक् ॥ ५२ ॥ मृत्सुवर्णमयश्चेति दृष्टांतत्रयमारुणिः ॥ प्राहातो वासयेत्कार्यानृतत्वं सर्ववस्तुषु ॥ ५३ ॥ कारणज्ञानतः कार्यविज्ञानं चापि सोवदत् ॥ सत्यज्ञानेऽनृतज्ञानं कथम-

---

नाभिहितानां क्षीरमृत्सुवर्णादीनां मध्ये यदि मृत्सुवर्णयोर्विवर्तदृष्टांतत्वमंगीक्रियते तर्हि तद्वदेव क्षीरस्यापि तथात्वं स्यादित्याशंक्याह क्षीरादाविति तर्हि क्षीरवदेवावस्थांतरमापद्यमानयोस्तयोर्विवर्तदृष्टांतता न भवेदित्याशंक्याह एतावतेति एतावता क्षीरादेः परिणामित्वेन मृदादीनां सुवर्णादीनां दृष्टांतत्वं विवर्तदृष्टांतभावो न हीयते न नश्यति अयमभिप्रायः क्षीरस्य पूर्वरूपपरित्यागपुरःसरमवस्थांतरप्राप्तिसद्भावात्परिणामित्वमेव मृत्सुवर्णयोस्तु अवस्थांतरापत्तिसद्भावेपि पूर्वरूपपरित्यागाभावाद्विवर्ततापीति ॥ ५१ ॥ ननु मृत्सुवर्णयोः परिणामविवर्ताविवारंभकत्वमपि किं नांगीक्रियत इत्याशंक्याह आरंभवादिन इति आरंभवादिनो मते च कार्ये घटादिरूपे मृत्तिकादेर्द्रव्यस्य द्वैगुण्यं कार्याकारेण कारणाकारेण च द्विगुणत्वमापद्येत मृदो तथा च सति गुरुत्वादिद्वैगुण्यमप्यापद्येतेति भावः कुत एतदित्याशंक्याह रूपेति रूपादीनां गुणानां कार्यकारणयोर्भेदस्य तैरेवांगीकृतत्वादिति भावः ॥ ५२ ॥ ननु मृत्सुवर्णयोः किं द्वयोरेव विवर्ते दृष्टांतत्वं नेत्याह मृदिति अरुणस्य पुत्र उद्दालकाख्यः कश्चिदृषिर्यथा सोम्यैकेन मृत्पिंडेनेत्यारभ्य कार्ष्णायसमित्येवसत्यमित्यंतेन वाक्यसंदर्भेण कार्यस्यानृतत्वे मृत्सुवर्णायोरूपं दृष्टांतत्रयमुक्तवानित्यर्थः किमर्थमेवं दृष्टांतत्रयमुक्तवानित्याशंक्याह अत इति यत एवं बहुषु मृदादिषु कार्यानृतत्वमुपलब्धमतोभूतभौतिकरूपेषु वस्तुषु कार्यानृतत्वं वासितं कुर्यादित्यर्थः ॥ ५३ ॥ ननु कार्यानृतत्वानुसंधानमपि किमर्थमुक्तमित्याशंक्य कारणज्ञानात्कार्यज्ञानासिद्ध्य इत्यभिप्रायेणाह कारणेति कारणस्य

त्रोपपद्यते ॥ ५४ ॥ समृत्कस्य विकारस्य कार्यता लोकदृष्टितः ॥ वास्तवोत्र मृदंशोस्य बोधः कारणबोधतः ॥ ५५ ॥ अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः ॥ तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् ॥ ५६ ॥ तर्हि कारणविज्ञानात्कार्यज्ञानमितीरिते ॥ मृद्बोधान्मृत्तिकाबुद्धेत्युक्तं स्यात्कोत्र विस्मयः॥ ५७ ॥ सत्यं कार्येषु वस्त्वंशः

---

मृदादेर्ज्ञानात्कार्यजातस्य घटादेर्ज्ञानमपि यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिवाक्यजातेनोक्तवानित्यर्थः ननु मृत्सुवर्णादिरूपस्य पारमार्थिकस्य कारणस्य विज्ञानात्तद्विलक्षणस्य घटरूपकार्यादेर्विज्ञानमनुपपन्नमिति शंकते सत्येति ॥ ५४ ॥ कार्यस्य सत्यानृतांशद्वयरूपत्वात्कारणज्ञानात्कार्यगतसत्यांशज्ञानं भवतीत्यभिप्रायेणाह समृत्कस्येति समृत्कस्याधिष्ठानभूतमृत्सहितस्य विकारस्य आरोपितस्य घटादिरूपस्य कार्यता कार्यशब्दार्थत्वं लोकप्रसिद्धमित्यर्थः भवत्वेवमेतावता कारणज्ञानात्कार्यज्ञानं न संभवतीति चोद्यस्य कः परिहारो जात इत्याशंक्य कार्यगतानृतांशज्ञानाभावेपि तद्गतसत्यांशज्ञानं भवत्येवेति परिहरति वास्तव इति अत्र कार्ये यो वास्तवमृदंशोस्ति अस्य वास्तवांशस्य बोधो ज्ञानं कारणज्ञानाद्भवतीत्यर्थः ॥ ५५ ॥ ननु कार्यगतसत्यांशवदनृतांशोपि बोद्धव्य इत्याशंक्य प्रयोजनाभावान्नैवमित्याह अनृतांश इति प्रयोजनाभावमेव दर्शयति तत्त्वज्ञानमिति तत्त्वस्याबाध्यस्य वस्तुनो ज्ञानं पुमर्थं पुंसो ज्ञातुः पुरुषस्यार्थः प्रयोजनं यस्मिन् तत्पुमर्थमितिबहुव्रीहिः अनृतांशस्य विकारस्यावबोधनं प्रयोजनवन्न भवतीत्यर्थः॥ ५६ ॥ ननु कारणज्ञानात्कार्यज्ञानं भवतीत्येतच्छ्रोतृबुद्धौ चमत्कारहेतुर्भविष्यतीत्यभिप्रायेणोक्तं तदेतन्न संभवतीति शंकते तर्हीति कारणस्य मृदादेर्ज्ञानात्कार्यगतं मृदादिसत्यांशज्ञानं भवतीति उक्ते मृज्ज्ञानात् मृदो ज्ञानमित्युक्तं भवति एवं च स तिशब्दत एव चमत्कारो नार्थत इत्यर्थः ॥ ५७ ॥ ईदृग्विवेकवतां विस्मयाभावेपि तद्रहितानां विस्मयः स्यादेवेति

कारणात्मेतिजानतः ॥ विस्मयो मास्त्विहाज्ञस्य विस्मयः केनवार्यते ॥५८॥ आरंभी परिणामी च लौकिकश्चैककारणे॥ ज्ञाते सर्वमतिं श्रुत्वा प्राप्नुवंत्येव विस्मयम् ॥ ५९ ॥ अद्वैते-भिमुखीकर्तुमेवात्रैकस्य बोधतः ॥ सर्वबोधः श्रुतौ नैव ना-नात्वस्य विवक्षया ॥ ६० ॥ एकमृत्पिंडविज्ञानात्सर्वमृन्म-यधीर्यथा ॥ तथैकब्रह्मबोधेन जगद्बुद्धिर्विभाव्यताम् ॥६१॥

---

परिहरति सत्यमिति कार्येषु घटादिषु विद्यमानो वास्तवोंशः कारणस्व-रूपमेवेति ये जानंति तेषामाश्चर्यं मा भूदितरेषां तत्त्वज्ञानशून्यानां जा-यमानो विस्मयो न निवारयितुं शक्यत इत्यर्थः ॥ ५८ ॥ अज्ञस्य विस्मयो भवेदित्युक्तमेवार्थं प्रपंचयति आरंभीति आरंभो नाम समवाय्य समवायि-निमित्ताख्यकारणेभ्यो भिन्नस्य कार्यस्योत्पत्तिस्तां यो वक्ति सोयमारंभी-त्युच्यते पूर्वरूपपरित्यागेन रूपांतरप्राप्तिलक्षणं परिणामं यो वक्ति स परिणामीत्युच्यते प्रक्रियाद्वयमजानानो लोकव्यवहारमात्रपरो लौकिक इत्युच्यते एषां त्रयाणामपि कारणस्यैकस्य ज्ञानादनेकेषां कार्याणां विज्ञानं भवतीतिवाक्यश्रवणाद्विस्मयो भवेदेवेत्यर्थः ॥ ५९ ॥ ननु य-थाश्रुतमर्थं परित्यज्येत्थं व्याख्याने किं कारणमित्याशंक्य श्रुतेस्तत्र तात्पर्याभावादित्याह अद्वैत इति अद्वैतविज्ञाने शिष्यमभिमुखीकर्तुमेव छांदोग्यश्रुतावेकस्य कारणस्य विज्ञानात्सर्वेषां कार्याणां विज्ञानमुक्तं न तु कार्याणामनेकेषां विज्ञानसिध्यर्थमित्यभिप्रायः ॥ ६० ॥ इदानीमेक-विज्ञानसर्वविज्ञानदृष्टांतप्रदर्शनपरस्य यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यादितिवाक्यस्यार्थनिरूपणपुरःसरं दार्ष्टांतिकप्रदर्शनप-रस्य उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं वि-ज्ञातमितिवाक्यस्यार्थं प्रदर्शयन् प्रकृते फलितमाह एकमृत्पिंडेति यथा घटशरावाद्युपादानस्यैकस्य मृत्पिंडस्यावबोधात्तद्विकाराणां सर्वेषां घटा-दीनां बोधो भवति एवं सर्वोपादानस्यैकस्य ब्रह्मणो बोधात्तत्कार्यस्य कृत्स्नस्य जगतो बोधो भवतीत्यवगंतव्यमित्यर्थः ॥ ६१ ॥ ननु ब्रह्म-

सच्चित्सुखात्मकं ब्रह्म नामरूपात्मकं जगत्॥ तापनीये श्रुतं ब्रह्म सच्चिदानंदलक्षणम् ॥ ६२ ॥ सद्रूपमारुणिः प्राह प्रज्ञानं ब्रह्म बव्हृचः ॥ सनत्कुमार आनंदमेवमन्यत्र गम्यताम् ॥ ६३ ॥ विचिंत्य सर्वरूपाणि कृत्वा नामानि तिष्ठति ॥ अहं व्याकरवाणीमे नामरूपे इति श्रुतेः ॥६४॥ अव्याकृतं पुरा सृष्टेरूर्ध्वं व्याक्रियते द्विधा ॥ अचिंत्यश-

---

जगतोः स्वरूपापरिज्ञाने ब्रह्मज्ञानाज्जगतो ज्ञानं भवतीत्येवं नावगंतुं शक्यत इत्याशंक्य तदवगमाय तदुभयस्वरूपं दर्शयति सच्चिदिति ब्रह्मणः सच्चिदानंदरूपत्वे किं प्रमाणमित्याशंक्य तापनीयादिश्रुतयः प्रमाणमित्यभिप्रायेणाह तापनीय इति उत्तरस्मिन् तापनीये आथर्वणिकैस्तावद् ब्रह्मैवेदं सर्वं सच्चिदानंदमात्रमित्यादिप्रदेशेषु ब्रह्मणः सच्चिदानंदरूपत्वमुक्तमित्यर्थः ॥ ६२ ॥ आदिशब्देन विवक्षितानि श्रुत्यंतराणि दर्शयति सद्रूपमिति अरुणपुत्रेणोद्दालकेन छांदोग्यश्रुतौ सदेव सोम्येदमग्र आसीदित्यादिना सद्रूपं ब्रह्म निरूपितं तथा बव्हृचः ऋक्शाखाध्यायिनः ऐतरेयोपनिषदि प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति प्रज्ञानरूपत्वं ब्रह्मणो दर्शयंति एवं पूर्वोदाहृतायां छांदोग्यश्रुतावेव सनत्कुमाराख्यो गुरुः नारदाख्य शिष्याय भूमात्वेव विजिज्ञासितव्य इत्युपक्रम्य यो वै भूमा तत्सुखमितिभूमशब्दाभिधेयस्य ब्रह्मण आनंदरूपत्वमुक्तवानित्यर्थः उक्तन्यायमन्यत्राप्यतिदिशति एवमिति अन्यत्र तैत्तिरीयकादिश्रुतिषु आनंदो ब्रह्मेति व्यजानादित्यादिवाक्यैरानंदरूपत्वादिकमुक्तमिति द्रष्टव्यमिति भावः॥६३॥ सच्चिदानंदेष्विव नामरूपयोरपि श्रुतिं दर्शयति विचिंत्येति सर्वाणि रूपाणि विचिंत्य धीरो नामानि कृत्वाभिवदन् यदास्त इति अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति च स्रष्टव्ये जगन्निष्ठे नामरूपे श्रुत्या दर्शिते इत्यर्थः ॥ ६४ ॥ तत्रैव श्रुत्यंतरमुदाहरति अव्याकृतमिति बृहदारण्यकश्रुतौ तद्धेतं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूप इति सृष्टस्य जगतो नामरूपात्मकत्वं द-

क्तिर्मायैषा ब्रह्मण्यव्याकृताभिधा ॥ ६५ ॥ अविक्रियब्रह्मनिष्ठा विकारं यात्यनेकधा ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ ६६ ॥ आद्यो विकार आकाशः सोस्ति भात्यपि च प्रियः ॥ अवकाशस्तस्य रूपं तन्मिथ्या न तु तत्त्रयम् ॥ ६७ ॥ ॥ न व्यक्तेः पूर्वमस्त्येव न पश्चाच्चापि नाशतः ॥ आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ ६८ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येवेत्याह कृष्णोर्जुनं प्रति ॥ ६९ ॥ मृद्वत्ते सच्चिदानंदा अनुगच्छंति सर्वदा ॥ निराकाशे स-

---

र्शितमित्यर्थः सृष्टेः पूर्वमिदं जगदव्याकृतमव्यक्तनामरूपात्मकमभूदूर्ध्वं सृष्ट्यवसरे द्विधावाच्यवाचकभावेन व्याक्रियते व्यक्तीकृतमित्यर्थः इदानीं तद्धेदं तर्ह्यव्याकृतमासीदित्यत्राव्याकृतशब्दस्यार्थमाह अचिंत्येति येयं ब्रह्मणि अचिंत्यशक्तिर्मायाऽस्ति एषाऽव्याकृताभिधाऽस्मिन्वाक्येऽव्याकृतशब्देनाभिधीयत इत्यर्थः ॥६५॥ तन्नामरूपाभ्यामेव व्याक्रियतेइत्यस्यार्थमाह अविक्रियेति अविकारिणि ब्रह्मणि वर्तमाना सा अनेकधा भूतभौतिक प्रपंचरूपेण बहुधा विकारं परिणामं प्राप्नोति माया ब्रह्मणि वर्तत इत्यत्र प्रमाणमाह मायां त्विति मायां पूर्वोक्तां प्रकृतिं प्रक्रियते अनयेति प्रकृतिरुपादानकारणं विद्याज्जानीयात् मायिनं तस्या आश्रयत्वेन तद्वंतं महेश्वरं मायानियामकं विद्यादित्यनुवर्तते उभयत्र तु शब्दः परस्परवैलक्षण्यद्योतनार्थः ॥६६॥ इदानींमायोपहितस्य ब्रह्मणः प्रथमकार्यमाह आद्य इति तस्य कारणादागतं रूपत्रयमाह सोस्तीति सच्चिदानंदरूप इत्यर्थः तस्य प्रातिस्विकं रूपमाह अवकाश इति तस्य पूर्वस्माद्रूपत्रयाद्वैलक्षण्यमाह तन्मिथ्येति सदादिरूपत्रयं वास्तवमित्यर्थः ॥ ६७ ॥ तस्य चतुर्थरूपस्य मिथ्यात्वेहेतुमाह न व्यक्तेरिति ननूत्पत्तिविनाशयोर्मध्ये प्रतीयमानस्यावकाशस्य कथमसत्त्वमित्याशंक्याह आदाविति ॥ ६८ ॥ उक्तार्थे श्रीकृष्णवाक्यं प्रमाणयति अव्यक्तादीनीति ॥ ६९ ॥ सदादिरूपत्रयस्यावकाशे

दादीनामनुभूतिर्निजात्मनि ॥ ७० ॥ अवकाशे विस्मृतेऽथ तत्र किं भाति ते वद ॥ शून्यमेवेति चेदस्तु नाम ताहग्विभाति हि ॥७१ ॥ ताहक्त्वादेव तत्सत्त्वमौदासीन्येन तत्सुखम् ॥ आनुकूल्यप्रातिकूल्यहीनं यत्तन्निजं सुखम् ॥ ७२ ॥ आनुकूल्ये हर्षधीः स्यात्प्रातिकूल्ये तु दुःखधीः ॥ द्वयाभावे निजानंदो निजदुःखं न तु क चित् ॥ ७३ ॥ निजानंदे स्थिरे हर्षशोकयोर्व्यत्ययः क्षणात् ॥ मनसः क्षणिकत्वेन तयोर्मानसतेष्यताम् ॥ ७४ ॥ आकाशेऽप्ये-

---

सत्त्वे किं प्रमाणमित्याशंक्यानुभूतिरेव प्रमाणमित्याह मृद्वदिति मृद्वदिति दृष्टांतः प्रदर्शनार्थः घटादिषु यथाकालत्रयेपि मृदनुवर्तते तथा सदादिरूपत्रयं सर्वदानुगतमित्यर्थः नन्ववकाशं विहाय सदादिरूपत्रयं कथमनुभूतमित्याशंक्याह निराकाश इति ॥ ७० ॥ तदेवोपपादयति अवकाश इति पूर्ववादिनश्चोद्यमनुवदाति शून्यमिति अंगीकृत्य परिहारमाह अस्त्विवति शब्दतः शून्यमस्त्वर्थतस्त्ववकाशाभावविशेषणस्य विशेष्यत्वेन प्रतीयमानं किं चिदस्तीति अभ्युपगंतव्यमित्याह ताहगिति हिशब्दो लोकप्रसिद्धिद्योतनार्थः ॥ ७१ ॥ भवत्वेवं प्रकृते किमायातमित्याशंक्य विशेष्यत्वेन प्रतीयमानस्य स्वरूपमभ्युपेयमित्याह ताहक्त्वादिति तस्य सुखस्वरूपत्वमाह औदासीन्येनेति औदासीन्यविषयत्वात्तस्य सुखस्वरूपत्वमित्यर्थः नन्वनुकूलत्वराहितस्य कथं सुखस्वरूपत्वमित्याशंक्याह आनुकूल्येति ॥ ७२ ॥ तदेवोपपादयति आनुकूल्य इति ननु निजानंदवन्निजदुःखमपि किं न स्यादित्याशंक्य दुःखे निजरूपसिद्ध्यभावान्नैवमित्याह निजदुःखमिति ॥ ७३ ॥ ननु निजानंदस्य सदानंदत्वात्सर्वदा हर्ष एव स्यात् न तु शोक इत्याशंक्य तस्य नित्यत्वेपि तद्ग्राहिणो मनसः क्षणिकत्वेन मानसयोस्तयोरपि क्षणिकत्वमित्याह निजानंद इति ॥ ७४ ॥ दृष्टांते सिद्धमर्थं दार्ष्टांतिके योजयति आकाशेपीति एवं निजात्मन्युक्तप्रकारेणेत्यर्थः सत्ताभाने तु भवताप्यभ्युपगम्येते अतो नोप-

वमानंदः सत्ताभाने तु संमते ॥ वाय्वादिदेहपर्यंतं वस्तुष्वेवं विभाव्यताम् ॥ ७५ ॥ गतिस्पर्शौ वायुरूपं वन्हेर्दाहप्रकाशने ॥ जलस्य द्रवता भूमेः काठिन्यं चेतिनिर्णयः ॥ ७६ ॥ असाधारण आकार औषध्यन्न वपुष्यपि ॥ एवं विभाव्यं मनसा तत्तद्रूपं यथोचितम् ॥ ७७ ॥ अनेकधा विभिन्नेषु नामरूपेषु चैकधा ॥ तिष्ठंति सच्चिदानंदा विसंवादो न कस्य चित् ॥ ७८ ॥ निस्तत्त्वे नामरूपे द्वे जन्मनाशयुते च ते ॥ बुद्ध्या ब्रह्मणि वीक्षस्व समुद्रे बुद्बुदादिवत् ॥ ७९ सच्चिदानंदरूपेऽस्मिन्पूर्णे ब्रह्मणि वीक्षिते ॥ स्वयमेवावजानाति नामरूपे शनैः शनैः ॥ ८० ॥ यावद्यावदवज्ञा स्यात्तावत्तावत्तदीक्षणम् ॥ यावद्यावद्वीक्ष्यते तत्तावत्तावदुभे त्यजेत् ॥ ८१ ॥ तदभ्यासेन विद्यायां सुस्थितायामयं पुमान् ॥ जीवन्नेव भवेन्मुक्तो वपुरस्तु यथा तथा ॥ ८२ ॥ तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम् ॥ एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ८३ ॥ वासना-

---

पादनीये इत्यर्थः आकाशे प्रतिपादितोऽर्थो वाय्वादिशरीरांतेष्वभ्युपगंतव्य इत्याह वाय्वादीति ॥ ७५ ॥ तत्र वाय्वादीनामसाधारणधर्मान्दर्शयति गतिस्पर्शाविति द्वाभ्याम् ॥ ७६ ॥ असाधारण इति ॥ ७७ ॥ फलितमाह अनेकधेति ॥ ७८ ॥ तर्हि प्रतीयमानयोर्नामरूपयोः का गतिरित्याशंक्य कल्पितत्वमेव गतिरित्याह निस्तत्त्व इति कल्पितत्वे हेतुः जन्मेति ॥ ७९ ॥ ततः किमित्यत आह सच्चिदानंदेति ॥ ८० ॥ ब्रह्मज्ञानदार्ढ्यस्य द्वैतावज्ञापूर्वकत्त्वाच्छ्रवणादिवद् द्वैतावज्ञापि कर्तव्येत्याह यावदिति ॥ ८१ ॥ उभयाभ्यासस्य फलमाह तदभ्यासेनेति ॥ ८२ ॥ इदानीं ब्रह्माभ्यासस्वरूपमाह तच्चिंतनमिति ॥ ८३ ॥ नन्वनादिकालमारभ्य प्रातिभासमानस्य द्वैतस्य कादाचित्केन ज्ञानाभ्यासेन कथं नि-

नेककालीना दीर्घकालं निरतरम् ॥ सादरंचाभ्यस्यमाने सर्वथैव निवर्तते ॥ ८४ ॥ मृच्छक्तिवद्ब्रह्मशक्तिरनेकाननृतान्सृजेत् ॥ यद्वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनम् ॥ ८५ ॥ निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ॥ ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यंतकारिणी ॥ ८६ ॥ स्वप्ने वियद्गतिं पश्येत्स्वमूर्धच्छेदनं यथा ॥ मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ ८७ ॥ इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ॥ यथा यथेक्ष्यते यद्यत्तद्युक्तं तथा तथा ॥ ८८ ॥ ईदृशो महिमा दृष्टो निद्राशक्तेर्यदा तदा ॥ मायाशक्तेरचिंत्योयं महिमेति किमद्भुतम् ॥ ८९ ॥ शयाने पुरुषे निद्रा स्वप्नं बहुविधं सृजेत् ॥ ब्रह्मण्येवं निर्विकारे विकारान्कल्पयत्यसौ ॥९०॥ खानिलाग्निजलोर्व्यंडलोकप्राणिशिलादिकाः ॥ विकाराः प्राणिधीष्वंतश्चिच्छा-

---

वृत्तिरित्याशंक्य दीर्घकालनैरंतर्येण सत्कारसेवितेनाभ्यासेन निवर्तत एवेत्याह वासनेति ॥ ८४ ॥ ननु ब्रह्मण एकस्यानेकाकारजगद्धेतुत्वमनुपपन्नमित्याशंक्य मायासहितस्योपपद्यत इत्याह मृच्छक्तिवदिति अनृतान्कार्याणीत्यर्थः ननु मृच्छक्तेः सत्यत्वादनेकहेतुत्वाद्विषमो दृष्टांत इत्याशंक्य पक्षांतरमाह यद्वेति ॥८५॥ दृष्टांतं विशदयति निद्रेति दार्ष्टांतिकमाह ब्रह्मणीति ॥ ८६ ॥ दुर्घटकारित्वमेव दर्शयति स्वप्न इति ॥ ८८ ॥ स्वप्नस्य दुर्घटत्वे हेतुमाह इदमिति ॥ ८८ ॥ उक्तमर्थं कैमुतिकन्यायेन स्पष्टयति ईदृश इति ॥ ८९ ॥ अप्रयतमानब्रह्मनिष्ठायाः मायायाः जगद्धेतुत्वे दृष्टांतमाह शयान इति ॥ ९० ॥ मायया सृष्टान्पदार्थान् दर्शयति खानिलेति ननु पांचभौतिकत्वेन साम्येपि केषां चिच्चेतनत्वं केषां चिज्जडत्वं कुत इत्याशंक्याह प्राणीति प्राणिशरीरेष्वंतःकर-

या प्रतिबिंबिता ॥ ११ ॥ चेतनाचेतनेष्वेषु सच्चिदानंदलक्षणम् ॥ समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक् ॥ १२ ॥ ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ॥ उपेक्ष्य नामरूपे द्वे सच्चिदानंदधीर्भवेत् ॥ १३ ॥ जलस्थेऽधोमुखे स्वस्य देहे दृष्टे प्युपेक्ष्य तम् ॥ तीरस्थ एव देहे स्वे तात्पर्यं स्याद्यथा तथा ॥ १४ ॥ सहस्रशो मनोराज्ये वर्तमाने सदैव तत् ॥ सर्वै रुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ १५ ॥ क्षणे क्षणे मनोराज्यं भवत्येवान्यथाऽन्यथा ॥ गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥ १६ ॥ न बाल्यं यौवने लभ्यं यौवनं स्थाविरे तथा ॥ मृतः पिता पुनर्नास्ति नायात्येव गतं दिनम् ॥ १७ ॥ मनोराज्याद्विशेषः कः क्षणध्वंसिनि लौकिके ॥ अतोस्मिन् भासमानेपि तत्सत्यत्वधियं त्यजेत् ॥ १८ ॥ उपेक्षिते लौकिके धीर्निर्वि-

---

णेषु चैतन्यप्रतिबिंबनाच्चेतनत्वमितरत्र तदभावाज्जडत्वमित्यर्थः ॥ ११ ॥ ननु चेतनाचेतनविभागश्चिद्रूपब्रह्मकृत एव किं न स्यादित्याशंक्य ब्रह्मणः सर्वोपादानत्वेन सर्वत्र समत्वान्मैवामित्याह चेतनेति ॥ १२ ॥ ब्रह्मणश्चिज्जडसाधारणत्वे हेतुमाह ब्रह्मणीति ब्रह्मणः सर्वकल्पनाधारत्वात्सर्वगतत्वमित्यर्थः तत्कथमवगम्यत इत्याशंकायां कल्पितनामरूपत्यागेधिष्ठानं ब्रह्मावगम्यत इत्याह उपेक्ष्येति ॥ १३ ॥ उक्तार्थे दृष्टांतमाह जलस्थ इति नीरेऽधोमुखे देहे परिदृश्यमानेऽपि तत्रादरं परित्यज्य तीरस्थे स्वदेहे तद्विपरीते ममत्वबुद्धिर्यथा तथेत्यर्थः ॥ १४ ॥ इदानीं सर्वजनप्रसिद्धं दृष्टांतांतरमाह सहस्रश इति उपेक्षा कर्तव्येति शेषः ॥ १५ ॥ प्रपंचवैचित्र्ये दृष्टांतमाह क्षण इति दार्ष्टांतिकमाह व्यवहार इति ॥ १६ ॥ तदेव विवृणोति न बाल्यमिति ॥ १७ ॥ हैतक्षणिकत्वमुपसंहरति मनोराज्यादिति क्षणिकत्वसाधने प्रयोजनमाह अत इति ॥ १८ ॥ ननु लौकिकोपेक्षायां को लाभ इत्याशंक्य ब्र-

घ्ना ब्रह्मचिंतने ॥ नटवत्कृत्रिमास्थायां निर्वहत्येव लौकिकम् ॥ ९९ ॥ प्रवहत्यपि नीरेधःस्थिरा प्रौढशिला यथा ॥ नामरूपान्यथात्वेऽपि कूटस्थं ब्रह्म नान्यथा ॥ १०० ॥ निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत् ॥ सच्चिद्घने तथा नाना जगद्गर्भमिदं वियत् ॥ १०१ ॥ अदृष्ट्वा दर्पणं नैव तदंतस्थेक्षणं तथा ॥ अमत्वा सच्चिदानंदनामरूपमतिः कुतः ॥ १०२ ॥ प्रथमं सच्चिदानंदे भासमानेऽथ तावता ॥ बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः॥१०३॥ एवं च निर्जगद्ब्रह्म सच्चिदानंदलक्षणम् ॥ अद्वैतानंद एत-

---

ह्मणि धीः स्थिरा भवतीत्याह उपेक्षित इति तर्हि ज्ञानिनो व्यवहारः कथमित्याशंक्याह नटवदिति ॥९९॥ ननु ज्ञानिनो व्यवहाराभ्युपगमे विकारित्वं प्रसज्येतेत्याशंक्य बुद्धौ व्यवहारवत्यामपि तत्साक्ष्यात्मा निर्विकार इति सदृष्टांतमाह प्रवहतीति उदके उपरि प्रवहत्यपि अधःस्थिता प्रौढा शिला यथा न चलति तथा एवं बुद्धौ संसरत्यामपि न ज्ञानी संसरतीत्यर्थः ॥ १०० ॥ नन्वखंडे ब्रह्मणि तद्विलक्षणस्य जगतः कथमवभासनमित्याशंक्य निश्छिद्रे दर्पणे सावकाशवस्तुनो यथा भानं तद्वदित्याह निश्छिद्र इति ॥ १०१ ॥ नन्वदृश्ये ब्रह्मणि कथं जगत्प्रतीतिरित्याशंक्य सच्चिदानंदप्रतीतिपुरःसरमेव जगत्प्रतीतिरिति सदृष्टांतमाह अदृष्ट्वेति ॥१०२॥ ननु नामरूपयोरपि भासमानत्वात्कथं निर्विषयब्रह्मप्रतीतिरित्याशंक्य तद्बुद्ध्युपायमाह प्रथममिति सच्चिदानंदे ब्रह्मणि कल्पितनामरूपात्मके प्रपंचे सच्चिदानंदमात्रं बुद्ध्या गृहीत्वा नामरूपयोर्बुद्धिं न धारयेत् ॥ १०३ ॥ फलितमाह एवमिति एवं च सति निर्जगद्ब्रह्म सच्चिदानंदलक्षणं भवती

स्मिन्विश्राम्यंतु जनाश्चिरम् ॥ १०४ ॥ ब्रह्मानंदाभिधे ग्रंथे तृतीयोध्याय ईरितः ॥ अद्वैतानंद एव स्याज्जगन्मिथ्यात्वचिंतया ॥ १०५॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्विद्यारण्यमुनिविरचितो ब्रह्मानंदे अद्वैतानंदो नाम तृतीयोऽध्यायः ॥ छ छ छ

---

त्यर्थः ॥ १०४ ॥ इदानीमध्यायार्थमुपसंहरति ब्रह्मानंदेति ॥ १०५॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थ विद्यारण्यमुनिवर्यकिंकरेण श्री रामकृष्णाख्यविदुषाविरचिता ब्रह्मानंदे अद्वैतानंदव्याख्या समाप्ता ॥१३ ॥

॥ इति ब्रह्मानन्दे अद्वैतानन्दः ॥

---

श्रीगणेशाय नमः ॥ अथ विद्यानंदः ॥ योगेनात्मविवेकेन द्वैतमिथ्यात्वचिंतया ॥ ब्रह्मानंदं पश्यतोथ विद्यानंदो निरूप्यते ॥ १ ॥ विषयानंदवद्विद्यानंदो धीवृत्तिरूपकः ॥ दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥ २ ॥ दुःखाभावश्च कामाप्तिः कृतकृत्योहमित्यसौ ॥ प्राप्तप्राप्योहमित्येव चातुर्विध्यमुदाहृतम् ॥ ३ ॥ ऐहिकं चामुष्मिकंचेत्येवं दुःखं द्विधेरितम् ॥ निवृत्तिमैहिकस्याह बृहदारण्यकं वचः ॥ ४ ॥ आत्मानं चेद्विजानीयादयमस्मीति पुरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥५॥ जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः॥ चित्तादात्म्यात्त्रिभिर्देहैर्जीवः सन् भोक्तृतां व्रजेत् ॥ ६ ॥ परात्मा सच्चिदानंदस्तादात्म्यं नामरूपयोः ॥ गत्वा भोग्यत्वमाप-

---

श्रीगणेशाय नमः ॥ अथ विद्यानंदव्याख्या ॥ इदानीं वृत्तवर्तिष्यमाणयोर्ग्रंथयोः संबंधमाह योगेनेति ॥ १ ॥ विद्यानंदस्वरूपमाह विषयेति तस्यावांतरभेदमाह दुःखाभावेति ॥ २ ॥ चातुर्विध्यमेव दर्शयति दुःखाभावश्चेति ॥ ३ ॥ निवर्तनीयं दुःखं विभजते ऐहिकमिति ऐहिकस्य निवृत्तिर्बृहदारण्यकवाक्येनोच्यत इत्याह निवृत्तिमिति ॥ ४ ॥ तच्छ्रुतिवाक्यं पठति आत्मानमिति ॥ ५ ॥ आत्मनि शोकसंबंधं दर्शयितुं तद्भेदमाह जीवात्मेति आत्मनो जीवत्वे निमित्तमाह चित्तादात्म्यादिति चैतन्यस्य स्थूलसूक्ष्मकारणरूपैस्त्रिभिः शरीरैस्तादात्म्यभ्रमे सति चितो भोक्तृत्वं भवति स भोक्ता जीव इत्युच्यते ॥ ६ ॥ इदानीं परमात्मनः स्वरूपमाह परात्मेति तस्य भोग्यरूपत्वापत्तिप्रकारमाह तादात्म्यमिति

भोगा युगपत्क्रमवर्जिताः ॥ २० ॥ युवा रूपी च विद्यावान्नीरोगो दृढचित्तवान् ॥ सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन् ॥ २१ ॥ सर्वैर्मानुष्यकैर्भोगैः संपन्नस्तृप्तभूमिपः ॥ यमानंदमवाप्नोति ब्रह्मविच्च तमश्नुते ॥ २२ ॥ मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतः समा ॥ भोगान्निष्कामतैकस्य परस्यापि विवेकतः ॥ २३ ॥ श्रोत्रियत्वाद्वेदशास्त्रैर्भोगदोषानवेक्षते ॥ राजा बृहद्रथो दोषांस्तान् गाथाभिरुदाहरत् ॥ २४ ॥ देहदोषांश्चित्तदोषान् भोग्यदोषाननेकशः ॥ शुना वांते पायसे नो कामस्तद्वद्विवेकिनः ॥ २५ ॥ निष्कामत्वे समेऽप्यत्र राज्ञः साधनसंचये ॥ दुःखमासीद्भाविनाशादतिभीरनुवर्तते ॥ २६ ॥ नोभयं श्रोत्रियस्यातस्तदानंदोऽधिकोऽन्यतः ॥ गंधर्वानंद आशास्ति राज्ञो

---

र्थः ॥ २० ॥ इदानीं तैत्तिरीयकबृहदारण्यकवाक्यं संक्षिप्यार्थतः पठति युवेति ॥ २१ ॥ ननु सार्वभौमादिहिरण्यगर्भांतानां जीवनिष्ठानामानंदानां कथं ज्ञानिनि संभव इत्याशंक्य सर्वेषामानंदानां ज्ञानिनावगतब्रह्मांशत्वात्संभव इत्याह सर्वैरिति ॥ २२ ॥ ननु सार्वभौमश्रोत्रिययोर्विषयप्राप्तिसाम्याभावात्कथमानंदसाम्यमित्याशंक्य नैरपेक्ष्यसाम्यात्तृप्तिसाम्यमित्याह मर्त्येति तृप्तिसाम्ये हेतुमाह भोगादिति ॥ २३ ॥ विवेकत इत्युक्तमर्थं विवृणोति श्रोत्रियत्वादिति विषयदोषाः कस्यां शाखायां केन निरूपिता इत्याशंक्य बृहद्रथेन मैत्रायणीयाख्यशाखायां गाथाभिरुक्ता इत्याह राजेति ॥ २४ ॥ विवेकिनः कामानुदये दृष्टांतमाह शुनेति ॥ २५ ॥ सार्वभौमाच्छ्रोत्रियस्याधिक्यमाह निष्कामत्व इति ॥ २६ ॥ सार्वभौमत्वं साधनसाध्यं पश्चाच्च तन्नाशभीतिश्चेति दोषद्वयत्वाच्छ्रोत्रिये तु तदुभयाभावादाधिक्यमित्यर्थः श्रोत्रियस्याधिक्यांतरमाह गंधर्वे-

नास्ति विवेकिनः ॥ २७ ॥ अस्मिन्कल्पे मनुष्यः सन्पुण्यपाकविशेषतः ॥ गंधर्वत्वं समापन्नो मर्त्यगंधर्व उच्यते ॥ २८ ॥ पूर्वकल्पे कृतात्पुण्यात्कल्पादावेव चेद्भवेत् ॥ गंधर्वत्वं तादृशोत्र देवगंधर्व उच्यते ॥ २९ ॥ अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ॥ कल्पादावेव देवत्वं गता आजानदेवताः ॥ ३० ॥ अस्मिन्कल्पेश्वमेधादि कर्म कृत्वा महत्पदम् ॥ अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः ॥ ३१ ॥ यमाग्निमुख्या देवास्युर्ज्ञाताविंद्रबृहस्पती ॥ प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः ॥ ३२ ॥ सार्वभौमादिसूत्रांता उत्तरोत्तरकामिनः अवाङ्मनसगम्योयमात्मानंदस्ततः परः ॥ ३३ ॥ तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः ॥ निस्पृहस्तेन सर्वेषामानंदाः संति तस्य ते ॥३४॥ सर्वकामाप्तिरेषोक्ता यद्वा साक्षिचिदात्मना ॥ स्वदेहवत्सर्वदेहेष्वपि भोगानवेक्षते ॥३५॥

---

ति ॥ २७ ॥ इदानीं गंधर्वानंदे द्वैविध्यं दर्शयितुं श्लोकद्वयेन गंधर्वभेदमाह अस्मिन्निति ॥ २८ ॥ पूर्वेति ॥ २९ ॥ चिरलोकपित्रानंदप्रदर्शनाय चिरलोकपितॄनाह अग्निष्वात्तादय इति देवानंदत्रैविध्यज्ञानाय देवभेदमाह कल्पादाविति ॥ ३० ॥ अस्मिन्कल्प इति ॥ ३१ ॥ यमाग्नीति इंद्रबृहस्पती प्रसिद्धावित्यर्थः ॥ ३२ ॥ सार्वभौमादिसूत्रांतानां श्रोत्रियात् न्यूनत्वद्योतनायाह सार्वभौमादीति ॥ एभ्यः सर्वेभ्योधिकमानंदमाह अवाङ्मनसेति यतोयमात्मानंदः अवाङ्मनसगम्यः अतः एभ्यः सर्वेभ्योधिक इत्यर्थः ॥ ३३ ॥ इदानीं सर्वेषामानंदाः श्रोत्रिये विद्यंते तस्य तेषु निस्पृहत्वादित्याह तैस्तैरिति ॥ ३४ ॥ उपपादितमर्थमुपसंहरति सर्वेति इदानीं पक्षांतरमाह यद्वेति यथा स्वदेहे आनंदाकारबुद्धिसाक्षित्वेनानंदित्वमितरेष्वपि देहेषु तद्वदित्यर्थः ॥ ३५ ॥ ननूक्तप्रकारेणाज्ञस्यापि

अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः॥ यो वेद सोऽश्नुते सर्वान्कामानित्यब्रवीच्छ्रुतिः ॥ ३६ ॥ यद्वा सर्वात्मतां स्वस्य साम्ना गायति सर्वदा ॥ अहमन्नं तथान्नादश्चेति सामत्व्यधीयते ॥ ३७ ॥ दुःखाभावश्च कामाप्तिरुभे त्वेवं निरूपिते कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्षताम् ॥ ३८ ॥ उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम् ॥ तएवात्रानुसंधेयाः श्लोका बुद्धिविशुद्धये ॥ ३९ ॥ ऐहिकामुष्मिककव्रातसिद्ध्यै मुक्तेश्च सिद्धये ॥ बहुकृत्यं पुरास्या भूत्तत्सर्वमधुना कृतम् ॥ ४० ॥ तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ॥ अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ ४१ ॥ दुःखिनोऽज्ञाः संसरंतु कामं पुत्राद्यपेक्षया ॥ परमानंदपूर्णोऽहं संसरामि किमिच्छया ॥ ४२ ॥ अनुतिष्ठंतु कर्माणि परलोकयियासवः ॥ सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ ४३ ॥ व्याचक्षतां ते शास्त्राणि वेदानध्यापयंतु वा॥ येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥४४॥ निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च॥ द्रष्टारश्चेत्कल्पयंति किं मे स्यादन्यकल्पनात् ॥ ४५ ॥ गुजापुं-

---

सर्वानंदप्राप्तिरस्तीत्याशंक्य सर्वेषु सर्वबुद्धिसाक्ष्यहमितिज्ञानाभावान्नैवमित्याह अज्ञस्येति उक्तार्थे तैत्तिरीयश्रुतिं प्रमाणयति यो वेदेति गुहायां निहितं ब्रह्म यो वेद सोऽश्नुत इति योजना ॥ ३६ ॥ इदानीं तृतीयप्रकारमाह यद्वेति इमाल्लँलोकान्कामान्निष्कामरूप्यनुसंचरन्नित्यादिनेत्यर्थः ॥ ३७ ॥ अतीतग्रंथेन सिद्धमर्थं संक्षिप्याह दुःखेति ॥ ३८ ॥ अवशिष्टं कृतकृत्यत्वं प्राप्तप्राप्यत्वमित्युभयं तृप्तिदीपे द्रष्टव्यमित्याह तएवेति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

जादि दह्येत नान्यारोपितवन्हिना ॥ नान्यारोपितसंसार-
धर्मानेवमहं भजे ॥ ४६ ॥ शृण्वंत्वज्ञाततत्वास्ते जानन्
कस्माच्छृणोम्यहम् ॥ मन्यंतां संशयापन्ना न मन्येहम-
संशयः ॥ ४७ ॥ विपर्यस्तो निदिध्यासेत्किं ध्यानमवि-
र्यये ॥ देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥४८॥
हं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ॥ विपर्यासं
राभ्यस्तवासनातोवकल्पते ॥ ४९ ॥ आरब्धकर्मणि
णे व्यवहारो निवर्तते ॥ कर्मक्षये त्वसौ नैव शाम्ये-
सहस्रतः ॥ ५० ॥ विरलत्वं व्यवहृतेरिष्टं चेद्ध्यान-
॥ अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ॥
वा समाधिर्वा मनसः स्याद्विकारिणः ॥ ५२ ॥
नुभवरूपस्य को मेत्रानुभवः पृथक् ॥ कृतं कृत्यं
येयं प्राप्तमित्येव निश्चयः ॥ ५३ ॥ व्यवहारो लौ-
वा शास्त्रीयो वान्यथापि वा ॥ ममाकर्तुरलेपस्य
ध्यं प्रवर्तताम् ॥ ५४ ॥ अथ वा कृतकृत्योपि लो-
हकाम्यया ॥ शास्त्रीयेणैव मार्गेण वर्तेहं का मम
। ५५ ॥ देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥
तु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ ५६ ॥ वि-
ायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ॥ साक्ष्यहं
[illegible] ॥ ५७ ॥ कृतकृत्य-

मन्यते सौ निरंतरम् ॥ ५८ ॥ धन्योहं धन्योहं नित्यं स्वात्मानमंजसा वेद्मि ॥ धन्योहं धन्योहं ब्रह्मानंदो विभाति मे स्पष्टम् ॥ ५९ ॥ धन्योहं धन्योहं दुःखं सांसारिकं न वीक्षेद्य ॥ धन्योहं धन्योहं स्वस्याज्ञानं पलायितं क्वापि ॥ ६० ॥ धन्योहं धन्योहं कर्तव्यं मे न विद्यते किंचित् ॥ धन्योहं धन्योहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥६१॥ धन्योहं धन्योहं तृप्तेर्मे कोपमा भवेल्लोके धन्योहं धन्योहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ ६२ अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ॥ अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ६३ ॥ अहो महो शास्त्रमहो गुरुरहो गुरुः ॥ अहो ज्ञानमहो महो सुखमहो सुखम् ॥ ६४ ॥ ब्रह्मानंदाभिधे चतुर्थोध्याय ईरितः ॥ विद्यानंदस्तदुत्पत्तिपर्यंतोभ्यास्यताम् ॥ ६५ ॥ इति पंचदश्यां विद्यानंदो नाम चतुर्थोध्यायः समाप्तः ॥ १४ ॥ ® ® ® ® ®

---

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ इममध्यायमुपसंहरति ब्रह्मानंदाभिध इति ॥ ६५ ॥ इति पंचदश्यां ब्रह्मानंदे विद्यानंदो नाम चतुर्थोऽध्यायः ॥ १४ ॥ ® ® ॥

॥ इति ब्रह्मानन्दे विद्यानन्दः ॥

श्रीगणेशाय नमः ॥ अथ विषयानंदः ॥ अथात्र विषयानंदो ब्रह्मानंदांशरूपभाक् ॥ निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥१॥ एषोस्य परमानंदो योऽखंडैकरसात्मकः ॥ अन्यानि भूतान्येतस्य मात्रामेवोपभुंजते ॥ २ ॥ शांता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ॥ वैराग्यं क्षांतिरौदार्यमित्याद्याः शांतवृत्तयः ॥ ३ ॥ तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ॥ संमोहोभयमित्याद्याः कथिता मूढवृत्तयः ॥ ४ ॥ वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ॥ प्रतिबिंबति शांतासु सुखं च प्रतिबिंबति ॥ ५ ॥ रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ॥ उपमा सूर्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥ एक एव हि

---

श्रीगणेशाय नमः ॥ पंचमाध्यायस्य प्रतिपाद्यमर्थमाह अथेति ननु विषयानंदस्य लौकिकत्वात् मोक्षशास्त्रे निरूपणमनुपपन्नमित्याशंक्य तस्य [illegible]ककप्रसिद्धत्वेपि ब्रह्मानंदैकदेशत्वेन ब्रह्मज्ञानोपयोगित्वाद्युक्तमित्याह [illegible]रेति ब्रह्मानंदैकदेशत्वे किं प्रमाणमित्याशंक्याह तदंशत्वमिति ॥ १ ॥ तामेव श्रुतिमर्थतः पठति एष इति ॥ २ ॥ इदानीं विषयानंदस्य ब्रह्मानंदलेशत्वप्रदर्शनाय तदुपाधिभूतांतःकरणवृत्तीर्विभजते शांता इति [illegible]ः सात्विक्यो वृत्तयः घोराः राजस्यः मूढास्तामस्यः ता एव शांता[illegible]र्दर्शयति वैराग्यमित्यादिना ॥ ३ ॥ ४ ॥ उदाहृतासु[illegible]पि वृत्तिषु ब्रह्मणश्चिद्रूपत्वं भातीत्याह वृत्तिष्विति शांतासु[illegible] तास्विति चशब्दोनुक्तद्वयसमुच्चयार्थः ॥ ५ ॥ उक्तार्थे श्रु[illegible] पठति रूपमिति तत्रैव व्याससूत्रैकदेशं पठति उपमेति सूत्रस्य पूर्वभागः ॥ ६ ॥ स्वरूपेणैकस्योपाधिसंपर्कान्नान[illegible]

भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ ७ ॥ जले प्रविष्टश्चंद्रोयमस्पष्टः कलुषे जले ॥ विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥ घोरमूढासु मालिन्यात्सुखांशश्च तिरोहितः ॥ ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिंबनम् ॥ ९ ॥ यद्वाऽपि निर्मले नीरे वन्हेरौष्ण्यस्य संक्रमः ॥ न प्रकाशस्य तद्वत्स्याच्चिन्मात्रोद्भूतिरेव च ॥ १० ॥ काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ॥ शांतासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥ वस्तुस्वभावमाश्रित्य व्यवस्था तूभयोः समा ॥ अनुभूत्यनुसारेण कल्प्यते हि नियामकम् ॥ १२ ॥ न घोरासु न मूढासु सुखानुभव ईक्ष्यते ॥ शांतास्वपि क्वचित्कश्चित्सुखातिशय ईक्ष्यताम् ॥ १३ ॥ गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ॥ राजसस्यास्य कामस्य

---

ति एक एवेति ॥ ७ ॥ ननु निरवयवस्य ब्रह्मणः क्व चिच्चिन्मात्रभानमितरत्र चिदानंदभानमित्येवं विभागकरणमनुपपन्नमित्याशंक्य चंद्रदृष्टांतेन परिहरति जले प्रविष्ट इति उक्तमर्थं दार्ष्टांतिके योजयति तद्व[illegible] ॥ ८ ॥ तदेवोपपादयति घोरेति ॥ ९ ॥ ननु चंद्रोपाधेरुदकस्य द्वै[illegible]ध्यादंशभानमुपपन्नं प्रकृते तूपाधिभूतस्यांतःकरणस्यैकत्वादेकांशभानमनुपपन्नमित्याशंक्य दृष्टांतांतरमाह यद्वापीति ॥ १० ॥ इदानीं शां[illegible]आनंदयोः प्रतीतौ दृष्टांतांतरमाह काष्ठ त्विति ॥ ११ ॥ कुतः कृतेत्याशंक्याह वस्त्विति तत्र किं नियामकमित्याशा[illegible]भूतीति ॥ १२ ॥ अनुभूतिमेव दर्शयति न घोरास्विति शां[illegible]काशोस्ति सोपि क्व चित्कश्चित्सुखातिशयो भवतीत्याह ॥ १३ ॥ पूर्वोक्तघोरमूढवृत्तिषु सुखाभावमेवाभिनीय दर्श-

घोरत्वात्तमसो सुखम् ॥ १४ ॥ सिध्द्येन्नवेत्यस्ति दुःखमसि- द्धौ तद्विवर्द्धते ॥ प्रतिबंधे भवेत् क्रोधो द्वेषो वा प्रतिकूल- त ॥ १५ ॥ अशक्यश्चेत्प्रतीकारो विषादः स्यात्स ताम- सः ॥ क्रोधादिषु महद्दुःखं सुखशंकापि दूरतः ॥ १६ ॥ काम्यलाभे हर्षवृत्तिः शांता तत्र महत्सुखम् ॥ भोगे म- हत्तरं लाभप्रसक्तावीषदेव हि ॥ १७ ॥ महत्तमं विरक्तौ तु विद्यानंदे तदीरितम् ॥ एवं क्षांतौ तथौदार्ये क्रोधलो- भनिवारणात् ॥ १८ ॥ यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिं- बनात् ॥ वृत्तिष्वंतर्मुखास्वस्य निर्विघ्नं प्रतिबिंबनम् ॥ १९ ॥ सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः ॥ मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ २० ॥ सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः ॥ शांतवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थ- मीरितम् ॥ २१ ॥ अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदी- रितौ ॥ आद्येऽध्याये योगचिंता ज्ञानमध्याययोर्द्वयोः

---

याति गृहक्षेत्रेति ॥ १४ ॥ सुखासिद्धौ दुःखं वर्द्धते सुखस्य प्रतिबंधे तु क्रोधो भवति सुखाभावे कारणांतरमाह द्वेषो वेति तत्र प्रतिकूलदुःख- स्य सत्त्वादित्यर्थः ॥ १५ ॥ परिहारस्याशक्यत्वे विषादो भवति तस्यापि तामसत्वान्न तत्र सुखमित्याह अशक्य इति क्रोधादिष्वित्यादयः स्प- ष्टार्थाः ॥ १६ ॥ १७ ॥ १८ ॥ एवं क्षांत्यादीनां सिद्धमित्याह वृत्ति- ष्विति ॥ १९ ॥ इदानीं सर्वत्र ब्रह्मस्वरूपानुभूतिप्रदर्शनाय तत्स्वरूपं स्मारयति सत्तेति मृच्छिलादिषु सन्मात्रमित्यर्थः ॥ २० ॥ घोरमूढयो- र्द्वयोः सत्ताचिती द्वे शांतवृत्तौ सच्चिदानंदाः त्रयोपि व्यक्ताः एवं सप्रपं- चं ब्रह्माभिहितमित्याह मिश्रमिति ॥ २१ ॥ अमिश्रं कुतो ज्ञायत इ- त्याशंक्याह अमिश्रमिति तौ च ज्ञानयोगौ पूर्वमेवोक्तावित्यर्थः कुत्रोक्ता- वित्याशंक्य योगः प्रथमाध्याये उक्त इत्याह आद्य इति समनंतराध्या-

॥ २२ ॥ असत्ता जाड्यदुःखे द्वे मायारूपत्रयं त्विदम् ॥ असत्ता नरशृंगादौ जाड्यं काष्ठशिलादिषु ॥ २३ ॥ घोरमूढधियोर्दुःखमेवं माया विजृंभिता ॥ शांतादिबुद्धिवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्तितम् ॥ २४ ॥ एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत्पुमानसौ ॥ नृशृंगादिमुपेक्षेत शिष्टं ध्यायेद्यथायथम् ॥ ॥ २५ ॥ शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिंतनम् ॥ त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद्विचिंतनम् ॥ २६ ॥ शांतासु सच्चिदानंदांस्त्रीनप्येवं विचिंतयेत् ॥ कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिंताः क्रमादिमाः ॥ २७ ॥ मंदस्य व्यवहारेपि मिश्रब्रह्मणि चिंतनम् ॥ उत्कृष्टं वक्तुमेवात्र विषयानंद ईरितः ॥ २८ ॥ औदादासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम् ॥ चिंतनं वास-

---

ययोर्ज्ञानमुक्तमित्याह ज्ञानमिति ॥ २२ ॥ ननु सच्चिदानंदानां ब्रह्मरूपत्वे मायायाः किं रूपमित्याशंक्याह असत्तेति नृशृंगादावसत्त्वं मृच्छिलादिषु जाड्यमिति विवेकः ॥ २३ ॥ दुःखं कुत्रेत्याशंक्याह घोरमूढेति एवं सर्वत्र माया प्रतिभासत इत्याह एवमिति शांतादिषु वृत्तिषु ब्रह्मणो मिश्रत्वे किं कारणमित्यत आह शांतादीति ॥ २४ ॥ एतदभियानं किमर्थमित्याशंक्य ब्रह्मध्यानार्थमित्याह एवमिति नृशृंगादिमुपेक्ष्यान्यत्र ब्रह्मध्यानं कर्तव्यमित्याह नृशृंगादिमिति ॥ २५ ॥ अन्यत्रेत्युक्तं कुत्र कथं ध्येयमित्यत आह शिलादाविति घोरमूढबुद्धिषु दुःखं परित्यज्य सच्चिद्रूपयोश्चिंतनं कर्तव्यमित्याह त्यक्त्वेति ॥ २६ ॥ सात्त्विकवृत्तिषु सच्चिदानंदास्त्रयोपि ध्येया इत्याह शांतास्विति एषां ध्यानानां किं साम्यं नेत्याह कनिष्ठेति ॥ २७ ॥ इदानीं निर्गुणब्रह्मध्यानेऽनधिकारिणोऽनुग्रहाय मिश्रब्रह्मध्यानेऽधिकार इत्यभिप्रायेणाह मंदस्येति ॥ २८ ॥ एवं सवृत्तिकं ध्यानत्रयमुक्त्वाऽवृत्तिकं ध्यानमाह औदासीन्ये त्विति

नानंदे ध्यानमुक्तं चतुर्विधम् ॥ २९ ॥ न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु ॥ ध्यानेनैकाग्र्यमापन्ने चित्ते विद्या स्थिरीभवेत् ॥ ३० ॥ विद्यायां सच्चिदानंदा अखंडैकरसात्मताम् ॥ प्राप्य भांति न भेदेन भेदकोपाधिवर्जनात् ॥ ३१ ॥ शांता घोराः शिलाद्याश्च भेदकोपाधयो मताः ॥ योगाद्विवेकतो वैषामुपाधीनामपाकृतिः ॥३२॥ निरुपाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे ॥ अद्वैते त्रिपुटी नास्ति भूमानंदोत उच्यते ॥ ३३ ॥ ब्रह्मानंदाभिधे ग्रंथे पंचमोध्याय ईरितः ॥ विषयानंद एतेन द्वारेणांतः प्रविश्यताम् ॥ ३४ ॥ प्रीयाद्धरिर्हरोनेन ब्रह्मानंदेन सर्वदा ॥ पायाच्च प्राणिनः सर्वान् स्वाश्रितांश्छुद्धमानसान् ॥३५॥ इति श्रीविद्या० पंच० ब्रह्मानंदे विषयानंदः ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ शुभं भवतु ॥ समाप्तोऽयं ग्रंथः ॥ ७ ॥

---

एभ्यो ध्यानेभ्योऽधिकमित्यर्थः उक्तं निगमयति ध्यानामिति ॥ २९ ॥ अयं ध्यानावांतरभेदः किं नेत्याह न ध्यानमिति तर्हि किमेतदित्याशंक्याह ब्रह्मविद्येति इयं ब्रह्मविद्या कथमुत्पन्नेत्याशंक्याह ध्यानेनेति ॥३०॥ अस्या विद्यात्वे हेतुमाह विद्यायामिति ॥३१॥ भेदकोपाधिवर्जनादित्युक्तं तानेव भेदकोपाधीनाह शांता इति एतेषां परिहारः केनोपायेनेत्याशंक्याह योगादिति ॥ ३२ ॥ फलितमाह निरुपाधीति त्रिपुटीभानाभावाद् भूमानंद इत्यच्यत इत्यर्थः ॥३३॥ग्रंथमुपसंहरति ब्रह्मानंदेति स्पष्टत्वान्न व्याख्यायते ॥३४॥ प्रीयादिति ॥३५॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचिता ब्रह्मानंदांतर्गतविषयानंदव्याख्या समाप्ता ॥ १५ ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ शुभं भवतु ॥ शुभमस्तु ७ ७